# महानिर्वाणतन्त्रम्।

कुलावधूत श्रीमद्धरिहरानन्दनाथभारती-

विरचितया टीकया सहितम्।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम्

प्रकाशितञ्च।

कलिकाता-राजधान्याम्

नूतन वाल्मीकियन्त्रे

मुद्रितम्।




१८८४

# महानिर्वाणतन्त्रम् ।

## प्रथमोल्लासः ।

गिरीन्द्रशिखरे रम्ये नानारत्नोपशोभिते ।
नानावृक्षलताकीर्णे नानापक्षिरवैर्युते ॥ १ ॥

कृत्वा षडाम्नायमनेकशक्तिः सदाशिवः प्रेरित आदिशक्त्या ।
जगाद सेतुं कुलशास्त्रराशेर्निर्वाणतन्त्रं महता समस्तम् ॥
स्मारं स्मारं परब्रह्म नामं नामं गुरोः पदम् ।
निरपेक्षं वचः शम्भोर्विवृणोमि यथामति ॥

वेदादिबोधितसमस्तपुण्यकर्म्मोच्छेदकातिनिन्दितानन्तपापकर्मप्रवर्त्तक-कलियुगागमने सति परमात्मचिन्तनाद्यननुरक्तानां नानाविधपापकर्म्म-प्रसक्तानां नराणां कथं निस्तारो भविष्यतीति सञ्चिन्तयन्ती पार्वती कैलासशिखरे तिष्ठन्तं कारुण्यवन्तं सदाशिवं प्रति तेषां निस्तारोपाय-मप्राक्षीदेतत्तदेवाह—गिरीन्द्रशिखर इत्यादिभिः तत्र तस्मिन् गिरीन्द्रशिखरे पर्वताधिराजस्य कैलासस्य शृङ्गे स्थितं मौनधरं मौनिनं शिवं वीक्ष्य विलोक्य लोकानां हितकाम्यया जनानां हितेच्छया पार्वती देवी विनयावनता सती शिवमप्राक्षीदित्येकादश-श्लोकस्थितैः पदैरन्वयः। मौनधरमित्यनेन कथानवसरो दर्शितः रम्ये इत्यादीनि सप्तम्यन्तानि त्रयोदशपदानि गिरीन्द्रशिखरे इत्यस्य विशेषणानि चराचरजगद्गुरुमित्यादीनि द्वितीयान्तानि पदानि ह

सर्वर्त्तुकुसुमामोदमोदिते सुमनोहरे ।
शैत्यसौगन्ध्यमान्द्याढ्यै मरुद्भिरुपवीजिते ॥ २ ॥
अप्सरोगणसङ्गीतकलध्वनिनिनादिते ।
स्थिरच्छायद्रुमच्छायाच्छादिते स्निग्धमञ्जुले ॥ ३ ॥
मत्तकोकिलसन्दोहसङ्घुष्टविपिनान्तरे ।
सर्वदा स्वगणैः सार्द्धमृतुराजनिषेविते ॥ ४ ॥
सिद्धचारणगन्धर्वगाणपत्यगणैर्वृते ।
तत्र मौनधरं देवं चराचरजगद्गुरुम् ॥ ५ ॥

शिवमित्यस्येति बोद्धव्यम् । रम्यते क्रीड्यते सिद्धचारणादिभिर्यत्र तद्रम्यं तस्मिन् पोरदुपधादित्यधिकरणे यत् । नानारत्नोपशोभिते अनेकैः पद्मरागमरकतादिभीरत्नैर्विराजिते नानावृक्षलताकीर्णे अनेकैर्वृक्षैरनेकाभिर्लताभिश्च व्याप्ते नानापक्षिरवैर्युते नानाविधानां पक्षिणां शब्दैर्युक्ते ॥ १ ॥

सर्वर्त्तुकुसुमामोदमोदिते सकलवसन्ताद्यृतुसम्बन्धिपुष्पसम्बन्धिभिरतिमनोहारिभिर्गन्धैः सुरभीकृते अतएव सुमनोहरे अतिमनोहारके शैत्येन सौगन्ध्येन मान्द्येन चाढ्यै युक्तै मरुद्भिर्वायुभिरुपवीजिते ॥ २ ॥

अप्सरोगणेत्यादि । अप्सरसां गणैः समूहैः सङ्गीतो यः कलध्वनि गम्भीरः शब्दस्तेन निनादिते शब्दिते स्थिरा अचञ्चला छाया येषां द्रुमाणां तेषां छायाभिश्छादिते अत्र स्निग्धं चिक्कणञ्च तन्मञ्जुलं सुन्दरञ्चेति स्निग्धमञ्जुलं तस्मिन् ॥ ३ ॥

मत्तेत्यादि । मत्तानां कोकिलानां सन्दोहेन समूहेन सङ्घुष्टं संशब्दितं विपिनान्तरं वनमध्यं यस्मिन् तस्मिन् । सर्वदा सर्वस्मिन् काले स्वगणैर्भ्रमरादिभिः सार्द्धमृतुराजेन वसन्तेन निषेविते ॥ ४ ॥

सिद्धेत्यादि । देवयोनिभिः सिद्धैः चारणैर्गन्धर्वैः गाणपत्यगणैर्गणपतिसम्बन्धिभिर्गणैश्च वृते तत्र देवं दीप्तिमन्तं चराचरजगद्-

सदाशिवं सदानन्दं करुणामृतसागरम्।
कर्पूरकुन्दधवलं शुद्धसत्त्वमयं विभुम् ॥ ६ ॥
दिगम्बरं दीननाथं योगीन्द्रं योगिवल्लभम्।
गङ्गाशीकरसंसिक्तजटामण्डलमण्डितम् ॥ ७ ॥
विभूतिभूषितं शान्तं व्यालमालं कपालिनम्।
त्रिलोचनं त्रिलोकेशं त्रिशूलवरधारिणम् ॥ ८ ॥
आशुतोषं ज्ञानमयं कैवल्यफलदायकम्।

गुरुं परेषां ब्रह्मादी[illegible]राणां चराचराणाञ्च जगतां पितरम् ॥ ९ ॥

सदेत्यादि। सदा सर्वदा शिवं कल्याणं यस्य यस्माद्वा तं, सदा आनन्दः सत् सर्वदास्थायी वा आनन्दो यस्य तं, सतः साधून् वा आनन्दयति यः तं, करुणामृतसागरं दयारूपस्य पीयूषस्य समुद्रं कर्पूरकुन्दधवलं कर्पूरकुन्दवत् शुभ्रं, शुद्धसत्त्वमयं विमलसत्त्वगुणप्रधानं, विभुं व्यापकम् ॥ ६ ॥

दिगित्यादि। दिगेवाम्बरं वस्त्रं यस्य तं वस्त्ररहितमित्यर्थः दीननाथं दरिद्राणां जनानां भर्त्तारं योगीन्द्रं योगः परमात्मचिन्तनं तद्युक्तेषु श्रेष्ठं योगिवल्लभं योगिनान्दयितं योगिनो वल्लभाः प्रिया यस्येति वा तं गङ्गायाः शीकरैरितस्ततो विक्षिप्तैरम्बुकणैः संसिक्तेन जटामण्डलेन जटासमूहेन मण्डितम् ॥ ७ ॥

विभूतीत्यादि। विभूतिभूषितं भस्मभिरलङ्कृतं शान्तं संयतान्तःकरणं व्यालाः सर्पा एव माला यस्य तं कपालिनं नृकपालधारिणं लोचते [illegible] वैतानि लोचनानि नेत्राणि तानि त्रीणि यस्य तं त्रिलोकेशं त्रयाणां लोकानामधिष्ठातारं त्रिशूलवरधारिणं त्रिशूलेषु वरं त्रिशूलस्य वरस्य वा धर्तुं शीलं यस्येति त्रिशूलवरधारी तम् ॥ ८ ॥

आश्वित्यादि। आशु शीघ्रं तोषस्तुष्टिर्यस्य तं ज्ञानमयं ज्ञानं तत्त्वतः समस्तपदार्थावबोधस्तदात्मकं, कैवल्यफलदायकं निर्वाणरूपस्य

निर्विकल्पं निरातङ्कं निर्विशेषं निरञ्जनम् ॥ ९ ॥
सर्व्वेषां हितकर्त्तारं देवदेवं निरामयम् ।
प्रसन्नवदनं वीक्ष्य लोकानां हितकाम्यया ।
विनयावनता देवी पार्वती शिवमब्रवीत् ॥ १० ॥

श्रीपार्वत्युवाच ।

देवदेव ! जगन्नाथ ! मन्नाथ ! करुणानिधे ! ।
त्वदधीनास्मि देवेश ! तवाज्ञाकारिणी सदा ॥ ११ ॥
विनाज्ञया मया किञ्चिद्भाषितुं नैव शक्यते ।
कृपावलेशो मयि चेत् स्नेहोऽस्ति यदि मां प्रति ॥१२॥
तदा निवेद्यते किञ्चिन्मनसा यद्विचारितम् ।
त्वदन्यः संशयस्यास्य कस्त्रिलोक्यां महेश्वर ! ।
छेत्ता भवितुमर्हो वा सर्वज्ञः सर्वशास्त्रवित् ॥ १३ ॥

फलस्य दातारं निर्विकल्पं निर्गतो विकल्पो विविधा कल्पना यस्मात्तं निरातङ्कं निर्गते आतङ्के तापशङ्के यस्मात्तं निर्विशेषं नानाविधभेदरहितं निरञ्जनं अविद्याप्रत्ययम् ॥ ९ ॥

सर्वेषामित्यादि । निरामयं निर्गत आमयो व्याधिर्यस्मात्तम् ॥१०॥

पार्वती शिवं प्रति किमब्रवीदित्यपेक्षायामाह,—श्रीपार्वत्युवाच ।
देवदेवेत्यादि । हे देवेश ! देवानामिन्द्रादीनामपि नियन्तः ! अतोऽहं त्वदधीना तव वशीभूता सदा सर्वस्मिन् काले तवाज्ञाकारिणी चास्मि अतस्तवाज्ञया विना किञ्चिदपि भाषितुं कथयितुं नैव मया शक्यते ॥ ११ ॥ १२ ॥

त्वदन्य इति । त्वत्तोऽन्यस्त्वदन्य इति पञ्चमीतत्पुरुषः त्वदिति पञ्चम्यन्तं भिन्नं वा पदम् ॥ १३ ॥

श्रीसदाशिव उवाच ।

किमुच्यते महाप्राज्ञे ! कथ्यतां प्राणवल्लभे ! ।
यदकथ्यं गणेशेऽपि स्कन्दे सेनापतावपि ॥ १४ ॥
तवाग्रे कथयिष्यामि सुगोप्यमपि यद्भवेत् ।
किमस्ति त्रिषु लोकेषु गोपनीयं तवाग्रतः ॥ १५ ॥
मम रूपासि देवि ! त्वं न भेदोऽस्ति त्वया मम ।
सर्वज्ञा किं न जानासि त्वनभिज्ञेव पृच्छसि ॥ १६ ॥
इति देववचः श्रुत्वा पार्वती हृष्टमानसा ।
विनयावनता साध्वी परिपप्रच्छ शङ्करम् ॥ १७ ॥

श्रीआद्योवाच ।

भगवन् ! सर्वभूतेश ! सर्वधर्मविदां वर ! ।
कृपावता भगवता ब्रह्मान्तर्यामिना पुरा ॥ १८ ॥

पार्वत्या प्रष्टव्यमर्थमभिजिज्ञासुः श्रीसदाशिव उवाच । किमुच्यते इत्यादि । स्कन्दे कार्त्तिकेये गणेशेऽपि सेनापतावपीति व्याहरता भगवता महादेवेन तयोर्महागौरवेण महतिप्रियत्वादतिगुह्यस्याप्यर्थस्य बलात्कारेणाप्यभिधायने योग्यत्वमस्तीति सूचितम् ॥ १४ ॥

तवाग्रतस्त्वदग्रे गोपनीयं त्रिष्वपि लोकेषु किं वस्त्वस्ति अपितु न किञ्चिदित्यर्थः । अग्रे इत्यग्रतः आद्यादिभ्य उपसंख्यानमिति सप्तम्यन्तात् स्वार्थे तसिः ॥ १५ ॥

मम रूपेत्यादि । रूप्यते रूपक्रिया विशिष्टा विधीयते इति रूपा कर्मण्यच् मम रूपा मद्रूपशालिनीत्यर्थः । मत्स्वरूपेति पाठे तु मया सह समानमेकं रूपं यस्याः सा अभिन्नेव अविदुषी इव १६॥१७

पार्वती शङ्करं किं परिपप्रच्छेत्याकाङ्क्षायामाह,—आद्योवाच भगवन्नित्यादि । हे भगवन् ! ऐश्वर्यादिशालिन् ! सर्वभूतेश ! सर्वेषां भूतानां नियन्तः ! यथा श्रुतिस्मृतिसंहिताद्युपदेशेन सत्यत्रेतादौ

प्रकाशिताश्चतुर्वेदाः सर्वधर्मोपबृंहिताः ।
वर्णाश्रमादिनियमा यत्र चैव प्रतिष्ठिताः ॥ १९ ॥
तदुक्तयोगयज्ञाद्यैः कर्मभिर्भुवि मानवाः ।
देवान् पितॄन् प्रीणयन्तः पुण्यशीलाः कृते युगे ॥ २० ॥
स्वाध्यायध्यानतपसा दयादानैर्जितेन्द्रियाः ।
महाबला महावीर्य्या महासत्त्वपराक्रमाः ॥ २१ ॥
देवायतनगा मर्त्त्या देवकल्पा दृढव्रताः ।
सत्यधर्मपराः सर्वे साधवः सत्यवादिनः ॥ २२ ॥

भवता लोका निस्तारिता एवं दुष्टकर्मप्रवर्त्तके पापिनि कलावपि केनाप्युपायेन दयावता भवतैव मनुष्या उद्धर्त्तव्या इत्याशयेनाह,—कृपावतेत्यादि ॥ १८ ॥

प्रकाशिता इत्यादि । सर्वे धर्मा उपबृंहिता वर्द्धिता येषु ते ॥१९

तदुक्तेत्यादि । कृते युगे सत्ययुगे भुवि पृथिव्यां पुण्यशीला मानवाः तदुक्तयोगयज्ञाद्यैर्वेदभाषितैर्निस्तारोपायभूतैर्यज्ञादिभिः कर्मभिर्देवान् पितॄंश्च प्रीणयन्तस्तर्पयन्त आसन्निति पञ्चमश्लोकस्थितेन पदेनान्वयः ॥ २० ॥

स्वाध्यायेत्यादि । स्वाध्यायो वेदाध्ययनं ध्यानं परमात्मचिन्तनं तपः कृच्छ्रचान्द्रायणादि दया निष्कारणपरदुःखनाशेच्छा दानं न्यायार्जितस्य धनादेः पात्रेऽर्पणं तैः सर्वैर्विशिष्टा मानवा आसन् । जितेन्द्रिया इत्यादीनां सर्वेषां जसन्तानां पदानामासन्नित्यनेनान्वयो विधातव्यः । जितेन्द्रिया वशीकृतचक्षुरादयः महाबला महासामर्थ्याः, स्थौल्यसामर्थ्यसैन्येषु बलमित्यमरः । महावीर्य्या महाप्रभावाः महातेजसो वा, वीर्य्यं प्रभावे शुक्रे च तेजःसामर्थ्ययोरपीति मेदिनी । महान्तौ सत्त्वपराक्रमौ व्यवसायशौर्य्ये येषान्ते महासत्त्वपराक्रमाः ॥२१

देवायतनेत्यादि । देवायतनगा देवतामन्दिरगामिनः मर्त्त्या मरणशीला अपि देवकल्पा ईषदूना देवाः देवतुल्या इत्यर्थः दृढं व्रतं

राजानः सत्यसङ्कल्पाः प्रजापालनतत्पराः ।
मातृवत् परयोषित्सु पुत्रवत् परसूनुषु ॥ २३ ॥
लोष्टवत् परवित्तेषु पश्यन्तो मानवास्तदा ।
आसन् स्वधर्मनिरताः सदा सन्मार्गवर्त्तिनः ॥ २४ ॥
न मिथ्याभाषिणः केचित् न प्रमादरताः क्वचित् ।
न चौरा न परद्रोहकारका न दुराशयाः ॥ २५ ॥
न मत्सरा नातिरुष्टा नातिलुब्धा न कामुकाः ।
सदन्तःकरणाः सर्वे सर्वदानन्दमानसाः ॥ २६ ॥
भूमयः सर्वशस्याढ्याः पर्ज्जन्याः कालवर्षिणः ।
गावोऽपि दुग्धसम्पन्नाः पादपाः फलशालिनः ॥ २७ ॥
नाकालमृत्युस्तत्रासीत् न दुर्भिक्षं न वा रुजः ।
हृष्टाः पुष्टाः सदारोग्यास्तेजोरूपगुणान्विताः *॥२८॥

नियमो येषान्ते साधवः स्वस्वधर्मवर्त्तिनः सत्यवादिनः सत्यं यथार्थाभिधानं तस्य वक्तारः ॥ २२ ॥

राजान इत्यादि । सत्यः सङ्कल्पो मानसं कर्म येषान्ते परयोषित्सु परस्त्रीषु परसूनुषु अन्यपुत्रेषु ॥ २३ ॥ २४ ॥

नेत्यादि । न प्रमादरताः सावधाना इत्यर्थः न दुराशया न दुष्टाभिप्रायाः ॥ २५ ॥

नेत्यादि । न मत्सरा नान्यशुभद्वेषिणः नातिरुष्टा न बहुक्रोधभाजिनः सर्वदा आनन्दो यत्र एवम्भूतं मानसं हृदयं येषान्ते ॥ २६ ॥

पर्ज्जन्या मेघाः ॥ २७ ॥

---

* तेजोरूपसमन्विता इति वा पाठः ।

स्त्रियो न व्यभिचारिण्यः पतिभक्तिपरायणाः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः स्वाचारवर्त्तिनः ॥२९॥
स्वैः स्वैर्धर्म्मैर्यजन्तस्ते निस्तारपदवीं गताः ।
कृते व्यतीते त्रेतायां दृष्ट्वा धर्म्मव्यतिक्रमम् ॥ ३० ॥
वेदोक्तकर्म्मभिर्मर्त्या न शक्ताः स्वेष्टसाधने ।
बहुक्लेशकरं कर्म्म वैदिकं भूरिसाधनम् ॥ ३१ ॥
कर्त्तुं न योग्या मनुजाश्चिन्ताव्याकुलमानसाः ।
त्यक्तुं कर्त्तुं न चार्हन्ति सदा कातरचेतसः ॥३२॥
वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि भूतले ।
तदा त्वं प्रकटीकृत्य तपःस्वाध्यायदुर्बलान् ॥ ३३ ॥

नेत्यादि । तत्र कृतयुगे रुजो रोगाः सदा आरोग्यं येषान्ते । तेजोरूपगुणान्विताः तेजसा रूपेण अन्यैश्च गुणैर्युक्ताः ॥ २८ ॥ २९ ॥

स्वैरित्यादि । यजन्तः परमेश्वरमर्च्चयन्तः । कृते इत्यादि । कृते सत्ययुगे व्यतीते विगते सति त्रेतायां चायातायां सत्यां यदा वेदोक्तकर्म्मभिर्मर्त्या मनुष्याः स्वेष्टसाधने आत्मनोऽभीष्टसम्पादने शक्ताः समर्था न बभूवुः । यदा च भूरीणि बहूनि साधनानि यस्य तद् भूरिसाधनम् । अतएव बहुक्लेशकरं बहूनां क्लेशानां जनकम् । अथवा बहुभिः क्लेशैः क्रियते निष्पाद्यते यत्तद् बहुक्लेशकरम् । बाहुलकात् कर्म्मण्यच् । अतएवेदृशं वैदिकं कर्म्म कर्त्तुं चिन्ताव्याकुलमानसा मनुजा मनुष्या योग्या न बभूवुः । यदा च सदा कातरचेतसः सर्व्वदा अधीरस्वान्ता मनुजा वैदिककर्म्मत्यागे नानादोषस्मरणात् तत् कर्म्म त्यक्तुं बहुक्लेशसाध्यत्वात् कर्त्तुञ्च नार्हन्ति स्म तदा धर्म्मव्यतिक्रमं धर्म्मोल्लङ्घनं धर्म्मविपर्य्ययं वा दृष्ट्वा स्मृतिरूपाणि वेदार्थयुक्तशास्त्राणि भूतले

लोकानतारयः पापात् दुःखशोकामयप्रदात्।
त्वां विना कोऽस्ति जीवानां घोरसंसारसागरे ॥ ३४ ॥
भर्त्ता पाता समुद्धर्त्ता पितृवत् प्रियकृत् प्रभुः।
ततोऽपि द्वापरे प्राप्ते स्मृत्युक्तसुकृतोज्झिते ॥ ३५ ॥
धर्मार्द्धलोपे मनुजे आधिव्याधिसमाकुले।
संहिताद्युपदेशेन त्वयैवोद्धारिता नराः ॥ ३६ ॥
आयाते पापिनि कलौ सर्वधर्मविलोपिनि।
दुराचारे दुष्प्रपञ्चे दुष्टकर्मप्रवर्त्तके ॥ ३७ ॥
न वेदाः प्रभवस्तत्र * स्मृतीनां स्मरणं कुतः।
नानेतिहासयुक्तानां नानामार्गप्रदर्शिनाम् ॥ ३८ ॥

प्रकटीकृत्य तपःस्वाध्यायदुर्बलान् लोकान् जनान् पापात् त्वमतारयः तारितवानित्यन्वयः ॥ २० । २१ । २२ । २३ ॥

त्वामिति। यतस्त्वमेवम्भूतोऽतस्त्वां विनेत्येवं योजनीयम्। घोरसंसारसागरे भयानकसंसारसमुद्रे प्रभुर्जगत्पतिः ॥ २४ ॥

तत इत्यादि। स्मृत्युक्तसुकृतोज्झिते स्मृतिभिरुक्तानि यानि सुकृतानि पुण्यानि तैरुज्झिते त्यक्ते धर्मार्द्धलोपे धर्मस्यार्द्धं लुप्यतीति धर्मार्द्धलोपस्तस्मिन् स्मृत्युक्तसुकृतोज्झिते इति धर्मार्द्धलोपे इति च द्वापरे इत्यस्य विशेषणे मनुजे इत्यस्य वेति बोध्यम्। आधिर्मानसी व्यथा ॥ २५ । २६ ॥

आयाते इत्यादि। दुराचारे दुष्ट आचारो यत्र तस्मिन् ॥ २७ ॥

---

* प्रभवस्तत्र इति वा पाठः।

बहुलानां पुराणानां विनाशो भविता विभो ।
तदा लोका भविष्यन्ति धर्मकर्मबहिर्मुखाः ॥ ३९ ॥
उच्छृङ्खला मदोन्मत्ताः पापकर्मरताः सदा ।
कामुका लोलुपाः क्रूरा निष्ठुरा दुर्मुखाः शठाः ॥ ४० ॥
स्वल्पायुर्मन्दमतयो रोगशोकसमाकुलाः ।
निःश्रीका निर्बला नीचा नीचाचारपरायणाः ॥ ४१ ॥
नीचसंसर्गनिरताः परवित्तापहारकाः ।
परनिन्दापरद्रोहपरिवादपराः खलाः ॥ ४२ ॥
परस्त्रीहरणे पापशङ्काभयविवर्जिताः ।
निर्धना मलिना दीना दरिद्राश्चिररोगिणः ॥ ४३ ॥
विप्राः शूद्रसमाचाराः सन्ध्यावन्दनवर्जिताः ।
अयाज्ययाजका लुब्धा दुर्वृत्ताः पापकारिणः ॥ ४४ ॥

नेत्यादि । प्रभवः समर्थाः ॥ ३८ । ३९ ॥

उच्छृङ्खला इत्यादि । उद्गतं शृङ्खलं वेदादिरूपनियमो येषां ते उच्छृङ्खलाः बन्धनरहिता इत्यर्थः । लोलुपाः अतिलुब्धाः क्रूराः निर्दयाः निष्ठुराः परुषवादिनः दुर्मुखाः अवद्यमुखाः शठाः वञ्चकाः ॥ ४० ॥

स्वल्पेत्यादि । स्वल्पायुषश्च ते मन्दमतयश्चेति कर्मधारयः ॥ ४१ ॥ खला दुर्जनाः ॥ ४२ ॥

परस्त्रीत्यादि । परस्त्रीहरणे पापशङ्काभयविवर्जिताः परस्त्रीहरणनिमित्तकपापउद्वेगसाध्वसरहिताः मलिनाः मलदूषिताः दीनाः खेदवन्तः दरिद्राः दुर्गतिमन्तः ॥ ४३ ॥ ४४ ॥

असत्यभाषिणो मूर्खा दाम्भिका दुष्टप्रवञ्चकाः ।
कन्याविक्रयिणो व्रात्यास्तपोव्रतपराङ्मुखाः ॥ ४५ ॥
लोकप्रतारणार्थाय जपपूजापरायणाः ।
पाषण्डाः पण्डितम्मन्याः श्रद्धाभक्तिविवर्जिताः ॥ ४६ ॥
कदाहाराः कदाचारा भृतकाः शूद्रसेवकाः ।
शूद्रान्नभोजिनः क्रूरा वृषलीरतिकामुकाः ॥ ४७ ॥
दास्यन्ति धनलोभेन स्वदारान्नीचजातिषु ।
ब्राह्मण्यचिह्नमेतावत् केवलं सूत्रधारणम् ॥ ४८ ॥
नैव पानादिनियमो भक्ष्याभक्ष्यविवेचनम् ।
धर्मशास्त्रे सदा निन्दा साधुद्रोहो निरन्तरम् ॥ ४९ ॥
सत्कथालापमात्रञ्च न तेषां मनसि क्वचित् ।
त्वया कृतानि तन्त्राणि जीवोद्धारणहेतवे ॥ ५० ॥

असत्येत्यादि । दाम्भिकाः दम्भो धर्मध्वजित्वं तद्वन्तः व्रात्याः षोडशवर्षपर्यन्तमप्यसंस्कृता भ्रष्टगायत्रीका विप्रा भविष्यन्तीति पूर्वेणान्वयः ॥ ४५ ॥

लोकेत्यादि । पाषण्डाः वेदबाह्यः कपटमौञ्ज्यादिव्रतचर्य्याशालिनः श्रद्धाभक्तिविवर्जिताः श्रद्धा वेदादौ दृढ़प्रत्ययः भक्तिः प्रीतिजनकव्यापारः ताभ्यां हीनाः ॥ ४६ ॥

कदाहारा इत्यादि । भृतकाः भरणायत्तजीवनाः अतएव शूद्राणामपि सेवकाः क्रूराः कठिनाः वृषलीरतिकामुकाः शूद्रारतिकाङ्क्षिताः ॥ ४७ ॥ ४८ ॥ ४९ ॥

सत्कथालापमात्रं वेदतन्त्र च शब्दः तु इत्यर्थे ॥ ५० ॥

निगमागमजातानि भुक्तिमुक्तिकराणि च ।
देवीनां यत्र देवानां मन्त्रयन्त्रादिसाधनम् ॥ ५१ ॥
कथिता बहवो न्यासाः सृष्टिस्थित्यादिलक्षणाः ।
बद्धपद्मासनादीनि गदितान्यपि भूरिशः ॥ ५२ ॥
पशुवीरदिव्यभावा देवता मन्त्रसिद्धिदाः ।
शवासनं चितारोहो मुण्डसाधनमेव च ॥ ५३ ॥
लतासाधनकर्माणि त्वयोक्तानि सहस्रशः ।
पशुभावदिव्यभावौ स्वयमेव निवारितौ ॥ ५४ ॥
कलौ न पशुभावोऽस्ति दिव्यभावः कुतो भवेत् ।
पत्रं पुष्पं फलं तोयं स्वयमेवाहरेत् पशुः ॥ ५५ ॥
न शूद्रदर्शनं कुर्य्यात् मनसा न स्त्रियं स्मरेत् ।

निगमेत्यादि । यत्र तन्त्रादिषु सृष्टिस्थित्यादिलक्षणाः सृष्टिस्थित्यादिस्वरूपाः ॥ ५१ ॥

बद्धपद्मेत्यादि । यत्रेत्यनुषज्यते आदिना मुक्तपद्मासनादेः संग्रहः ॥ ५२ ॥

शवासनमिति । अत्रापि यत्रेत्यस्यानुषङ्गः शवासनं मृतशरीरासनम् ॥ ५३ ॥ ५४ ॥

कलौ युगे पशुभावदिव्यभावयोरसत्त्वे हेतुं दर्शयितुं प्रथमतः पशुदिव्ययोर्विधेयानि यानि कर्माणि तानि दर्शयति द्वाभ्याम् । पत्रमित्यादि । आहरेत् आनयेत् ॥ ५५ ॥

दिव्यश्च देवताप्रायः शुद्धान्तःकरणः सदा ॥ ५६ ॥
द्वन्द्वातीतो वीतरागः सर्वभूतसमः क्षमी ।
कलिजानां मनुष्याणां सर्वदाशुद्धचेतसाम् ॥ ५७ ॥
निद्रालस्यप्रसक्तानां भावशुद्धिः कथं भवेत् ।
वीरसाधनकर्माणि पञ्चतत्त्वोदितानि च ॥ ५८ ॥
मद्यं मांसं तथा मत्स्यमुद्रामैथुनमेव च ।
एतानि पञ्चतत्त्वानि त्वया प्रोक्तानि शङ्कर ! ॥ ५९ ॥
कलिजा मानवा लुब्धाः शिश्नोदरपरायणाः ।
लोभात्तत्र पतिष्यन्ति न करिष्यन्ति साधनम् ॥ ६० ॥
इन्द्रियाणां सुखार्थाय पीत्वा च बहुलं मधु ।

नेत्यादि । भवेदित्यध्याहार्य्यम् । देवताप्रायः देवतुल्यः द्वन्द्वातीतः सुखदुःखशीतोष्णादियुगलानि द्वन्द्वानि तान्यतीतोऽतिक्रान्तः तत्सहनशील इत्यर्थः वीतरागः वीतो विशेषेण गतो रागः प्रीतिर्मात्सर्यं वा यस्य यस्माद्वा सः रागोऽनुरागे मात्सर्ये इति कोषः । सर्वभूतसमः सर्वेषु भूतेषु समः रागद्वेषादिशून्यः क्षमी परेणापकारे कृते तस्य प्रत्यपकाराचरणं क्षमा तद्वान् ॥ ५६ ॥

एवं पशुदिव्ययोर्विधेयानि कर्माणि प्रदर्श्येदानीं सर्वदा चञ्चलचित्तानां निद्रालस्यप्रसक्तानां नानाविधदुष्कृतशालिनां पशुदिव्यविधेयकर्मसाधनायोग्यानां कलिजन्मनां मनुष्याणां पशुभावदिव्यभावौ न सिध्यत इति प्रतिपादयितुमाह । कलीत्यादि ॥ ५७ ॥

वीरेत्यादि । हे शङ्कर ! लोककल्याणकर्त्तः पञ्चमद्यादीनि तत्त्वानि उदितान्युक्तानि येषु एवम्भूतानि वीरसाधनकर्माणि मद्यमांसादीनि पञ्चतत्त्वानि च त्वया प्रोक्तानीत्यन्वयः ॥ ५८ । ५९ ॥

तत्र मद्यादिपञ्चतत्त्वेषु ॥ ६० ॥

इन्द्रियाणामिति । बहु प्रचुरम् ॥ ६१ ॥

भविष्यन्ति महीपाला हिताहितविवर्जिताः ॥ ६१ ॥
परस्त्रीधर्षकाः केचिद्दस्यवो बहवो भुवि ।
न करिष्यन्ति ते मर्त्त्याः पापयोनिविवर्जनम् ॥ ६२ ॥
अतिपानादिदोषेण रोगिणो बहवः क्षितौ ।
शक्तिहीना बुद्धिहीना भूत्वा च विकलेन्द्रियाः ॥ ६३ ॥
ह्रदे गर्त्ते प्रान्तरे च प्रासादात् पर्वतादपि ।
पतिष्यन्ति मरिष्यन्ति मनुजा मदविह्वलाः ॥ ६४ ॥
केचिद्विवादयिष्यन्ति गुरुभिः स्वजनैरपि ।
केचिन्मौना मृतप्राया अपरे बहुजल्पकाः ॥ ६५ ॥
अकार्य्यकारिणः क्रूरा धर्म्ममार्गविलोपकाः ।
हिताय यानि कर्म्माणि कथितानि त्वया प्रभो ! ॥ ६६ ॥
मन्ये तानि महादेव ! विपरीतानि मानवे ।
के वा योगं करिष्यन्ति न्यासजातानि केऽपि वा ॥ ६७ ॥
स्तोत्रपाठं यन्त्रलिपिं पुरश्चर्य्यां जगत्पते ! ।
युगधर्म्मप्रभावेण स्वभावेन कलौ नराः ॥ ६८ ॥
भविष्यन्त्यतिदुर्वृत्ताः सर्व्वथा पापकारिणः ।
तेषामुपायं दीनेश ! कृपया कथय प्रभो ! ॥ ६९ ॥

परस्त्रीत्यादि । परस्त्रीधर्षकाः परदाराभिमर्षकाः । दस्यवः चौराः ॥ ६२ ॥

ह्रदेत्यादि । ह्रदे अगाधजलाधारे प्रान्तरे पानीयदूरे छायावत्तर्वादिशून्येऽध्वनि ॥ ६३ । ६४ ॥

गुरुभिः पित्रादिभिः ॥ ६५ ॥

मौनाः न किञ्चिदपि व्याहरन्तः योगं [illegible] कुण्डलिन्या [illegible] ब्रह्मारोपणम्, पुरश्चर्य्यां पुरश्चरणम् ॥ ६६ । ६७ । ६८ ॥

आयुरारोग्यवर्चस्यं बलवीर्यविवर्द्धनम्।
विद्याबुद्धिप्रदं नृणामप्रयत्नशुभप्रदम्॥ ७०॥
येन लोका भविष्यन्ति महाबलपराक्रमाः।
शुद्धचित्ताः परहिता मातापित्रोः प्रियङ्कराः॥ ७१॥
स्वदारनिरताः पुरुषाः परस्त्रीषु पराङ्मुखाः।
देवतागुरुभक्ताश्च पुत्रस्वजनपोषकाः॥ ७२॥
ब्रह्मज्ञा ब्रह्मविद्याश्च ब्रह्मचिन्तनमानसाः।
सिद्धयर्थं लोकयात्रायाः कथयस्व हिताय यत्॥ ७३॥
कर्त्तव्यं यदकर्त्तव्यं वर्णाश्रमविभेदतः।
विना त्वां सर्वलोकानां कस्त्राता भुवनत्रये॥ ७४॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्म्म-
निर्णयसारे श्रीमदाद्यासदाशिवसंवादे जीव-
निस्तारोपायप्रश्नो नाम प्रथमोल्लासः॥ १॥

तेषामित्यादि। तेषां नराणाम्। आयुरारोग्यवर्चस्यम् आयुषे आरोग्याय वर्चसे तेजसे च हितम्॥ ६९। ७०॥

विद्येत्यादि। येन उपायेन॥ ७१॥

ब्रह्मविद्याः सर्वं ब्रह्मेति प्रज्ञावन्तः लोकयात्रायाः लोक-निर्वाहस्य॥ ७२। ७३। ७४।

इति श्रीमहानिर्व्वाणतन्त्रटीकायां प्रथमोल्लासः।

---

## द्वितीयोल्लासः

इति देव्या वचः श्रुत्वा शङ्करो लोकशङ्करः ।
कथयामास तत्त्वेन महाकारुण्यवारिधिः ॥ १ ॥

श्रीसदाशिव उवाच ।

साधु पृष्टं महाभागे ! जगतां हितकारिणि ! ।
एतादृशः शुभः प्रश्नो न केनापि कृतः पुरा ॥ २ ॥
धन्यासि सुकृतज्ञासि हितासि कलिजन्मनाम् ।
यद् यदुक्तं त्वया भद्रे ! सत्यं सत्यं यथार्थतः ॥ ३ ॥
सर्वज्ञा त्वं त्रिकालज्ञा धर्मज्ञा परमेश्वरि ! ।
भूतं भवद्भविष्यच्च धर्मयुक्तं त्वया प्रिये ! ॥ ४ ॥
यथातत्त्वं यथान्यायं यथायोग्यं न संशयः ।
कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि ! ॥ ५ ॥
मेध्यामेध्याविचाराणां न शुद्धिः श्रौतकर्मणा ।
न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् ॥ ६ ॥

शङ्कर इदानीं कृतजीवनिस्तारोपायप्रश्नां पार्वतीं तत्प्रश्नस्तु स्तुवंस्तां प्रत्युत्तरं दातुमुपक्रमते । इतीत्यादि । लोकशङ्करः लोकानां कल्याणोत्पादकः महाकारुण्यवारिधिः महादयासमुद्रः ॥ १ । २ । ३ ॥

सर्वज्ञेत्यादि । भवत् वर्त्तमानम् ॥ ४ ॥

कलिकल्मषदीनानां कलियुगसम्बन्धिदुष्कृतहेतुकदुर्गतिशालिनां मेध्यामेध्याविचाराणां पवित्रापवित्रविचारशून्यानाम् अतएव द्विजादीनां ब्राह्मणप्रभृतीनां श्रौतकर्मणा वेदोक्तेन कर्मणा शुद्धिर्न भवेत् ॥ ५ । ६ ॥

सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते ।
विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये ! ॥ ७ ॥
श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे ! ।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ॥ ८ ॥
कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते ।
न तस्य गतिरस्तीति सत्यं सत्यं न संशयः ॥ ९ ॥
सर्व्वैर्वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः ।
प्रतिपाद्योऽस्मि नान्योऽस्ति प्रभुर्जगति मां विना ॥ १० ॥
आमनन्ति च ते सर्वे मत्पदं लोकपावनम् ।
मन्मार्गविमुखा लोकाः पाषण्डा ब्रह्मघातिनः ॥ ११ ॥
अतो मन्मतमुत्सृज्य यो यत् कर्म्म समाचरेत् ।
निष्फलं तद्भवेद्देवि ! कर्त्तापि नारको भवेत् ॥ १२ ॥
मूढो मन्मतमुत्सृज्य योऽन्यन्मतमुपाश्रयेत् ।
ब्रह्महा पितृहा स्त्रीघ्नः स भवेन्नात्र संशयः ॥ १३ ॥
कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः ।

जीवनधारणे ॥ ७ ॥

श्रुतीत्यादि । हे शिवे ! सुधीर्विचक्षणः आगमोक्तविधानेन देवान् यजेत् पूजयेत् इति पुरा पूर्वं श्रुतिस्मृतिपुराणादौ मयैवोक्त-मित्यन्वयः ॥ ८ । ९ ॥

स्वमतप्रामाण्याय प्रथमत आत्मन एव सर्वोत्तमत्वं आहर्त्तुमाह । सर्वैरित्यादि । मत इत्यध्याहार्य्यम् प्रतिपाद्यः बोधयितव्यः ॥ १० ॥

आमनन्तीति । सर्वे ते वेदादयो मत्पदं मदीयं स्थानं लोकपावनं लोकानां पूतत्वजनकमामनन्ति बोधयन्ति । ब्रह्मघातिनो भवेयुरिति शेषः ॥ ११ ॥

अत इत्यादि । उत्सृज्य परित्यज्य । तत् कर्म्म ॥ १२ । १३ ॥

ग्रस्ताः कर्म्मसु सर्व्वेषु [illegible] ॥ १४ ॥
निर्व्वीर्य्याः श्रौतजातीया विषहीनोरगा इव ।
सत्यादौ सफला आसन् कलौ ते मृतका इव ॥ १५ ॥
पाञ्चालिका यथा भित्तौ सर्व्वेन्द्रियसमन्विताः ।
अमूरशक्ताः कार्य्येषु तथान्ये मन्त्रराशयः ॥ १६ ॥
अन्यमन्त्रैः कृतं कर्म्म वन्ध्यास्त्रीसङ्गमो यथा ।
न तत्र फलसिद्धिः स्यात् श्रम एव हि केवलम् ॥ १७ ॥
कलावन्योदितैर्म्मार्गैः सिद्धिमिच्छति यो नरः ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्म्मतिः ॥ १८ ॥
मदुक्तादुदितं धर्म्मं हित्वान्यद्धर्म्ममीहते ।

अथ वेदोक्तानां मन्त्राणां कलौ निष्प्रभावत्वं तत्तत्फलानिष्पादकत्वञ्च प्रतिपादयंस्तन्त्रोदितानामेव मन्त्राणां सिद्धत्वात् झटिति तत्तत्फलप्रदातृत्वाच्चातिप्राशस्त्यमाह, कलावित्यादिभिः ॥ १४ ॥

निर्व्वीर्य्या इत्यादि । ये श्रौतजातीया वेदोदिता मन्त्राः सत्यादौ युगे सफलास्तत्तत्फलोत्पादका आसन् ते सर्व्वे मन्त्राः कलौ युगे विषहीना उरगाः सर्पा इव निर्व्वीर्य्या निष्प्रभा वा मृतका इव तत्तत्फलानिष्पादकाश्च बोद्धव्या इत्यन्वयः ॥ १५ ॥

पाञ्चालिका इत्यादि । भित्तौ स्थिताः सर्व्वैरिन्द्रियैः समन्विता युता अमूः पाञ्चालिका वस्त्रदन्तादिभिर्निर्म्मिताः पुत्तलिका यथा कार्य्येष्वशक्ता असमर्था भवन्ति तथैवान्ये तन्त्रोक्तभिन्ना मन्त्रराशयो मन्त्रसमूहाः कलौ तत्तत्कार्य्यानिष्पादका ज्ञेयाः । पाञ्चालिका पुत्तलिका स्याद्वस्त्रदन्तादिभिः कृतेत्यमरः ॥ १६ ॥

अन्येत्यादि । यथा वन्ध्यास्त्रीसङ्गमोऽपत्यरूपफलसाधको न भवति एवमन्यमन्त्रैः कृतं यत् कर्म्म तत्र तस्मिन् कर्म्मणि कृते सति फलसिद्धिः फलनिष्पत्तिर्न स्यात् केवलं श्रम एव स्यात् । शेषं निगदितसिद्धम् ॥ १७ ॥ १८ ॥

मद्वक्त्रोदितं त्यक्त्वा क्षीरमार्कं स वाञ्छति ॥ १९ ॥
नान्यः पन्था मुक्तिहेतुरिहामुत्र सुखाप्तये ।
यथा तन्त्रोदिता मार्गा मोक्षाय च सुखाय च ॥ २० ॥
तन्त्राणि बहुधोक्तानि नानाख्यानान्वितानि च ।
सिद्धानां साधकानाञ्च विधानानि च भूरिशः ॥ २१ ॥
अधिकारिविभेदेन पशुबाहुल्यतः प्रिये! ।
कुलाचारोदितं धर्मं गुप्तार्थं कथितं क्वचित् ॥ २२ ॥
जीवप्रवृत्तिकारीणि कानिचित् कथितान्यपि ।
देवा नानाविधाः प्रोक्ता देव्योऽपि बहुधाः प्रिये! ॥ २३ ॥
भैरवाश्चैव वेताला बटुका नायिका गणाः ।
शाक्ताः शैवा वैष्णवाश्च सौरगाणपतादयः ॥ २४ ॥
नानामन्त्राश्च यन्त्राणि सिद्धोपायान्यनेकशः ।
भूरिप्रयाससाध्यानि यथोक्तफलदानि च ॥ २५ ॥
यथा यथा कृताः प्रश्ना येन येन यदा यदा ।

मद्वक्त्रात् मम मुखात् उदितं कथितम्। ईहते वाञ्छति। आर्कम् अर्कवृक्षोद्भवम् ॥ १९ ॥

अमुत्र परलोके ॥ २० । २१ ।

अधिकारीत्यादि। हे प्रिये! अधिकारिविभेदेनाधिकारिणां विभेदेन पशूनां बाहुल्यतश्च हेतोः क्वचित् कुलाचारोदितं कुलाचारोक्तं धर्मं गुप्तार्थं कथितम् ॥ २२ ॥

जीवेत्यादि। अधिकारिविभेदेनेत्यनुषज्यते। कानिचित् तन्त्राणि। अपीत्यस्य जीवप्रवृत्तिकारीण्यपीत्यन्वयः ॥ २३ । २४ ॥

नानेत्यादि। सिद्धोपायानि सिद्धाः सिद्धिलब्धा उपाया येषु तानि ॥ २५ ॥

तदा तथोपकाराय तथैवोक्तं मया शिवे ! ॥ २६ ॥
सर्व्वलोकोपकाराय सर्व्वप्राणिहिताय च ।
युगधर्म्मानुसारेण याथातथ्येन पार्व्वति ! ॥ २७ ॥
त्वया यादृक्कृताः प्रश्ना न केनापि पुरा कृताः ।
तव स्नेहेन वक्ष्यामि सारात्सारं परात्परम् ॥ २८ ॥
वेदानामागमानाञ्च तन्त्राणाञ्च विशेषतः ।
सारमुद्धृत्य देवेशि ! तवाग्रे कथ्यते मया ॥ २९ ॥
यथा नरेषु तन्त्रज्ञाः सरितां जाह्नवी यथा ।
यथाहं त्रिदिवेशानामागमानामिदं तथा ॥ ३० ॥
किं वेदैः किं पुराणैश्च किं शास्त्रैर्बहुभिः शिवे ! ।
विज्ञातेऽस्मिन् महातन्त्रे सर्व्वसिद्धीश्वरो भवेत् ॥ ३१ ॥
यतो जगन्मङ्गलाय त्वयाहं विनियोजितः ।
अतस्ते कथयिष्यामि यद्विश्वहितकृत् भवेत् ॥ ३२ ॥
कृते विश्वहिते देवि ! विश्वेशः परमेश्वरि ! ।

यथेत्यादि । यथा यथा यादृशा यादृशाः प्रश्नाः तथैव तादृशमेवोत्तरम् ॥ २६ ॥

सर्व्वलोकोपकारायेत्यत्र त्वया यादृक्कृतः प्रश्न इत्यनेनान्वय करणीयः ॥ २७ । २८ ॥

वेदानामित्यादि । सारं स्थिरांशम् ॥ २९ ॥

अथ सर्व्वतन्त्रेभ्यो महानिर्वाणतन्त्रस्य महत्त्वं दर्शयन्नाह यथेत्यादिना । तन्त्रज्ञा उत्तमा इति शेषः इदं महानिर्वाणतन्त्रम् ॥ ३० । ३१ ॥

यत इत्यादि । विनियोजितः प्रवर्त्तितः ॥ ३२ ॥

ननु विश्वहितोत्पादकोपायकथनानुकूलः को लाभोऽत आह कृत इत्यादि । हे देवि ! विश्वहिते कृते सति विश्वेशो विश्वपालकादा-

प्रीतो भवति विश्वात्मा यतो विश्वं तदाश्रितम् ॥ २३ ॥
स एक एव सद्रूपः सत्योऽद्वैतः परात्परः ।
स्वप्रकाशः सदापूर्णः सच्चिदानन्दलक्षणः ॥ २४ ॥
निर्विकारो निराधारो निर्विशेषो निराकुलः ।
गुणातीतः सर्वसाक्षी सर्वात्मा सर्वदृग्विभुः ॥ २५ ॥

दीनां सर्वेषां विश्वात्मा परमेश्वरः प्रीतो भवति ननु । विश्वहितोत्पादनात् परमेश्वरे कथं प्रीतिरुत्पद्यते तत्राह विश्वात्मेति । यतः परमेश्वरो विश्वात्मनि यस्य तथाभूतो भवति अतो विश्वहितोत्पादनेन तत्र प्रीतिर्जायते इति भावः । ननु तस्य विश्वात्मत्वमेव कथं स्यात्तत्राह यतो विश्वमित्यादि । यतो विश्वं तदाश्रितं तं परमेश्वरमाश्रितं वर्त्ततेऽतो विश्वात्मा स भवति ॥ २३ ॥

यस्य परमात्मन एकैकस्य सत्यत्वं तदन्यस्याखिलपदार्थस्य मिथ्यात्वमस्तीति प्रतिपादयति । स एक एवेत्यादि । अथ सत्यत्वात्तज्ज्ञानादेः सर्वेषां प्रीतिजनकत्वान्निर्वीणहेतुत्वाच्च परमात्मैवैको ध्येयः पूज्यः सुखाराध्यश्चेत्यभिधातुं प्रथमतः सद्रूपः सत्स्वभावः स परमेश्वर एवैकः सत्यः तदन्यस्तु सर्वः पदार्थोऽसत्यो ज्ञेयः । तत्सत्यत्वे हेतून् दर्शयन्नाह अद्वैत इत्यादि । यतोऽद्वैतः सजातीयविजातीयशून्यः अतएव परात् ब्रह्मादेरपि परः श्रेष्ठः स्वेनात्मनैव प्रकाशते इति स्वप्रकाशः चन्द्रसूर्यादिप्रकाशनिरपेक्ष इत्यर्थः । सदापूर्णः सर्वदा अखण्डः सच्चिदानन्दलक्षणः सन्तौ सर्वदा स्थायिनौ यौ चिदानन्दौ ज्ञानानन्दौ तत्स्वरूपः ॥ २४ ॥

निर्विकारः प्रकृतेरन्यथाभावो विकारः तद्रहितः निराधारः आधारशून्यः निर्विशेषः स्वगतभेदरहितः निराकुलः आकुलताशून्यः गुणातीतः गुणाः शीतोष्णाः सुखदुःखादयः सत्त्वादयो वा तानतीतोऽतिक्रान्तः सर्वसाक्षी सर्वेषां शुभाशुभकर्मणां साक्षात् द्रष्टा सर्वात्मा सर्वस्वरूपः सर्वदृक् अखिलस्य पदार्थस्यावलोकयिता विभुः प्राप्तसमस्तैश्वर्यः ॥ २५ ॥

THE RAMAKRISHNA MISSION INSTITUTE OF CULTURE LIBRARY 96241

गूढः सर्वेषु भूतेषु सर्वव्यापी सनातनः ।
सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ॥ ३६ ॥
लोकातीतो लोकहेतुरवाङ्मनसगोचरः ।
स वेत्ति विश्वं सर्वज्ञस्तं न जानाति कश्चन ॥ ३७ ॥
तदधीनं जगत् सर्वं त्रैलोक्यं सचराचरम् ।
तदालम्बनतस्तिष्ठेदवितर्क्यमिदं जगत् ॥ ३८ ॥
तत्सत्यतामुपाश्रित्य सद्वद्भाति * पृथक् पृथक् ।
तेनैव हेतुभूतेन वयं जाता महेश्वरि ! ॥ ३९ ॥
कारणं सर्वभूतानां स एकः परमेश्वरः ।
लोकेषु सृष्टिकरणात् स्रष्टा ब्रह्मेति गीयते ॥ ४० ॥

सर्वेषु चराचरेषु भूतेषु गूढः संवृतः सर्वव्यापी सकलपदार्थव्यापनशीलः सनातनः आद्यन्तशून्यः सर्वेन्द्रियगुणाभासः सर्वाणीन्द्रियाणि गुणांश्च तद्विषयानाभासयति सः तथाभूतः सर्वेन्द्रियविवर्जितः चक्षुरादिसकलेन्द्रियशून्यः ॥ ३६ ॥

लोकातीतोऽतिक्रान्तलोकः लोकहेतुः भुवनबीजम् अवाङ्मनसगोचरः वाचो मनसश्चाविषयः सर्वज्ञः स परमात्मा विश्वं सर्वं जगद्वेत्ति जानाति तं परमात्मानन्तु कश्चन अपि न जानाति यतः परमात्मैवैकः सत्यः तद्भिन्नसकलः पदार्थोऽनेवम्भूतत्वादसत्य इत्यर्थः ॥ ३७ ॥

तदधीनमित्यादि । सर्वं जगत्तदधीनं परमात्मवशवर्त्ति चराचरं जङ्गमस्थावरसहितं त्रैलोक्यं तदालम्बनतः परमात्मावलम्बनतस्तिष्ठेत् इदमवितर्क्यमद्भुतमीदृशं जगत् तत्सत्यतां परमात्मसत्यतामुपाश्रित्य इयं पृथ्वी इमा आपः अयं वायुरित्यादिरूपेण पृथक् पृथक् सदिव सद्वद्भाति प्रकाशते इत्यन्वयः वयं शङ्करादयः ॥ ३८ । ३९ ॥

कारणमित्यादि । एकः केवलः तदितरथा परमेश्वरेणापि सृष्टि-

---

* सदुद्भातीति वा पाठः ।

विष्णुः पालयिता देवि! संहर्त्ताहं तदिच्छया।
इन्द्रादयो लोकपालाः सर्वे तद्वशवर्त्तिनः॥ ४१॥
स्वे स्वेऽधिकारे निरतास्ते शासन्ति † तदाज्ञया।
त्वं परा प्रकृतिस्तस्य पूज्यासि भुवनत्रये॥ ४२॥
तेनान्तर्यामिरूपेण तत्तद्विषययोजिताः।
स्वस्वकर्म प्रकुर्वन्ति न स्वतन्त्राः कदाचन॥ ४३॥
यद्भयाद्वाति वातोऽपि सूर्यस्तपति यद्भयात्।
वर्षन्ति तोयदाः काले पुष्यन्ति तरवो वने॥ ४४॥
कालं कालयते काले मृत्योर्मृत्युर्भियो भयम्।
वेदान्तवेद्यो भगवान् यत्तच्छब्दोपलक्षितः॥ ४५॥
सर्वे देवाश्च देव्यश्च तन्मयाः सुरवन्दिते।
आब्रह्मस्तम्बपर्यन्तं तन्मयं सकलं जगत्॥ ४६॥

यस्याल्लोकेषु ब्रह्मा स्रष्टेति गीयते प्रख्यायते। तदिच्छयैव सृष्टजगत्प्रपालनात् विष्णुः पालयितेति गीयते। तत्संहरणाद्वाहं संहर्त्तेति गीयते। इन्द्रादय इत्यादि। तद्वशवर्त्तिनः परमेश्वराधीना ये इन्द्रादयो लोकपालास्ते सर्वे स्वे स्वेऽधिकारे निरताः सन्तस्तदाज्ञया लोकान् शासतीत्यन्वयः॥ ४०—४२॥

तेनेत्यादि। तेन परमात्मना तत्तद्विषययोजिताः तस्मिन् तस्मिन् विषये प्रवर्त्तिताः न स्वतन्त्राः न स्वाधीनाः॥ ४३। ४४॥

कालमित्यादि। काले प्रलयसमये कालमपि कालयते नाशं करोति। भियो भयम्। यत्तच्छब्दोपलक्षितः यत्तच्छब्दाभ्यां बोधितः॥ ४५॥

सर्वे इत्यादि। तन्मयाः परमात्मस्वरूपाः आब्रह्मस्तम्बपर्यन्त

† रक्षन्तीति पाठः।

तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् ।
तदाराधनतो देवि ! सर्वेषां प्रीणनं भवेत् ॥ ४७ ॥
तरोर्मूलाभिषेकेण यथा तद्भुजपल्लवाः ।
तृप्यन्ति तदनुष्ठानात् तथा सर्व्वेऽमरादयः ॥ ४८ ॥
यथा तवार्च्चनाद्ध्यानात् पूजनाज्जपनात् प्रिये ! ।
भवन्ति तुष्टाः सुन्दर्य्यस्तथा जानीहि ब्रह्मणि ॥ ४९ ॥
यथा गच्छन्ति सरितोऽवशेनापि सरित्पतिम् ।
तथार्च्चादीनि कर्म्माणि तदुद्देश्यानि यान्ति ! ॥ ५० ॥
यो यो यान् यान् यजेद्देवान् यद्यदाप्तये ।
तत्तद्ददाति सोऽध्यक्षस्तैस्तैर्देवगणैः शिवे ! ॥ ५१ ॥
बहुनात्र किमुक्तेन तवाग्रे कथ्यते प्रिये ! ।
ध्येयः पूज्यः सुखाराध्यस्तं विना नास्ति मुक्तये ॥ ५२ ॥
नायासो नोपवासश्च कायक्लेशो न विद्यते ।

ब्रह्माणमारभ्य तृणादिगुच्छपर्य्यन्तं सकलं सम्पूर्णं जगत्तन्मयं परब्रह्मस्वरूपं भवति ॥ ४६ ॥

तस्मिन्नित्यादि । अत इति शेषः तस्मिन् परमात्मनि ॥ ४७ ॥

परब्रह्माराधनतः सर्वेषां प्रीणने दृष्टान्तमाह, तरोरित्यादि । तद्भुजपल्लवाः तरोः शाखाः किशलयानि च । तदनुष्ठानात् परमेश्वराराधनात् ॥ ४८ ॥

यथेत्यादि । पूजनात् मानसादर्च्चनात् ॥ ४९ ॥

यथेत्यादि । तदुद्देश्यानि स परमात्मा उद्देश्यो येषामर्च्चादिकर्म्मणां तानि ॥ ५० ॥

यो य इत्यादि । यद्यदाप्तये यस्य यस्य फलस्य लाभाय अध्यक्षः सर्वेषां प्राणिनां तत्तत्क्रियासु प्रवर्त्तकः ॥ ५१ ॥

बहुनेत्यादि । सुखेनाराध्य उपास्यः सुखाराध्यः ॥ ५२ ॥

नैवाचारादिनियमो नोपचाराश्च भूरिशः ॥ ५३ ॥
न दिक्कालविचारोऽस्ति न मुद्राद्युपसंहतिः ।
यत्साधने कुलेशानि ! तं विना कोऽन्यमाश्रयेत् ॥ ५४ ॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे
श्रीमदाद्यासदाशिवसंवादे जीवनिस्तारोपाय-
प्रश्नो नाम द्वितीयोल्लासः ॥ २ ॥

सुखाराध्यत्वमेव दर्शयन्नाह । नायास इत्यादि । आयासः परिश्रमः ॥ ५३ ॥

तं परमात्मानम् ॥ ५४ ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां द्वितीयोल्लासः ।

---

## तृतीयोल्लासः ।

श्रीदेव्युवाच ।

देवदेव महादेव ! देवतानां गुरोर्गुरो ! ।
वक्ता त्वं सर्वशास्त्राणां मन्त्राणां साधनस्य च ॥ १ ॥
कथितं यत् परं ब्रह्म परमेशं परात्परम् ।
यस्योपासनतो मर्त्यो भुक्तिं मुक्तिञ्च विन्दति ॥ २ ॥
केनोपायेन भगवन् ! परमात्मा प्रसीदति ।
किं तस्य साधनं देव ! मन्त्रः को वा प्रकीर्त्तितः ॥ ३ ॥
किं ध्यानं किं विधानञ्च परेशस्य महात्मनः ।*
तत्त्वेन श्रोतुमिच्छामि कृपया कथय प्रभो ! ॥ ४ ॥

श्रीसदाशिव उवाच ।

अतिगुह्यं परं तत्त्वं शृणु मत्प्राणवल्लभे ! ।

कैवल्यार्थं परमात्मैव ध्येयः पूज्यः तथाराध्यस्तत्साधनं तत्प्र-
मादिकं जिज्ञासुः सदाशिवं प्रशंसन्ती देव्युवाच । देवदेवेत्यादि ।
देवतानां गुरोर्बृहस्पतेरपि गुरो ॥ १ ॥
विन्दति लभते ॥ २ ॥
तस्य परमात्मनः ॥ ३ ॥
तत्त्वेन याथार्थ्येन ॥ ४ ॥
अथोत्तरयन् सदाशिव उवाच । अतिगुह्यमित्यादि । अतिगुह्य-

---

* परेतस्य परात्मनः इति वा पाठः ।

रहस्यमेतत् कल्याणि ! न कुत्रापि प्रकाशितम् ॥ ५ ॥
तव स्नेहेन वक्ष्यामि मम प्राणाधिकं परम् ।
ज्ञेयं भवति तद्ब्रह्म सच्चिद्विश्वमयं परम् ॥ ६ ॥
यथा तत्त्वस्वरूपेण लक्षणैर्वा महेश्वरि ! ।
सत्तामात्रं निर्व्विशेषमवाङ्मनसगोचरम् ॥ ७ ॥
असत्त्रिलोकीसद्भानं स्वरूपं ब्रह्मणः स्मृतम् ।
समाधियोगैस्तद्वेद्यं सर्व्वत्र समदृष्टिभिः ।
द्वन्द्वातीतैर्निर्व्विकल्पैर्देहात्माध्यासवर्ज्जितैः ॥ ८ ॥

मतिरहस्यं परं तत्त्वं परं ब्रह्म तत्त्वं ब्रह्मणि याथार्थ्ये इति कोशः । रहस्यं गुह्यम् ॥ ५ ॥

ज्ञेयमित्यादि । हे महेश्वरि ! सच्चिद्विश्वमयं सत् सदा स्थायि चित् चैतन्यं विश्वमयं जगत् एतत् स्वरूपं यदतिगुह्यं तत् परं ब्रह्म तत्-स्वरूपेण ब्रह्मणः स्वरूपेण लक्षणेन तटस्थैर्वा लक्षणैर्यावत् ज्ञेयं भवति । लक्ष्यते ज्ञायते पदार्थो यैः तानि लक्षणानि तैः करणे ल्युट् ।

ननु किं तत्त्वस्वरूपं येन परं ब्रह्म ज्ञेयं भवेदित्यपेक्षायां ब्रह्मणः स्वरूपं निरूपयति सत्तामात्रमित्यादि । यत् सत्तामात्रं केवल-पदार्थसत्त्वरूपं निर्विशेषं स्वगतभेदरहितम् अवाङ्मनसगोचरं वचो मनसामगम्यम् असत्त्रिलोकीसद्भानम् असत्या मिथ्याभूताया-स्त्रिलोक्याः सद्भानं सद्रूपतया भानं यस्मात् तद्ब्रह्मणः स्वरूपं स्मृतम् ।

तत् ब्रह्मस्वरूपं परमहंसैरेव वेदितव्यमित्याह । समाधी-त्यादिना । सर्वत्र समदृष्टिभिः सर्वमित्रारिमित्रादौ समा तुल्या दृष्टि-र्येषां तैः, द्वन्द्वातीतैः अतिक्रान्तसुखदुःखशीतोष्णादिभिः निर्विक-ल्पैः विकल्पविरहितैः देहात्माध्यासवर्जितैः शरीरमिदमात्मेत्यनु-भवरहितैर्योगिभिः समाधियोगैः समाधिश्चित्तैकाग्र्यम् योगाः पर-मेश्वरैकपरतानामग्रहणादयः तैः करणैः तद्ब्रह्म वेद्यं भवति ।

यतो विश्वं समुद्भूतं येन जातञ्च तिष्ठति ।
यस्मिन् सर्व्वाणि लीयन्ते ज्ञेयं तद्ब्रह्म लक्षणैः ॥ ९ ॥
स्वरूपबुद्ध्या यद्वेद्यं तदेव लक्षणैः शिवे ! ।
लक्षणैराप्तुमिच्छूनां विहितं तत्र साधनम् ॥ १० ॥
तत् साधनं प्रवक्ष्यामि शृणुष्वावहिता प्रिये ! ।
तत्रादौ कथयाम्याद्ये ! मन्त्रोद्धारं महेशितुः ॥ ११ ॥
प्रणवं पूर्व्वमुद्धृत्य सच्चित्पदमुदाहरेत् ।

अथवा समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरः उपसर्गे घोः किरित्यधिकरणे किः । तत्र योगाः सम्यग्दर्शनादयो येषां तैः समाधियोगैर्जनैः ॥ ६—८ ॥

तटस्थलक्षणानि दर्शयन्नाह । यतो विश्वमित्यादि । यतो हेतुभूतात् विश्वमशेषं जगत् समुद्भूतं जातम् जातञ्च यद्विश्वं येनावलम्बनभूतेन तिष्ठति । प्रलयकाले सर्वाणि चराचराणि च भूतानि यस्मिन् लीयन्ते लीनानि भवन्ति तद्ब्रह्म तटस्थैरेतैर्लक्षणैर्ज्ञेयं वेदितव्यम् ॥ ९ ॥

स्वरूपलक्षणेन तटस्थलक्षणेन च वेदितव्यस्य ब्रह्मणो भेदो नास्तीति प्रतिपादयितुमाह स्वरूपबुद्ध्येत्यादि । हे शिवे ! स्वरूपबुद्ध्या यद्ब्रह्म वेद्यं ज्ञेयं भवति तदेव ब्रह्म तटस्थैरपि लक्षणैर्वेद्यं भवेत् । स्वरूपलक्षणेन ब्रह्माधिगन्तुमिच्छतां जनानां साधनाभावेऽपि तटस्थैरेव लक्षणैस्तदधिगन्तुमिच्छतां साधनमभिधातुमाह लक्षणैरित्यादि । तत्र स्वरूपलक्षणतटस्थलक्षणेषु मध्ये तटस्थैर्लक्षणैर्ब्रह्माप्तुमधिगन्तुमिच्छूनां जनानां साधनं विहितम् ॥ १० ॥

तदित्यादि । हे प्रिये ! तत्साधनं तटस्थलक्षणैर्ज्ञानं ब्रह्मणः साधनमहं प्रवक्ष्यामि अवहिता सावधाना सती त्वं शृणुष्व तत्र साधने वक्तव्ये आदौ प्रथमतो महेशितुर्महेश्वरस्य मन्त्रोद्धारं कथयामि ॥ ॥ ११ ॥

मन्त्रोद्धारमेव कथयति प्रणवमित्यादिना । प्रणवम् ...

एवं पदान्ते ब्रह्मेति मन्त्रोद्धारः प्रकीर्त्तितः ॥ १२ ॥

सन्धिक्रमेण मिलितः सप्तार्णोऽयं मनुर्मतः ।

तारहीनेन देवेशि ! षड्वर्णोऽयं मनुर्भवेत् ॥ १३ ॥

सर्वमन्त्रोत्तमः साक्षाद्धर्मार्थकाममोक्षदः ।

नात्र सिद्धाद्यपेक्षास्ति नारिमित्रादिदूषणम् ॥ १४ ॥

न तिथिर्न च नक्षत्रं न राशिगणनन्तथा ।

कुलाकुलविनियमो न संस्कारोऽत्र विद्यते ।

सर्वथा सिद्धमन्त्रोऽयं नात्र कार्य्या विचारणा ॥ १५ ॥

बहुजन्मार्जितैः पुण्यैः सद्गुरुर्यदि लभ्यते ।

तदा तद्वक्त्रतो ज्ञात्वा जन्मसाफल्यमाप्नुयात् ॥ १६ ॥

चतुर्व्वर्गं करे कृत्वा परत्रेह च मोदते ॥ १७ ॥

स धन्यः स कृतार्थश्च स कृती स च धार्म्मिकः ।

ओङ्कारमुच्चार्य्य तदनन्तरं सच्चित्पदमुदाहरेत् वदेत् सच्चित्पदान्ते च एकं ब्रह्मेत्युदाहरेत् । ततश्च ओं सच्चिदेकं ब्रह्मेत्याकारको मन्त्रो निष्पन्नः मन्त्रोद्धारोऽयमित्थं प्रकीर्त्तितः कथितः ॥ १२ ॥

सन्धीति । हे देवेशि ! सन्धिक्रमेण मिलितः सङ्गतोऽयं मनुर्मन्त्रः सप्तार्णः सप्तवर्णको मतः तारहीनेन प्रणवत्यागेनायं पूर्वोक्त एव मनुः षड्वर्णो भवेत् ॥ १३ ॥

अथैनं मन्त्रं स्तौति सर्वेत्यादिना । अयं मन्त्रः सर्वेषु मन्त्रेषूत्तमः श्रेष्ठः । सर्वमन्त्रोत्तमत्वमेवाह साक्षादित्यादिना ॥ १४ ॥

न तिथिरिति । तिथिर्न गणनीयेति शेषः ॥ १५ ॥

अथैतस्य मन्त्रस्य ग्रहीतुः पुरुषस्य सर्वोत्तमत्वं प्रतिपादयितुमाह बहुजन्मेत्यादि । तद्वक्त्रतः स गुरुमुखात् मन्त्रमिमं ज्ञात्वा ॥ १६ ॥

चतुर्वर्गमिति । धर्मार्थकाममोक्षैरुपलक्षितो वर्गः समूहश्चतुर्वर्ग इत्युच्यते । त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैरित्यमरः । परत्र परलोके ॥ १७ ॥

स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ॥ १८ ॥
सर्व्वशास्त्रेषु निष्णातः सर्व्वलोकेषु पूजितः ।
यस्य कर्णपथोपान्तप्राप्तो मन्त्रमहामणिः ॥ १९ ॥
धन्या माता पिता तस्य पवित्रं तस्य वै कुलम् ।
पितरस्तस्य सन्तुष्टा मोदन्ते त्रिदिवे सह ।
गायन्ति गायनीं गाथां पुलकाञ्चितविग्रहाः ॥ २० ॥
अस्मत्कुले कुलश्रेष्ठो जातो ब्रह्मोपदेशिकः ।
किमस्माकं गयापिण्डैः किं तीर्थैः श्राद्धतर्पणैः ॥ २१ ॥
किं दानैः किं जपैर्होमैः किमन्यैर्बहुसाधनैः ।
वयमक्षयतृप्ताः स्म सत्पुत्रस्यास्य साधनात् ॥ २२ ॥
शृणु देवि ! जगद्वन्द्ये ! सत्यं सत्यं मयोच्यते ।
परब्रह्मोपासकानां किमन्यैः साधनान्तरैः ॥ २३ ॥
मन्त्रग्रहणमात्रेण देही ब्रह्ममयो भवेत् ।
ब्रह्मभूतस्य देवेशि ! किमवाप्यं जगत्त्रये ॥ २४ ॥

96241

निष्णातो निपुणः कर्णपथसोपान्तं प्राप्तः कर्णपथोपान्तप्राप्तः मन्त्र एव महामणिः ॥ १८ । १९ ॥

गीयते इति गायनी ताम् ल्युट् चेति बाहुलकात् कर्मणि ल्युट् । पुलकैः रोमहर्षणैरञ्चिता अधिगता विपक्षा द्वेषा येषां तथाभूताः सन्तः । पुलकाञ्चितविग्रहा इति पाठेऽप्यञ्चितं मिश्रितमित्यर्थः ॥ २० ॥

तां गाथामेवाह अस्मत्कुल इत्यादिभ्यां द्वाभ्याम् । ब्रह्मोपदेशिकः परब्रह्मोपदेशवान् अक्षयतृप्ताः अविनश्वरतृप्तिमन्तः ॥ [illegible] ॥

शृण्वित्यादि । साधनान्तरैः साधनविशेषैः ॥ २३ ॥

मन्त्रेत्यादि । किमवाप्यं किं लब्धव्यमस्ति अपि तु सर्वमेव लब्धमेवास्तीत्यर्थः ॥ २४ ॥

किं कुर्वन्ति ग्रहा यक्षा वेतालाश्चेटकादयः ।
पिशाचा गुह्यका भूता डाकिन्यो मातृकादयः ।
तस्य दर्शनमात्रेण पलायन्ते पराङ्मुखाः ॥ २५ ॥
रक्षितो ब्रह्ममन्त्रेण प्रावृतो ब्रह्मतेजसा ।
किं बिभेति ग्रहादिभ्यो मार्त्तण्ड इव चापरः ॥ २६ ॥
तं दृष्ट्वा ते भयापन्नाः सिंहं दृष्ट्वा यथा गजाः ।
विद्रवन्ति च नश्यन्ति पतङ्गा इव पावके ॥ २७ ॥
न तस्य दुरितं किञ्चिद्ब्रह्मनिष्ठस्य देहिनः ।
सत्यपूतस्य शुद्धस्य सर्वप्राणिहितस्य च ।
को वोपद्रवमन्विच्छेदात्मापघातकं विना ॥ २८ ॥
ये द्रुह्यन्ति खलाः पापाः परब्रह्मोपदेशिने ।
स्वद्रोहं ते प्रकुर्वन्ति नातिरिक्ता यतः सतः ॥ २९ ॥

तस्य ब्रह्मभूतस्य दर्शनमात्रेण पराङ्मुखाः सन्तो ग्रहादयः पलायन्ते ॥ २५ ॥

रक्षित इत्यादि । ब्रह्मभूतो जनो ग्रहादिभ्यो बिभेति भीतो भवति किम् । किन्तु न बिभेतीत्यर्थः मार्त्तण्ड इव सूर्य्य इव ॥ २६ ॥

तमित्यादि । तं परब्रह्मोपासकम् । ते ग्रहादयः विद्रवन्ति पलायन्ते । पतङ्गा इव शलभा इव ॥ २७ ॥

शुद्धस्य निर्म्मलान्तःकरणस्य ॥ २८ ॥

ये पापाः पापशालिनः खला दुर्जनाः परब्रह्मोपदेशिने जनाय द्रुह्यन्ति अपकारं विदधति ते पापाः स्वद्रोहमेव प्रकुर्वन्ति । परब्रह्मोपदेशिने इति क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति सम्प्रदानत्वात् चतुर्थी सम्प्रदाने इति चतुर्थी । परब्रह्मोपदेशिजनापकारस्य स्वस्यैवापकारस्योत्पादने हेतुं दर्शयन्नाह नातिरिक्ता इत्यादि । यतो हेतोः सतः साधोर्ब्रह्मभूताद्ब्रह्मोप-

स तु सर्वहितः साधुः सर्वेषां प्रियकारकः ।
तस्याभिष्टं भवेद्देवि ! को वा [illegible] ॥ ३० ॥
मन्त्रार्थं मन्त्रचैतन्यं यो न जानाति साधकः ।
शतलक्षप्रजप्तोऽपि तस्य मन्त्रो न सिद्ध्यति ॥ ३१ ॥
अतोऽस्यार्थञ्च चैतन्यं कथयामि शृणु प्रिये ।
अकारेण जगत्पाता संहर्त्ता स्यादुकारतः ।
मकारेण जगत्स्रष्टा प्रणवार्थ उदाहृतः ॥ ३२ ॥
सच्छब्देन सदा स्थायि चिच्चैतन्यं प्रकीर्त्तितम् ॥ ३३ ॥
एकमद्वैतमीशानि ! बृहत्वाद्ब्रह्म गीयते ।
मन्त्रार्थः कथितो देवि ! साधकाभीष्टसिद्धिदः ॥ ३४ ॥
मन्त्रचैतन्यमेतत्तु तदधिष्ठातृदेवता ।
तज्ज्ञानं परमेशानि ! भक्तानां सिद्धिदायकम् ॥ ३५ ॥
अस्याधिष्ठातृ देवेशि ! सर्वव्यापि सनातनम् ।
अवितर्क्यं निरातङ्कं वाचातीतं निरञ्जनम् ॥ ३६ ॥

देहिनो जगत् तेऽतिरिक्ता भिन्ना न भवन्ति अतः सर्व्वोऽहमेव प्रकुर्वन्तीति भावः ॥ २९ ॥

स तु ब्रह्मनिष्ठस्तु ॥ ३० ॥

तस्य साधकस्य यतो न सिद्ध्यति ॥ ३१ ॥

अत इति प्रथमतः प्रणवार्थं निरूपयति । अकारेणेत्यादिना ॥ ३२ ॥

अथ सच्चिदादिपदार्थमाह सच्छब्देनेत्यादिना ॥ ३३ । ३४ ॥

अथ मन्त्रचैतन्यमभिधत्ते मन्त्रेत्यादिना । हे परमेशानि ! या तस्य मन्त्रस्याधिष्ठात्री देवता तस्या यत् ज्ञानमेतदेव मन्त्रचैतन्यं [illegible]न्वयः तत्राधिष्ठातृदेवताज्ञानं भक्तानां सिद्धिदायकं भवेत् ॥ ३५ ॥

मन्त्रस्य मन्त्रस्य काधिष्ठात्री देवतेत्यपेक्षायामाह [illegible] हे देवेशि ! सर्वव्यापि सकलपदार्थव्यापनशीलं सनातनं [illegible]

वाङ्मायाकमलाद्येन तारहीनेन पार्वति ! ।
दीयते विविधा विद्या माया श्रीः सर्वतोमुखी ॥ ३७॥
तारेण तारहीनेन प्रत्येकं सकलं पदम् ।
युग्मयुग्मक्रमेणापि मन्त्रोऽयं विविधो भवेत् ॥ ३८ ॥
ऋषिः सदाशिवो ह्यस्य छन्दोऽनुष्टुबुदाहृतम् ।

रहितम् अवितर्क्यमनूह्नीयं निराकारमाकृतिशून्यं वाचातीतमतिक्रान्तवाक् निरञ्जनं मनश्चक्षुराद्यविषयभूतं यद्ब्रह्म तदस्य मन्त्रस्याभिधानं भवेत् ॥ ३६ ॥

वागित्यादि । हे पार्वति ! वाङ्मायाकमलाद्येन ऐमिति ह्रीमिति श्रीमिति बीजमाद्यं यस्य तथाभूतेन तारहीनेन प्रणवरहितेन पूर्वोक्तेन मन्त्रेण क्रमतो विविधानेकप्रकारा विद्या दीयते विविधा माया दीयते सर्वतो मुखं यस्या एवम्भूता श्रीर्लक्ष्मीर्दीयते । यथा ऐं सच्चिदेकं ब्रह्मेत्यनेन मन्त्रेण विद्या दीयते । ह्रीं सच्चिदेकं ब्रह्मेत्यनेन माया दीयते । श्रीं सच्चिदेकं ब्रह्मेत्यनेन तु लक्ष्मीरिति ॥ ३७ ॥

अथैतस्यैव मन्त्रस्य नानाविधत्वं सम्पादयति तारेणेत्यादिना । पूर्वोक्तमन्त्रस्य प्रत्येकं पदं सकलं वा पदं तारेण प्रणवेन सहितं कर्त्तव्यं तारहीनेन प्रणवत्यागेनोपलक्षितं वा विधेयम् । ततश्चायं मन्त्रो विविधो भवेत् युग्मयुग्मक्रमेणापि प्रणवसहितस्तद्रहितो वायं पूर्वोक्तो मन्त्रो विविधोऽनेकप्रकारको भवेत् । तारसहितं तद्रहितं प्रत्येकं पदं यथा ओं सत् ओं चित् ओं एकम् ओं ब्रह्म सत् चित् एकम् ब्रह्म इति । प्रणवसत्त्वं तदसत्त्वं समस्तं पदम् यथा ओं सच्चिदेकं ब्रह्म सच्चिदेकं ब्रह्मेति । युग्मयुग्मक्रमतो यथा ओं सद्ब्रह्म ओं चिद्ब्रह्म ओं एकब्रह्म ओं सच्चित् ओं चिदेकम् सद्ब्रह्म चिद्ब्रह्म एकं ब्रह्म सच्चित् चिदेकमिति ॥ ३८ ॥

अथास्य मन्त्रस्य ऋष्यादिकमाह ऋषिरित्यादिना सार्द्धेन । अस्य

देवता परमं ब्रह्म सर्वान्तर्यामि निर्गुणम् ॥ ३९ ॥
चतुर्वर्गफलावाप्त्यै विनियोगः प्रकीर्त्तितः ।
अङ्गन्यासकरन्यासौ कथयामि शृणु प्रिये ॥ ४० ॥
तारं सच्चिदेकमिति ब्रह्मेति सकलं ततः ।
अङ्गुष्ठतर्जनीमध्यानामिकासु महेश्वरि ॥ ४१ ॥
कनिष्ठयोः करतलपृष्ठयोः सुरवन्दिते ।
नमः स्वाहा वषट् हुँ वौषट् फडन्तैर्यथाक्रमम् ॥ ४२ ॥
न्यसेन्न्यासोक्तविधिना साधकः सुसमाहितः ।
हृदादिकरपर्य्यन्तमेवमेव विधीयते ॥ ४३ ॥

मन्त्रस्य सर्वान्तर्यामि सर्वान्तर्नियन्तृ अस्य मन्त्रस्य सदाशिव ऋषिरनुष्टुप्-छन्दः सर्वान्तर्यामि निर्गुणं परमं ब्रह्म देवता धर्म्मार्थकाममोक्षावाप्तये विनियोगः शिरसि सदाशिवाय ऋषये नमः मुखेऽनुष्टुप्छन्दसे नमः हृदि सर्वान्तर्यामिनिर्गुणपरमब्रह्मणे देवतायै नमः धर्म्मार्थकाममोक्षा-वाप्तये विनियोग इति ऋषिन्यासं विधायाङ्गन्यासकरन्यासौ विधा-तव्यौ अतस्तावभिधातुमाह । अङ्गन्यासेत्यादि ॥ ३९ । ४० ॥

तयोर्म्मध्ये प्रथमतः करन्यासमाह तारमित्यादिभ्यां सार्द्धाभ्यां द्वाभ्याम् । हे महेश्वरि ! हे सुरवन्दिते ! नमःस्वाहावषट्हुंवौषट्फड-न्तैरन्तर्भूतैर्नमःस्वाहावषट्हुंवौषट्फट्रूपैः पदैर्विशिष्टं तारं प्रणवं सदिति चिदिति एकमिति ब्रह्मेति ततोऽनन्तरम् ओं सच्चिदेकं ब्रह्मेति सकलस्य पदम् अङ्गुष्ठतर्ज्जनीमध्यानामिकासु कनिष्ठयोः करतलपृष्ठयोः न्यासोक्तविधिना सुसमाहितोऽतिसावधानः सन् साधको यथाक्रमं न्यसेत् यथा ओं अङ्गुष्ठाभ्यां नमः सत्तर्ज्जनीभ्यां स्वाहा चिन्मध्यमाभ्यां वषट् एकमनामिकाभ्यां हुम् ब्रह्म कनिष्ठाभ्यां वौषट् ओं सच्चिदेकं ब्रह्म कर-तलपृष्ठाभ्यां फट् इति करन्यासः । अथाङ्गन्यासमाहार्द्धेन हृदादीति । हृदादिकरपर्य्यन्तं प्रत्येकमेव न्यासो विधीयते । यथा ओं हृदयाय नमः

प्राणायामं ततः कुर्य्यान्मूलेन प्रणवेन वा ।
मध्यमानामिकाभ्यान्तु दक्षहस्तस्य पार्वति ! ॥ ४४ ॥
वामनासापुटं धृत्वा दक्षनासापुटेन च ।
पूरयेत् पवनं मन्त्री मूलमष्टमितं जपन् ॥ ४५ ॥
अङ्गुष्ठेन दक्षनासां धृत्वा कुम्भकयोगतः ।
जपेद्द्वात्रिंशता वृत्त्या ततो दक्षिणनासया ॥ ४६ ॥
शनैः शनैस्त्यजेद्वायुं जपन् षोडशधा मनुम् ।
वामनासापुटेऽप्येवं पूरकुम्भकरेचकम् ॥ ४७ ॥
पुनर्दक्षिणतः कुर्य्यात् पूर्ववत् सुरपूजिते ! ।
प्राणायामविधिः प्रोक्तो ब्रह्ममन्त्रस्य साधने ॥ ४८ ॥

सच्चिदिति स्वाहा शिखायै वषट् एकं कवचाय हुम् ब्रह्म नेत्रत्रयाय वौषट् ओं सच्चिदेकं ब्रह्म करतलकरपृष्ठाभ्यां फट् इति ॥ ४१—४२ ॥

एवमङ्गन्यासकरन्यासौ विधाय प्राणायामो विधेय इत्याह । प्राणायाममित्यादिना । ततोऽनन्तरम् ओं सच्चिदेकं ब्रह्मेत्यादिमूलमन्त्रेण प्रणवेन ओङ्कारेण वा प्राणायामं कुर्य्यात् । ननु प्राणायामः कथं विधातव्य इत्यपेक्षायां तद्विधानमाह मध्यमेत्यादिभिः सार्द्धचतुर्भिः । हे पार्व्वति ! दक्षिणहस्तस्य मध्यमानामिकाभ्यामङ्गुलिभ्यां वामनासापुटं धृत्वा मन्त्री साधकोऽष्टमितं मूलमन्त्रं जपन् सन् दक्षिणनासापुटेन पवनं वायुं पूरयेत् । ततो दक्षहस्तस्यैवाङ्गुष्ठेन दक्षनासापुटं धृत्वा कुम्भकयोगतो द्वात्रिंशता आवृत्त्या मूलमन्त्रं जपेत् । ततः षोडशधा मूलमन्त्रं जपन् सन् दक्षिणनासयैव शनैः शनैर्वायुं त्यजेत् ततो वामनासापुटेऽप्येवमेव पूरकुम्भकरेचकं कुर्य्यात् क्रमेणैवाष्ट [illegible] जपं विदध्यादित्यर्थः । पूर्व्ववत् पुनर्दक्षिणतोऽपि पूरककुम्भकरेचकं कुर्य्यात् ब्रह्ममन्त्रस्य साधने एष प्राणायामविधिः प्रोक्तः पूरकादित्रयरूपश्च योगिनामयमन्तरः नासिकोत्कृष्ट उच्छ्वासो ध्यातः

ततो ध्यानं प्रकुर्व्वीत सर्व्वकामेष्टसाधनम् ॥ ४९ ॥
हृदयकमलमध्ये निर्व्विशेषं निरीहम्
हरिहरविधिवेद्यं योगिभिर्ध्यानगम्यम् ।
जननमरणभीतिभ्रंशि सच्चित्स्वरूपम् ।
सकलभुवनबीजं ब्रह्म चैतन्यमीडे ॥ ५० ॥
ध्यात्वैवं परमं ब्रह्म मानसैरुपचारकैः ।
पूजयेत् परया भक्त्या ब्रह्मसायुज्यहेतवे ॥ ५१ ॥
गन्धं दद्यान्महीतत्त्वं पुष्पमाकाशमेव च ।
धूपं दद्याद्वायुतत्त्वं दीपं तेजः समर्पयेत् ।
नैवेद्यं तोयतत्त्वेन प्रदद्यात् परमात्मने ॥ ५२ ॥

पूरक उच्यते । कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचक इति ॥ ४४–४८ ॥

इत्थं प्राणायामं कृत्वा परमब्रह्मध्यानं कर्त्तव्यमित्याह तत इत्यादिना ॥ ४९ ॥

अथ तद्ध्यानमेवाह हृदयेत्यादि । हृदयकमलस्य मध्ये स्थितं चैतन्यं चेतनं ब्रह्माहमीड़े ध्यायामीत्यन्वयः । धातूनामनेकार्थत्वादीड़धातोर्ध्यानेऽर्थेऽपि वृत्तिः । निर्व्विशेषमित्यादीनि ब्रह्मणो विशेषणानि निर्व्विशेषं नानाविधभेदशून्यम् निरीहं निराकाङ्क्षम् प्राप्तसमस्तार्थमित्यर्थः । ध्यानगम्यं ध्यानेनावगन्तव्यम् जननमरणभीतिभ्रंशि जननमृत्युनिमित्तकभयापहन्तृ सच्चित्स्वरूपं सदास्थायिस्वरूपं ज्ञानस्वरूपमित्यर्थः । सकलभुवनबीजं समस्तस्य भुवनस्य कारणम् ॥ ५० ॥

एवं ब्रह्म ध्यात्वा तस्य पूजनं विधेयमित्याह ध्यात्वेत्यादिना मानसैर्मनः कल्पितैः ब्रह्मसायुज्यहेतवे ब्रह्मत्वनिमित्ताय सायुज्यम् ब्रह्मत्वं ब्रह्मसायुज्यमित्यपीत्यमरः ॥ ५१ ॥

मानसानुपचारानेवाह गन्धमित्यादिना ॥ ५२ ॥

ततो जप्त्वा महामन्त्रं मनसा साधकोत्तमः।
समर्प्य ब्रह्मणे पश्चाद्बहिःपूजां समारभेत् ॥ ५३ ॥
उपस्थितानि द्रव्याणि गन्धपुष्पादिकानि च।
वस्त्रालङ्करणादीनि भक्ष्यपेयानि यानि च ॥ ५४ ॥
मन्त्रेणानेन संशोध्य ध्यात्वा ब्रह्म सनातनम्।
निमील्य नेत्रे मतिमानर्पयेत् परमात्मने ॥ ५५ ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ५६ ॥
ततो नेत्रे समुन्मील्य जप्त्वा मूलं स्वशक्तितः।
तज्जपं ब्रह्मसात् कृत्वा स्तोत्रञ्च कवचं पठेत् ॥ ५७ ॥
स्तोत्रं शृणु महेशानि ! ब्रह्मणः परमात्मनः।
यत् श्रुत्वा साधको देवि ! ब्रह्मसायुज्यमश्नुते ॥ ५८ ॥

महामन्त्रम् ओँ सच्चिदेकं ब्रह्मेत्याद्यात्मकम् समर्प्य महामन्त्रजपस्यैतत्फलं दत्त्वा बहिःपूजामेवाह उपस्थितानीत्यादिना। उपस्थितानि समीपे स्थितानि ॥ ५३ ॥

अनेन इतोऽनन्तरमेव वक्ष्यमाणेन मन्त्रेण ॥ ५४ । ५५ ॥

अथ गन्धपुष्पाद्यर्पणमन्त्रमेवाह ब्रह्मार्पणमिति। अर्प्यते दीयतेऽनेनेत्यर्पणं स्रुवादि यज्ञपात्रम् तदपि ब्रह्मैव दीयमानं हविर्घृतादिकमपि ब्रह्मैव ब्रह्मैवाग्निस्तस्मिन् ब्रह्मणा कर्त्रा हुतं हवनमपि ब्रह्म अग्निश्च कर्त्ता च हवनक्रिया चापि ब्रह्मैवेत्यर्थः। परं ब्रह्मण्येव कर्म्मात्मके समाधिश्चित्तैकाग्र्यं यस्य तेन पुंसा ब्रह्मैव गन्तव्यं प्राप्तव्यं न तु फलान्तरमित्यर्थः ॥ ५६ ॥

तत इत्यादि। समुन्मील्य उद्घाट्य मूलं मूलमन्त्रम् ब्रह्मसात् ब्रह्मार्पितम् ॥ ५७ ॥

ब्रह्मसायुज्यमश्नुते ब्रह्मत्वं प्राप्नोति ॥ ५८ ॥

नमस्ते सते सर्वलोकाश्रयाय
नमस्ते चिते विश्वरूपात्मकाय ।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय
नमो ब्रह्मणे व्यापिने निर्गुणाय ॥ ५९ ॥
त्वमेकं शरण्यं त्वमेकं वरेण्यं
त्वमेकं जगत्कारणं विश्वरूपम् ।
त्वमेकं जगत्कर्तृपातृप्रहर्तृ
त्वमेकं परं निश्चलं निर्विकल्पम् ॥ ६० ॥
भयानां भयं भीषणं भीषणानां
गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैःपदानां नियन्तृ त्वमेकं
परेषां परं रक्षकं रक्षकाणाम् ॥ ६१ ॥

अथ तत्स्तोत्रमेवाह नमस्ते इत्यादि । सते सदा स्थायिने सर्व-लोकाश्रयाय सकललोकाधारभूताय चिते चैतन्याय विश्वरूप आत्मा यस्य तस्मै अद्वैततत्त्वाय सजातीयविजातीयात्मगतभेदरहितत्वाय ब्रह्मणे अतिबृहते अतएव व्यापिने सकलवस्तुव्यापनशीलाय निर्गुणाय सत्त्वादिगुणरहिताय ॥ ५९ ॥

त्वमित्यादि । एकं मुख्यं केवलं वा शरणे रक्षणे साधु इति शरण्यम् तत्र साधुरिति यत् । वरेण्यं वरणीयम् । जन्ममृत्युदुःखा-वादिभीरुभिरुपासनीयमित्यर्थः । परं श्रेष्ठम् निर्विकल्पं नानाविध-कल्पनाशून्यम् ॥ ६० ॥

भयानामित्यादि । भीषणानां भयानकानामपि भीषणं भयानकम् पावनानां पूतत्वजनकानामपि पावनं पवित्रताजनकम् पदानां स्थानानां मध्ये महोच्चैरत्युच्छ्रितं पदम् अथवा महोच्चैरत्युच्छ्रितं पदं येषां तेषां ब्रह्मादीनामपि नियन्तृ नियामकम् परेषां श्रेष्ठाना-

परेश प्रभो ! सर्वरूपाप्रकाशिन् !
अनिर्देश्य ! सर्वेन्द्रियागम्य ! सत्य ! ।
अचिन्त्याक्षर ! व्यापकाव्यक्ततत्त्व !
जगद्भासकाधीश ! पायादपायात् ॥ ६२ ॥

तदेकं स्मरामस्तदेकं जपामः
तदेकं जगत्साक्षिरूपं नमामः ।
सदेकं निधानं निरालम्बमीशं
भवाम्भोधिपोतं शरण्यं व्रजामः ॥ ६३ ॥

पञ्चरत्नमिदं स्तोत्रं ब्रह्मणः परमात्मनः ।
यः पठेत् प्रयतो भूत्वा ब्रह्मसायुज्यमाप्नुयात् ॥ ६४ ॥

प्रदोषेऽदः पठेन्नित्यं सोमवारे विशेषतः ।
श्रावयेद्बोधयेत् प्राज्ञो ब्रह्मनिष्ठान् स्वबान्धवान् ॥ ६५ ॥

नपि ॥ ६१ ॥

परेशेत्यादि। परेश ! परेषां ब्रह्मादीनामप्यधिप ! प्रभो ! नियन्तः ! अनिर्देश्य ! शब्देन निर्देष्टुमशक्य ! सर्वेन्द्रियागम्य ! सर्वैर्नेत्रादिभिरिन्द्रियैरप्राप्य ! सत्य ! परमार्थसत्त्वशालिन् ! अचिन्त्य ! मनसोऽप्यविषयभूत ! न क्षरति चलतीत्यक्षरम् तत्सम्बोधने अक्षर ! अव्यक्त ! रूपादिरहित ! जगद्भासकाधीश ! जगद्भासकानां चन्द्रसूर्यादीनामधीश्वर ! अथवा जगद्भासकेति अधीशेति च भिन्नमेव पदम् पायात् रक्षेत् अपायात् भक्तिबुद्ध्यादिविश्लेषात् ॥ ६२ ॥

तदित्यादि । तत् ब्रह्म निधीयते जगदू अस्मिन् तन्निधानं जगदाश्रयभूतम् निरालम्बम् आश्रयशून्यम् ॥ ६३ ॥

पञ्चरत्नात्मकैतत्स्तोत्रपाठहेतुकं फलमाह पञ्चरत्नमित्यादिना । प्रयतः पवित्रः ॥ ६४ ॥

अदः स्तोत्रम् ॥ ६५ ॥

इति ते कथितं देवि ! पञ्चरत्नं महेशितुः ।
कवचं शृणु चार्व्वङ्गि ! जगन्मङ्गलनामकम् ।
पठनाद्धारणाद् यस्य ब्रह्मज्ञो जायते ध्रुवम् ॥ ६६ ॥
परमात्मा शिरः पातु हृदयं परमेश्वरः ।
कण्ठं पातु जगत्पाता वदनं सर्व्वदृग्विभुः ॥ ६७ ॥
करौ मे पातु विश्वात्मा पादौ रक्षतु चिन्मयः ।
सर्व्वाङ्गं सर्व्वदा पातु परं ब्रह्म सनातनम् ॥ ६८ ॥
श्रीजगन्मङ्गलस्यास्य कवचस्य सदाशिवः ।
ऋषिश्छन्दोऽनुष्टुबिति परमब्रह्म देवता ।
चतुर्व्वर्गफलावाप्त्यै विनियोगः प्रकीर्त्तितः ॥ ६९ ॥
यः पठेद् ब्रह्मकवचं ऋषिन्यासपुरःसरम् ।
स ब्रह्मज्ञानमासाद्य साक्षाद्ब्रह्ममयो भवेत् ॥ ७० ॥
भूर्ज्जे विलिख्य गुटिकां स्वर्णस्थां धारयेत् यदि ।
कण्ठे वा दक्षिणे बाहौ सर्व्वसिद्धीश्वरो भवेत् ॥ ७१ ॥
इत्येतत् परमब्रह्मकवचन्ते प्रकाशितम् ।

स्तोत्रं पठित्वा कवचं पठितव्यमतस्तदभिधातुमुपक्रमते इतीति ॥ ६६ ॥

तद् ब्रह्मकवचमेवाह परमात्मेत्यादि ॥ ६७ ॥

चिन्मयः चैतन्यरूपः ॥ ६८ ॥

अथास्य कवचस्य ऋष्यादिकमाह श्रीजगदित्यादिना । अथ ब्रह्मकवचपठनजन्यं फलमाह य इत्यादिना । ऋषिन्यासः पुरःसरो यत्र तत् । ऋषिन्यासश्च अस्य श्रीजगन्मङ्गलनामकवचस्य सदाशिव ऋषिरनुष्टुप् छन्दः परमब्रह्मदेवता धर्म्मार्थकाममोक्षावाप्त्यै श्रीजगन्मङ्गलाख्यकवचपाठे विनियोगः । शिरसि सदाशिवाय ऋषये नमः मुखेऽनुष्टुप्छन्दसे नमः हृदये परब्रह्मणे देवतायै नमः धर्म्मार्थकाममोक्षावाप्त्यै श्रीजग-

दद्यात् प्रियाय शिष्याय गुरुभक्ताय धीमते ॥ ७२ ॥
पठित्वा स्तोत्रकवचं प्रणमेत् साधकाग्रणीः ॥ ७३ ॥
नमस्ते परमं ब्रह्म नमस्ते परमात्मने ।
निर्गुणाय नमस्तुभ्यं सद्रूपाय नमो नमः ॥ ७४ ॥
वाचिकं कायिकं वापि मानसं वा यथामति ।
आराधने परेशस्य भावशुद्धिर्विधीयते ॥ ७५ ॥
एवं संपूज्य मतिमान् स्वजनैर्बान्धवैः सह ।
महाप्रसादं स्वीकुर्य्याद् ब्रह्मणः परमात्मनः ॥ ७६ ॥
पूजने परमेशस्य नावाहनविसर्ज्जने ।
सर्व्वत्र सर्व्वकालेषु साधयेद् ब्रह्मसाधनम् ॥ ७७ ॥
अस्नातो वा कृतस्नानो भुक्तो वापि बुभुक्षितः ।
पूजयेत् परमात्मानं सदा निर्म्मलमानसः ॥ ७८ ॥
अनेन ब्रह्ममन्त्रेण भक्ष्यपेयादिकञ्च यत् ।

ब्रह्मस्तोत्रकवचपाठे विनियोग इति । आसाद्य प्राप्य ब्रह्ममयः ब्रह्मस्वरूपः ॥ ६९ । ७० । ७१॥

इतीति । ते तुभ्यं तवाग्रे वा प्रणमेत् परमात्मानमिति शेषः । साधकाग्रणीः साधकोत्तमः ॥ ७२ । ७३॥

तत्प्रणमनमेवाह नम इत्यादिना ॥ ७४ ॥

ननु परमात्मानं प्रति कायिकवाचिकमानसास्त्रयोऽपि प्रणामा विधातव्यास्तेषां मध्ये कतमो वा तत्राह वाचिकमित्यादि । यथामति परब्रह्मणे कायिकं वाचिकं मानसं वा प्रणमनं विदध्यात् । ननु परब्रह्मणे कायिकस्यैव प्रणामस्यौचित्यं ननु वाचिकमानसयोरत आह आराधन इत्यादि । भावशुद्धिरन्तःकरण शुद्धत्वम् ॥ ७५ ॥

एवमित्यादि । संपूज्य परमात्मानमिति शेषः ॥ ७६ ॥

साधयेत् निष्पादयेत् ॥ ७७ । ७८ ॥

दीयते परमेशाय तदेव पावनं भवेत् ॥ ७९ ॥
गङ्गातोये शिलादौ च स्पृष्टदोषोऽपि वर्त्तते ।
परब्रह्मार्पिते द्रव्ये स्पृष्टास्पृष्टं न विद्यते ॥ ८० ॥
पक्वं वापि न पक्वं वा मन्त्रेणानेन मन्त्रितम् ।
साधको ब्रह्मसात् कृत्वा भुञ्जीयात् स्वजनैः सह ॥ ८१ ॥
नात्र वर्णविचारोऽस्ति नोच्छिष्टादिविवेचनम् ।
न कालनियमोऽप्यत्र शौचाशौचं तथैव च ॥ ८२ ॥
यथाकाले यथादेशे यथायोगेन लभ्यते ।
ब्रह्मसात् कृतनैवेद्यमश्नीयादविचारयन् ॥ ८३ ॥
आनीतं श्वपचेनापि श्वमुखादपि निःसृतम् ।
तदन्नं पावनं देवि ! देवानामपि दुर्लभम् ॥ ८४ ॥
किं पुनर्मनुजादीनां वक्तव्यं देववन्दिते ! ।
परमेशस्य नैवेद्यसेवनाद् यत् फलं भवेत् ॥ ८५ ॥
महापातकयुक्तो वा युक्तो वाप्युपपातकैः ।
सकृत् प्रसादग्रहणात् मुच्यते नात्र संशयः ॥ ८६ ॥
सार्द्धत्रिकोटितीर्थेषु स्नानदानेन यत्फलम् ।
तत् फलं लभते मर्त्त्यो ब्रह्मार्पितनिषेवणात् ॥ ८७ ॥

अथ परब्रह्मणो महाप्रसादस्य माहात्म्यं वर्णयितुमुपक्रमते अनेनेत्यादि । ब्रह्ममन्त्रेण ओं सच्चिदित्याद्यात्मकेन ब्रह्मार्पणमित्याद्यात्मकेन वा शिलादौ शालग्रामशिलादौ ॥ ७९ । ८० ॥

पक्वमिति । मन्त्रेण ओं सच्चिदित्याद्यात्मकेन ॥ ८१ ॥

नात्रेति । अत्र ब्रह्मणो महाप्रसादे ॥ ८२ । ८३ ॥

आनीतमिति श्वपचेन चाण्डालेनाप्यानीतं यदन्नं तद् ब्रह्मसात्कृतं सत् पावनं भवेत् ॥ ८४ । ८५ । ८६ । ८७ ॥

अश्वमेधादिभिर्यज्ञैरिष्ट्वा यत् फलमश्नुते ।
भक्षिते ब्रह्मनैवेद्ये तस्मात् कोटिगुणं लभेत् ॥ ८८ ॥
जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ।
महाप्रसादमाहात्म्यं वर्णितुं नैव शक्यते ॥ ८९ ॥
यत्र कुत्र स्थितो वापि प्राप्य ब्रह्मार्पितामृतम् ।
भुक्त्वा श्वपचो वापि ब्रह्मसायुज्यमाप्नुयात् ॥ ९० ॥
यदि स्यान्नीचजातीयमन्नं ब्रह्मणि भावितम् ।
तदन्नं ब्राह्मणैर्ग्राह्यमपि वेदान्तपारगैः ॥ ९१ ॥
जातिभेदो न कर्त्तव्यः प्रसादे परमात्मनः ।
योऽशुद्धबुद्धिं कुरुते स महापातकी भवेत् ॥ ९२ ॥
वरं पापशतं कुर्य्यादिदं विप्रवधं प्रिये ! ।
परब्रह्मार्पिते द्रव्ये न कुर्य्यादवहेलनम् ॥ ९३ ॥
ये त्यजन्ति नरा मूढा महामन्त्रेण संस्कृतम् ।
अन्नतोयादिकं भद्रे ! पितॄंस्ते पातयन्त्यधः ॥ ९४ ॥
स्वयमप्यन्धतामिस्रे पतन्त्याहूतसंप्लवम् ।
ब्रह्मसात्कृतनैवेद्यद्रुहां नास्ति निष्कृतिः ॥ ९५ ॥

अश्नुते लभते ॥ ८८ । ८९ ॥

यत्रेत्यादि । अमृतम् सीधु श्वपचो वापि चाण्डालोऽपि ॥ ९० ॥

यदीति । नीचजातीयं चाण्डालादिसम्बन्धि ब्रह्मणि भावितं चिन्तितं ब्रह्मणेऽर्पितमित्यर्थः ॥ ९१ । ९२ ॥

वरमित्यादि । वरमीषत् प्रियम् । देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये इत्यमरः । अवहेलनम् तिरस्कारम् ॥ ९३ । ९४ ॥

स्वयमित्यादि । अन्धतामिस्रे नरके आहूतस्य विश्वस्य संप्लवः सलिले मज्जनं प्लवनं यत्र तत्कालपर्य्यन्तम् प्रलयकालपर्य्यन्तमित्यर्थः निष्कृतिर्निस्तारः ॥ ९५ ॥

पुण्यायन्ते क्रियाः सर्वाः सुषुप्तिः शुद्धतायते।
स्वेच्छाचारोऽत्र विहितो महामन्त्रस्य साधने ॥ ९६ ॥
किं तस्य वैदिकाचारैस्तान्त्रिकैर्वापि तस्य किम्।
ब्रह्मनिष्ठस्य विदुषः स्वेच्छाचारो विधिः स्मृतः ॥ ९७ ॥
कृतेनास्य फलं नास्ति नाकृतेनापि किल्बिषम्।
न विघ्नः प्रत्यवायोऽस्य ब्रह्ममन्त्रस्य साधनात् ॥ ९८ ॥
अस्मिन् धर्म्मे महेशि ! स्यात् सत्यवादी जितेन्द्रियः।
परोपकारनिरतो निर्विकारः सदाशयः ॥ ९९ ॥
मात्सर्य्यहीनोऽदम्भी च दयावान् शुद्धमानसः।
मातापित्रोः प्रीतिकारी तयोः सेवनतत्परः ॥ १०० ॥
ब्रह्मश्रोता ब्रह्ममन्ता ब्रह्मान्वेषणमानसः।
यतात्मा दृढ़बुद्धिः स्यात् साक्षाद्ब्रह्मेति भावयन् ॥१०१॥
न मिथ्याभाषणं कुर्य्यान्न परानिष्टचिन्तनम्।
परस्त्रीगमनञ्चैव ब्रह्ममन्त्री विवर्ज्जयेत् ॥ १०२ ॥
तत्सदिति वदेद्देवि ! प्रारम्भे सर्वकर्म्मणाम्।

पुण्येत्यादि। सर्वा अपुण्या अपि क्रियाः पुण्यायन्ते पुण्या इवाचरन्तीत्यर्थः ॥ ९६ ॥

किमित्यादि। विदुषः सर्वं ब्रह्मैवेति जानतः स्वेच्छाचार एव विधिः ॥ ९७ ॥

अस्य ब्रह्मनिष्ठस्य ॥ ९८ ॥

अस्मिन्नित्यादि। सदाशयः साध्वभिप्रायः ॥ ९९ ॥

मात्सर्य्यहीनः अन्यशुभद्वेषरहितः। अदम्भी कपटशून्यः। तयोः मातापित्रोः ॥ १०० ॥

ब्रह्मेत्यादि यतात्मा संयतचित्तः ब्रह्म साक्षादस्मीति भावयन् चिन्तयन् ब्रह्मार्पणमस्त्विति वाक्यम् ॥ १०१ । १०२ । १०३ ॥

ब्रह्मार्पणमस्तु वाक्यं पानभोजनकर्म्मणः ॥ १०३ ॥
येनोपायेन मर्त्यानां लोकयात्रा प्रसिद्ध्यति ।
तदेव कार्य्यं ब्रह्मज्ञैरिदं धर्म्मं सनातनम् * ॥ १०४ ॥
अथ सन्ध्याविधिं वक्ष्ये ब्रह्ममन्त्रस्य शाम्भवि ! ।
यां कृत्वा ब्रह्मसम्पत्तिं लभन्ते भुवि मानवाः ॥ १०५ ॥
प्रातर्मध्याह्नसायाह्ने यथादेशे यथासने ।
पूर्ववत् परमं ब्रह्म ध्यात्वा साधकसत्तमः ॥ १०६ ॥
अष्टोत्तरशतं देवि ! गायत्रीजपमाचरेत् ।
जपं समर्प्य विधिवत् पूर्ववत् प्रणमेत् सुधीः ॥ १०७ ॥
एषा सन्ध्या मया प्रोक्ता सर्वथा ब्रह्म साधने ।
यदनुष्ठानतो मन्त्री शुद्धान्तःकरणो भवेत् ॥ १०८ ॥
गायत्रीं शृणु चार्वङ्गि ! सर्वपापप्रणाशिनीम् ।
परमेश्वरं ङेऽन्तमुक्त्वा विद्महे तदनन्तरम् ॥ १०९ ॥
परतत्त्वाय पदतो धीमहीति वदेत् प्रिये ! ।
तदनन्तरमीशानि ! तन्नो ब्रह्म प्रचोदयात् ॥ ११० ॥

लोकयात्रा लोकनिर्वाहः ॥ १०४ ॥

अथेति । यां सन्ध्याम् ब्रह्मसम्पत्तिम् ब्रह्मरूपां सम्पदम् ॥१०५॥

तत्सन्ध्याविधिमेवाह प्रातरित्यादिना ॥ १०६ । १०७ ॥

यदनुष्ठानतः यदाचरणतः ॥ १०८ ॥

तां ब्रह्मगायत्रीमेवाह परमेश्वरमित्यादिना सार्द्धेन । हे प्रिये ! ईशानि ! ङेऽन्तं ङेविभक्त्यन्तं परमेश्वरं पदमुक्त्वा विद्महे इति पदं वदेत् । तदनन्तरं विद्महे इति पदानन्तरं परतत्त्वायेति पदं वदेत् । परतत्त्वायेति पदतः परं धीमहीति पदं वदेत् । तदनन्तरं धीमहीति

---

* इदं कार्य्यसमापनम् इति वा पाठः ।

इयं श्रीब्रह्मगायत्री चतुर्वर्गप्रदायिनी
पूजनं यजनञ्चैव स्नानं पानञ्च भोजनम् ॥ १११ ॥
यद्यत्कर्म्म प्रकुर्व्वीत ब्रह्ममन्त्रेण साधयेत् ।
ब्राह्मे मुहूर्त्ते चोत्थाय प्रणम्य ब्रह्मदं गुरुम् ॥ ११२ ॥
ध्यात्वा च परमं ब्रह्म यथाशक्ति मनुं स्मरेत् ।
पूर्व्ववत् प्रणमेद् ब्रह्म प्रातःकृत्यमिदं स्मृतम् ॥ ११३ ॥
द्वात्रिंशता सहस्रेण जपेनास्य पुरस्क्रिया ।
तद्दशांशेन हवनं तर्पणं तद्दशांशतः ॥ ११४ ॥
सेचनं तद्दशांशेन तद्दशांशेन सुन्दरि ! ।
ब्राह्मणान् भोजयेन्मन्त्री पुरश्चरणकर्म्मणि ॥ ११५ ॥
भक्ष्याभक्ष्यविचारोऽत्र त्याज्यं ग्राह्यं न विद्यते ।
न कालशुद्धिनियमो न वा स्थाननिरूपणम् ॥ ११६ ॥

यदानन्तरं तन्नो ब्रह्म प्रचोदयादिति वदेत् । ततश्च परमेश्वराय विद्महे परतत्त्वाय धीमहि तन्नो ब्रह्म प्रचोदयादित्याकारिका ब्रह्मगायत्री सम्पन्नासीत् । ब्रह्मगायत्र्यर्थस्तु परतत्त्वाय परमेश्वराय परतत्त्वं परमेश्वरमाप्तं यद्ब्रह्म वयं विद्महे मन्यामहे धीमहि चिन्तयामश्च तद्ब्रह्म नोऽस्मान् प्रचोदयात् प्रेरयेत् धर्म्मार्थकाममोक्षेषु विनियोजयेदित्यर्थ इति ॥ १०९ । ११० । १११ ॥

साधयेत् तत्तत्कर्म्मेति शेषः ।

अथ प्रातःकृत्यमाह ब्राह्मे इत्यादिना । मनुम् ओं सच्चिदेकं ब्रह्मेति मन्त्रम् ॥ ११२ ॥

अथ ब्रह्ममन्त्रस्य पुरश्चरणविधिमाह द्वात्रिंशतेत्यादिना । अस्य ब्रह्ममन्त्रस्य पुरस्क्रिया पुरश्चरणम् । तद्दशांशेन जपदशांशेन हवनं होमः तद्दशांशतः होमदशांशतः ॥ ११४ ॥

तद्दशांशेन तर्पणदशांशेन सेचनं मार्जनम् । तद्दशांशेन

अभुक्तो वापि भुक्तो वा स्नातो वाऽस्नात एव वा ।
साधयेत् परमं मन्त्रं स्वेच्छाचारेण साधकः ॥ ११७ ॥
विनायासं विना क्लेशं स्तोत्रञ्च कवचं विना ।
विना न्यासं विना मुद्रां विना सेतुं वरानने ! ॥ ११८ ॥
विना चौरगणेशादिजपञ्च कुल्लुकां विना ।
अकस्मात् परमब्रह्मसाक्षात्कारी भवेत् ध्रुवम् ॥ ११९ ॥
संकल्पोऽस्मिन् महाकल्पे मानसः परिकीर्त्तितः ।
साधने ब्रह्ममन्त्रस्य भावशुद्धिर्विधीयते ॥ १२० ॥
सर्वं ब्रह्ममयं देवि ! भावयेत् ब्रह्मसाधकः ।
न चास्य प्रत्यवायोऽस्ति नाङ्गवैगुण्यमेव च ।
महामनोः साधने तु व्यङ्गं साङ्गायते ध्रुवम् ॥ १२१ ॥
कलौ पापयुगे घोरे तपोहीनेऽतिदुस्तरे ।
निस्तारबीजमेतावत् ब्रह्ममन्त्रस्य साधनम् ॥ १२२ ॥
साधनानि बहूक्तानि नानातन्त्रागमादिषु ।
कलौ दुर्बलजीवानामसाध्यानि महेश्वरि ! ॥ १२३ ॥

मांजमहणीयेन । भक्ष्येत्यादि अत्र ब्रह्ममन्त्रस्य पुरश्चरणकर्म्मणि ॥ ११५ । ११६ ॥

अभुक्त इत्यादि न भुक्तमस्यास्तीति अभुक्तः । अर्श आदिभ्योऽच् ॥ ११७ ॥

सेतुम् जपविशेषम् ॥ ११८ ॥

कुल्लुकामपि जपविशेष एव तामपि विना भावयेत् चिन्तयेत् ॥ ११९ । १२० ॥

न चेत्यादि । अस्य महामनोरङ्गवैगुण्यादितः प्रत्यवायो न भवेत् । व्यङ्गम् अङ्गहीनमपि ॥ १२१ । १२२ ॥

अल्पायुषः स्वल्पसत्त्वा अन्नाधीनासवः प्रिये ! ।
लुब्धा धनार्ज्जने व्यग्राः सदा चञ्चलमानसाः ॥ १२४ ॥
सामाधावस्थिरधियो योगक्लेशासहिष्णवः ।
तेषां हिताय मोक्षाय ब्रह्ममार्गोऽयमीरितः ॥ १२५ ॥
कलौ नास्त्येव नास्त्येव सत्यं सत्यं मयोच्यते ।
ब्रह्मदीक्षां विना देवि ! कैवल्याय सुखाय च ॥ १२६ ॥
प्रातःकृत्यं प्रातरेव सन्ध्यां कुर्य्यात् त्रिकालतः ।
मध्याह्ने पूजनं कुर्य्यात् सर्वतन्त्रेष्वयं विधिः ।
परब्रह्मोपासने तु साधकेच्छाविधिः शिवे ! ॥ १२७ ॥
विधयः किङ्करा यत्र निषेधाः प्रभवोऽपि न ।
स्वेच्छाचारेणेष्टसिद्धिस्तद्विना कोऽन्यमाश्रयेत् ॥१२८॥
ब्रह्मज्ञानिगुरुं प्राप्य शान्तं निश्चलमानसम् ।
धृत्वा तच्चरणाम्भोजं प्रार्थयेद् भक्तिभावतः ॥ १२९ ॥

नन्वनेकेषु तन्त्रागमादिषु निस्तारबीजानि बहूनि साधनानि भवतैवोक्तानि तत् कथमुच्यते कलौ ब्रह्ममन्त्रस्य साधनमेव निस्तारबीजमित्यत आह साधनानीत्यादि । अत्र यद्यपि तथापीति इयमध्याहार्य्यम् ॥ १२३ ॥

असाध्यत्वे हेतुं दर्शयन्नाह अल्पायुष इत्यादि । यत इति शेषः । अन्नाधीनासवः अन्नवशीभूतप्राणाः ॥ १२४ ॥

समाधावित्यादि । समाधिश्चित्तवृत्तिनिरोधः तत्र योगक्लेशासहिष्णवः निस्तारोपायभूततत्तत्कर्मसाधनहेतुकक्लेशसहनाशीलाः ॥ १२५ ॥

कलौ युगे ब्रह्मदीक्षाया अन्या काचिदपि दीक्षा मोक्षाय सुखाय च नैवास्तीति प्रतिज्ञां कुर्वन्नाह कलावित्यादि ॥ १२६ ॥

साधकेच्छैव विधिः ॥ १२७ ॥

यत्र परब्रह्मोपासने ॥ १२८ ॥

करुणामय ! दीनेश ! तवाहं शरणागतः ।
त्वत्पदाम्भोजच्छायां देहि मूर्द्ध्नि यशोधन ! ॥ १३० ॥
इति प्रार्थ्य गुरुं पश्चात् पूजयित्वा स्वशक्तितः ।
कृताञ्जलिपुटो भूत्वा तूष्णीं तिष्ठेत् गुरोः पुरः ॥ १३१ ॥
गुरुर्विचार्य्य विधिवत् यथोक्तं शिष्यलक्षणम् ।
आहूय कृपया दद्यात् सत्शिष्याय महामनुम् ॥ १३२ ॥
उपविश्यासने ज्ञानी प्राङ्मुखो वाप्युदङ्मुखः ।
स्ववामे शिष्यमानीय कारुण्येनावलोकयेत् ॥ १३३ ॥
ततः शिष्यस्य शिरसि ऋषिन्यासपुरःसरम् ।
जपेदष्टशतं मन्त्रं साधकस्येष्टसिद्धये ॥ १३४ ॥
दक्षकर्णे ब्राह्मणानामितरेषाञ्च वामतः ।
सप्तधा श्रावयेत् मन्त्रं सद्गुरुः करुणानिधिः ॥ १३५ ॥
उपदेशविधिः प्रोक्तो ब्रह्ममन्त्रस्य कालिके ! ।
नात्र पूजाद्यपेक्षास्ति संकल्पं मानसञ्चरेत् ॥ १३६ ॥
ततः श्रीगुरुपादाब्जे दण्डवत् पतितं शिशुम् ।

अथ ब्रह्ममन्त्रोपदेशविधिमभिधातुमुपक्रमते ब्रह्मज्ञानीत्यादि । शान्तम् रागद्वेषादिशून्यम् भक्तिभावतः भक्तियोगेन ॥ १२९ ॥

किं प्रार्थयेदित्यपेक्षायामाह करुणामयेत्यादि ॥ १३० । १३१ ॥

गुरुरित्यादि । यथोक्तं शिष्यलक्षणम् शान्तो दान्तो विनीतश्चेत्यादिकम् ॥ १३२ ॥

उपविश्येत्यादि । ज्ञानी ब्रह्मज्ञानवान् गुरुः कारुण्येन कृपायुक्तया दृष्ट्या ॥ १३३ ॥

तत इत्यादि । मन्त्रम् ओं सच्चिदेकं ब्रह्मेत्याद्यात्मकम् ॥ १३४ ॥

दक्षेत्यादि । वामतः वामे कर्णे मन्त्रम् पूर्वोक्तमेव ॥ १३५ ॥

उपदेशेति । अत्र ब्रह्ममन्त्रोपदेशविधौ चरेत् कुर्यात् ॥ १३६ ॥

उत्थापयेद् गुरुः खेशादिमं मन्त्रमुदीरयन् ॥ १३७ ॥
उत्तिष्ठ वत्स ! मुक्तोऽसि ब्रह्मज्ञानपरो भव ।
जितेन्द्रियः सत्यवादी बलारोग्यं सदास्तु ते ॥ १३८ ॥
तत उत्थाय गुरवे यथाशक्त्यनुसारतः ।
दक्षिणां स्वं फलं वापि दद्यात् साधकसत्तमः ।
गुरोराज्ञावशीभूत्वा विहरेद्देववद् भुवि ॥ १३९ ॥
मन्त्रग्रहणमात्रेण तदात्मा तन्मयो भवेत् ।
ब्रह्मभूतस्य देवेशि ! किमन्यैर्बहुसाधनैः ।
इति संक्षेपतो ब्रह्मदीक्षा ते कथिता प्रिये ! ॥ १४० ॥
गुरुकारणमात्रेण ब्रह्मदीक्षां समाचरेत् ॥ १४१ ॥
शाक्ताः शैवा वैष्णवाश्च सौरा गाणपतास्तथा ।
विप्रा विप्रेतराश्चैव सर्व्वेऽप्यत्राधिकारिणः ॥ १४२ ॥
अहं मृत्युञ्जयो देवि ! देवदेवो जगद्गुरुः ।
स्वेच्छाचारी निर्विकल्पो मन्त्रस्यास्य प्रसादतः ॥ १४३ ॥

तत इत्यादि । ततः मन्त्रश्रवणात् परतः [illegible] शिष्यम् ॥ १३७ ॥
तं मन्त्रमेवाह उत्तिष्ठ वत्सेति ॥ १३८ ॥
तत इति । स्वं धनम् आत्मानं वा ॥ १३९ ॥
मन्त्रेत्यादि । तदात्मा ब्रह्मनिष्ठान्तःकरणः तन्मयः ब्रह्मस्वरूपः ॥ १४० ॥

ब्रह्ममन्त्रग्रहणे कालादिनियमो नास्तीति प्रतिपादयन्नाह गुर्वित्यादि ॥ १४१ ॥

उपदिष्टानामनुपदिष्टानाञ्च ब्राह्मणादीनां सर्वेषामपि ब्रह्ममन्त्रेऽधिकारोऽस्तीत्याह शाक्ता इत्यादिना । अत्र ब्रह्ममन्त्रे ॥ १४२ ॥

एतन्मन्त्रप्रसादादेव मयि मृत्युञ्जयित्वादिकमासीदित्याह अहमित्यादिना । अहं मृत्युञ्जयोऽभूवमिति शेषः ॥ १४२ ॥

अमुमेव ब्रह्ममन्त्रं मत्तः पूर्व्वमुपासिताः।
ब्रह्मा ब्रह्मर्षयश्चापि देवा देवर्षयस्तथा ॥ १४४ ॥
देवर्षिवक्त्रान्मुनयस्तेभ्यो राजर्षयः प्रिये!।
उपासिता ब्रह्मभूताः परमात्मप्रसादतः ॥ १४५ ॥
आम्नाये मनौ महेशानि विचारो नास्ति कुत्रचित्।
स्वीयमन्त्रं गुरुर्दद्यात् शिष्येभ्यो ह्यविचारयन् ॥ १४६ ॥
पितापि दीक्षयेत् पुत्रान् भ्राता भ्रातॄन् पतिः स्त्रियम्।
मातुलो भागिनेयांश्च नप्तॄन् मातामहोऽपि च ॥ १४७ ॥
स्वमन्त्रदाने यो दोषस्तथा पित्रादिदीक्षया।
सिद्धे ब्रह्ममहामन्त्रे तद्दोषो नैव विद्यते ॥ १४८ ॥
ब्रह्मज्ञानिमुखात् श्रुत्वा येन केन विधानतः।
ब्रह्मभूतो नरः पूतः पुण्यपापैर्न लिप्यते ॥ १४९ ॥

एतन्मन्त्रोपासनादेव विरिञ्च्यादिषु ब्रह्मभूतत्वं जातमित्याह अमुमित्यादिना। मन्त्रं गृहीत्वेति शेषः। उपासिताः श्रद्धया अनुष्ठितवन्तः। गत्यर्थाकर्म्मकश्लिषशीङित्यादिना कर्त्तरि क्तः। ब्रह्मर्षयो भृग्वादयः। देवा इन्द्रादयः। देवर्षयो नारदादयः ॥ १४४ ॥

देवर्षिवक्त्रात् नारदमुखात् मुनयो व्यासादयः राजर्षयोः जनकादयः ॥ १४५ ॥

आत्मनापगृहीतोऽप्ययं ब्रह्ममन्त्रो गुरुणा शिष्येभ्यो देयः पित्रादिभिरपि पुत्रादिभ्यो देय इत्याह आम्नाये इत्यादिभ्यां द्वाभ्याम्। अविचारयन् स्वकीयमन्त्रदाननिमित्तकं दोषमगणयन् ॥ १४६ । १४७ ॥

ननु पितुर्मन्त्रं न गृह्णीयात्तथा मातामहस्य चेत्यादिनिषेधवाक्यतया पित्रादिभ्यो ग्राह्यं मन्त्रं गृह्णतां पुत्रादीनामात्मीयमन्त्रदाने तत्तच्छिष्यवाक्यमनादृत्य शिष्येभ्यः स्वयं ब्रह्ममन्त्रं ददतो गुरोश्च प्रत्यवायभागित्वं स्यात्तत्राह स्वमन्त्रदाने इत्यादि। यो दोषः उक्त इति शेषः ॥ १४८ ॥ १४९ ॥

ब्रह्ममन्त्रोपासिता ये गृहस्था ब्राह्मणादयः ।
स्वस्ववर्णोत्तमास्ते तु पूज्या मान्या विशेषतः ॥ १५० ॥
ब्राह्मणा यतयः साक्षादितरे ब्राह्मणैः समाः ।
तस्मात् सर्व्वे पूजयेयुर्ब्रह्मज्ञान् ब्रह्मदीक्षितान् ॥ १५१ ॥
ये च तानवमन्यन्ते ते नरा ब्रह्मघातिनः ।
पतन्ति घोरनरके यावद्भास्करतारकम् ॥ १५२ ॥
यत् पापं स्त्रीवधे प्रोक्तं यत्पापं भ्रूणघातने ।
तस्मात् कोटिगुणं पापं ब्रह्मोपासकनिन्दनात् ॥ १५३ ॥
यथा ब्रह्मोपदेशेन विमुक्तः सर्वपातकैः ।
गच्छन्ति ब्रह्मसायुज्यं तथैव तव साधनात् ॥ १५४ ॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे श्रीमदाद्यासदाशिवसंवादे जीवनिस्तारोपायप्रश्ने परब्रह्मोपदेशकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

ब्रह्ममन्त्रेत्यादि । यत इति शेषः ब्रह्ममन्त्रमुपासिताः ब्रह्ममन्त्रोपासिता गम्यादीनामुपसंख्यानमिति द्वितीयातत्पुरुषः ॥ १५० ॥

ब्राह्मणाः साक्षात् यतयः परिव्राजिका भवेयुः इतरे क्षत्रियादयः ॥ १५१ ॥

अथ ब्रह्मोपासकान् जनान्निन्दतां जनानामखिलपातकाश्रयत्वमित्याह ये च तानित्यादिभ्यां द्वाभ्याम् । तान् ब्रह्मदीक्षितान् अवमन्यन्ते अनाद्रियन्ते भास्करतारकं यावत्तिष्ठेत्तावत् भ्रूणघातने गर्भघातने ॥ १५२ । १५३ ॥

ब्रह्मसायुज्यम् ब्रह्मत्वम् ॥ १५४ ॥

इति श्रीमहानिर्व्वाणतन्त्रटीकायां तृतीयोऽध्यायः ।

# चतुर्थोल्लासः ।

———०ं०ं०———

श्रीदेव्युवाच ।

श्रुत्वा सम्यक् परब्रह्मोपासनं परमेश्वरी ।
परमानन्दसम्पन्ना शङ्करं परिपृच्छति ॥ १ ॥
कथितं यत्त्वया नाथ ! ब्रह्मोपासनमुत्तमम् ।
सर्वलोकप्रियकरं साक्षाद्ब्रह्मपदप्रदम् ॥ २ ॥
तेजोवृद्धिबलैश्वर्य्यदायकं सुखसाधनम् ।
हृष्टास्मि जगदीशान ! तववाक्यामृतप्लुता ॥ ३ ॥
यदुक्तं करुणासिन्धो ! यथा ब्रह्मनिषेवणात् ।
गच्छन्ति ब्रह्मसायुज्यं तथैव मम साधनात् ॥ ४ ॥
एतद्वेदितुमिच्छामि मदीयसाधनं परम् ।

परमेश्वरी शङ्करं किं परिपृच्छतीत्यपेक्षायामाह । कथितं यदित्यादि ॥ १ । २ ॥

तेज इत्यादि । हृष्टास्मि तद् ब्रह्मोपासनं श्रुत्वेति शेषः । तव वागमृतप्लुता तावकीनवागरूपपीयूषे निमग्ना ॥ ३ ॥

यदुक्तमित्यादि । हे करुणासिन्धो ! कृपासमुद्र ब्रह्मनिषेवणात् परब्रह्मण उपासनाद्यथा जना ब्रह्मसायुज्यं ब्रह्मत्वं गच्छन्ति प्राप्नुवन्ति तथैव मम साधनादपि ब्रह्मत्वं प्राप्नुवन्तीति यत्त्वयोक्तं तत्र किं कारणमस्तीत्येतद्वेदितुं ज्ञातुमहमिच्छामीति द्वितीयश्लोकगतैः पदैरन्वयः ॥ ४ ॥

ब्रह्मसायुज्यजननं यत्त्वया कथितं प्रभो ! ॥ ५ ॥
विधानं कीदृशं तस्य साधनं केन वर्त्मना ।
मन्त्रः को वात्र विहितो ध्यानपूजादिकञ्च किम् ॥ ६ ॥
सविशेषं सावशेषमामूलाद्वक्तुमर्हसि ।
मम प्रीतिकरं देव ! लोकानां हितकारकम् ।
को ह्यन्यस्त्वामृते प्रभो ! भवव्याधिभिषग्गुरुः ॥ ७ ॥
इति देव्या वचः श्रुत्वा देवदेवो महेश्वरः ।
उवाच परया प्रीत्या पार्व्वतीं पार्व्वतीपतिः ॥ ८ ॥

श्रीसदाशिव उवाच ।

शृणु देवि ! महाभागे तवाराधनकारणम् ।
तव साधनतो येन ब्रह्मसायुज्यमश्नुते ॥ ९ ॥
त्वं परा प्रकृतिः साक्षाद् ब्रह्मणः परमात्मनः ।

एतदित्यादि । हे प्रभो ! ब्रह्मसायुज्यजननं ब्रह्मत्वोत्पादकमतएव परं श्रेष्ठं यन्मदीयं साधनं त्वया कथितं तत्र कीदृशं वर्त्तते एतदपि वेदितुमिच्छामि ॥ ५ ॥

तस्य मदीयसाधनस्य । अत्र मम साधने ॥ ६ ॥

सविशेषमित्यादि । सावशेषम् अवशेषपर्य्यन्तम् आमूलात् मूलमारभ्य त्वामृते त्वां विना भवव्याधिभिषग्गुरुः जन्मरूपस्य व्याधेश्चिकित्सकराजः ॥ ७ ॥

इतीत्यादि । उवाच उत्तरमिति शेषः ॥ ८ ॥

पार्वतीपतिः पार्वतीं किमुत्तरमुवाचेत्यपेक्षायामाह शृणु देवीत्यादि । हे देवि ! हे महाभागे ! महाभाग्यशालिनि ! येन कारणेन तव साधनतो जनो ब्रह्मसायुज्यं ब्रह्मत्वमश्नुते लभते तद्यथा कथमानं तवाराधनकारणं त्वं शृणु इत्यन्वयः ॥ ९ ॥

अथ परमेश्वरीसाधनस्य ब्रह्मसायुज्यजनकत्वे तद्रूपं ब्रह्मा-

त्वत्तो जातं जगत् सर्वं त्वं जगज्जननी शिवे ! ॥ १० ॥
महदाद्यणुपर्यन्तं यदेतत् सचराचरम् ।
त्वयैवोत्पादितं भद्रे ! त्वदधीनमिदं जगत् ॥ ११ ॥
त्वमाद्या सर्वविद्यानामस्माकमपि जन्मभूः ।
त्वं जानासि जगत् सर्वं न त्वां जानाति कश्चन ॥१२॥
त्वं काली तारिणी दुर्गा षोड़शी भुवनेश्वरी ।
धूमावती त्वं बगला भैरवी छिन्नमस्तका ॥ १३ ॥
त्वमन्नपूर्णा वाग्देवी त्वं देवि ! कमलालया ।
सर्वशक्तिस्वरूपा त्वं सर्वदेवमयी तनुः ॥ १४ ॥
त्वमेव सूक्ष्मा स्थूला त्वं व्यक्ताव्यक्तस्वरूपिणी ।
निराकारापि साकारा कस्त्वां वेदितुमर्हति ॥ १५ ॥

रूपमेव कारणमस्तीत्यभिधातुमुपक्रमते त्वं परा प्रकृतिरित्यादि। यत इति शेषः । परमा माया शक्तिर्वा यस्य स परमः अतति सर्वं व्याप्नोतीत्यात्मा परमश्चासावात्मा चेति परमात्मा तस्य परमात्मनो ब्रह्मणो यतस्त्वं साक्षात् परात्युत्कृष्टा प्रकृतिरसीत्येवमन्वयः कार्य्यः ॥ १० ॥

महत्तत्त्वमादिर्यस्य तन्महदादि ॥ ११ ॥

किञ्च त्वमाद्येत्यादि । आद्या आदिभूता न त्वन्येषामेव जगतां जननी त्वमसि किन्त्वस्माकं शङ्करादीनामपि जन्मभूरुत्पत्तिस्थानं त्वम् । जगज्जननीत्वात् सर्वं जगत् त्वं जानासि त्वत्तो जातत्वात् कश्चन अपि त्वां तु न जानाति ॥ १२ ॥

किञ्च त्वं कालीत्यादि ॥ १३ ॥

वाग्देवी सरस्वती कमलालया लक्ष्मीः । तनुः तवेति शेषः ॥१४॥

त्वमित्यादि । सूक्ष्मा परमाणुरूपा स्थूलरूपत्वात् व्यक्तम् परमाणुरूपत्वादव्यक्तं च स्वरूपं विद्यते यस्याः सा त्वम् । वस्तुतो

उपासकानां कार्य्यार्थं श्रेयसे जगतामपि ।
दानवानां विनाशाय धत्से नानाविधास्तनूः ॥ १६ ॥
चतुर्भुजा त्वं द्विभुजा षड्भुजाष्टभुजा तथा ।
त्वमेव विश्वरक्षार्थं नानाशस्त्रास्त्रधारिणी ॥ १७ ॥
तत्तद्रूपविभेदेन मन्त्रयन्त्रादिसाधनम् ।
कथितं सर्वतन्त्रेषु भावाश्च कथितास्त्रयः ॥ १८ ॥
पशुभावः कलौ नास्ति दिव्यभावोऽपि दुर्लभः ।
वीरसाधनकर्म्माणि प्रत्यक्षाणि कलौ युगे ॥ १९ ॥
कुलाचारं विना देवि ! कलौ सिद्धिर्न जायते ।
तस्मात् सर्वप्रयत्नेन साधयेत् कुलसाधनम् ॥ २० ॥
कुलाचारेण देवेशि ! ब्रह्मज्ञानं प्रजायते ।
ब्रह्मज्ञानयुतो मर्त्त्यो जीवन्मुक्तो न संशयः ॥ २१ ॥
ज्ञानेन मेध्यमखिलममेध्यं ज्ञानतो भवेत् ।
ब्रह्मज्ञाने समुत्पन्ने मेध्यामेध्यं न विद्यते ॥ २२ ॥
यो जानाति परं ब्रह्म सर्वव्यापि सनातनम् ।

निराकारापि आकृतिशून्याऽपि त्वं साकारा आकारविशिष्टा भवसि । अतः त्वां वेदितुं ज्ञातुं कोऽर्हति योग्यो भवति न कोऽपीत्यर्थः ॥ १५ ॥

ननु वस्तुतो यदि निराकारैवाहं तर्हि किमर्थं नानाविधमाकारं दधामि तत्राह उपासकानामित्यादि ॥ १६ ॥

ता नानाविधास्तनूरेव दर्शयन्नाह चतुर्भुजेत्यादि ॥ १७ । १८ ॥

अथ पशुभावादिप्रसङ्गात् कलौ युगे वीरभावस्यैव विद्यमानत्वं न प्रत्यक्षफलदायकानि वीरसाधनकर्माण्येव साधनीयानीत्येवाह पशुभाव इत्यादिभिः ॥ १९—२१ ॥

मेध्यम् पवित्रम् ॥ २२ ॥

किमन्यच्चेष्टं तथापि सर्वं ब्रह्मेति जानतः ॥ २३ ॥
त्वं सर्वरूपिणी देवी सर्वेषां जननी परा ।
तुष्टायां त्वयि देवेशि ! सर्वेषां तोषणं भवेत् ॥ २४ ॥
सृष्टेरादौ त्वमेकासीत् तमोरूपमगोचरम ।
त्वत्तो जातं जगत् सर्वं परब्रह्मसिसृक्षया ॥ २५ ॥
महत्तत्त्वादिभूतान्तं त्वया सृष्टमिदं जगत् ।
निमित्तमात्रं तद्ब्रह्म सर्वकारणकारणम ॥ २६ ॥
सद्रूपं सर्वतोव्यापि सर्वमावृत्य तिष्ठति ।
सदैकरूपं चिन्मात्रं निर्लिप्तं सर्ववस्तुषु ॥ २७ ॥
न करोति न चाश्नाति न गच्छति न तिष्ठति ।
सत्यं ज्ञानमनाद्यन्तमवाङ्मनसगोचरम् ॥ २८ ॥
तस्येच्छामात्रमालम्ब्य त्वं महायोगिनी परा ।
करोषि पासि हंस्यन्ते जगदेतच्चराचरम् ॥ २९ ॥
तव रूपं महाकालो जगत्संहारकारकः ।
महासंहारसमये कालः सर्वं ग्रसिष्यति ॥ ३० ॥

सनातनम् सर्वदैकरूपम् ॥ २३ । २४ ॥

अगोचरम् आकृतिशून्यत्वात् वाङ्मनसयोरप्यविषयभूतम् ॥ २५ ॥

महदित्यादि भूतान्तं पृथिवीपर्य्यन्तम् सर्वकारणकारणम् सर्वेषां महदादीनां कारणानामपि कारणं निमित्तभूतम् ॥ २६ ॥

सद्रूपमित्यादि । सद्रूपं सर्वदा स्थायिस्वरूपम् सर्वमावृत्य निःशेषं पदार्थमावेष्ट्य सर्ववस्तुषु स्थितमपि निर्लिप्तमसम्बद्धम् ॥ २७ ॥

नेत्यादि । न चाश्नाति न च भुङ्क्ते सत्यम् यथार्थस्वरूपम् ज्ञानं सकलपदार्थविबोधः तत्स्वरूपम् अनाद्यन्तम् न विद्यते आदिः कारणम् अन्तो नाशश्च यस्य तथाभूतम् ॥ २८ ॥

तदिच्छामात्रम् [illegible] ॥

कलनात् सर्व्वभूतानां महाकालः प्रकीर्त्तितः ।
महाकालस्य कलनात् त्वमाद्या कालिका परा ॥ ३१ ॥
कालसंग्रसनात् काली सर्वेषामादिरूपिणी ।
कालत्वादादिभूतत्वादाद्या कालीति गीयते ॥ ३२ ॥
पुनः स्वरूपमासाद्य तमोरूपं निराकृतिः ।
वाचातीतं मनोगम्यं त्वमेकैवावशिष्यसे ॥ ३३ ॥
साकारापि निराकारा मायया बहुरूपिणी ।
त्वं सर्व्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका ॥३४ ॥
अतस्ते कथितं भद्रे ! ब्रह्ममन्त्रेण दीक्षितः ।
यत् फलं समवाप्नोति तत् फलं तव साधनात् ॥ ३५ ॥
नानाचारेण भावेन देशकालाधिकारिणाम् ।
विभेदात् कथितं देवि ! क्वचिद्गुप्तसाधनम् ॥ ३६ ॥

कलनात् ग्रसनात् ॥ ३१ ॥

आदिरूपिणी कारणस्वरूपा ॥ ३२ ॥

पुनरित्यादि । निराकृतिः आकारशून्यम् वाचातीतम् अतिक्रान्तवाक् मनोऽगम्यम् मनसोऽप्यप्राप्यम् ॥ ३३ ॥

साकारेत्यादि । सर्वादिः सर्वेषां कारणभूता सर्वकारणत्वादेव न विद्यते आदिः कारणं यस्यास्तथाभूता त्वमसि ॥ ३४ ॥

तव साधनतो ब्रह्मत्वलाभे इदमेव कारणमस्तीत्याह अत इत्यादिना ॥ ३५ ॥

अथ साधनं केन वर्त्मनेति मदीयं साधनं परं कीदृशं भवति इति च यत् परमेश्वर्या पृष्टं तत्र मत्कथितेनैव मार्गेण सर्वं कर्म साधनीयं मदुक्तवर्त्मना नित्यनैमित्तिककर्मणां यत् साधनं तदेव तावकीनं साधनमित्युत्तरं दातुं प्रक्रमते नानाचारेणेत्यादि । नाना-

ये यत्राभिरता मर्त्त्यास्ते तत्र फलभागिनः ।
भविष्यन्ति तरिष्यन्ति मानुषा गतकिल्बिषाः ॥ ३७ ॥
बहुजन्मार्जितैः पुण्यैः कुलाचारे मतिर्लभेत् ।
कुलाचारेण पूतात्मा साक्षाच्छिवमयो भवेत् ॥ ३८ ॥
यत्रास्ति भोगबाहुल्यं तत्र योगस्य का कथा ।
योगेऽपि भोगविरहः कौलस्तूभयमश्नुते ॥ ३९ ॥
एकस्मिन् कुलतत्त्वज्ञः पूजितो येन सुव्रते ! ।
सर्व्वे देवाश्च देव्यश्च पूजिता नात्र संशयः ॥ ४० ॥
पृथिवीं हेमसम्पूर्णां दत्त्वा यत् फलमाप्नुयात् ।
तस्मात् कोटिगुणं पुण्यं लभते कौलिकार्च्चनात् ॥४१॥
श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते ।
कुलाचारविहीनस्तु ब्राह्मणः श्वपचाधमः ॥ ४२ ॥
कौलधर्म्मात् परो धर्म्मो नास्ति ज्ञाने तु मामके ।
यस्यानुष्ठानमात्रेण ब्रह्मज्ञानी नरो भवेत् ॥ ४३ ॥
सत्यं ब्रवीमि ते देवि ! हृदि कृत्वावधारय ।
सर्व्वधर्म्मोत्तमात् कौलात् परो धर्म्मो न विद्यते ॥४४॥

यत्र गुप्तसाधने व्यक्तसाधने वा ॥ ३७ ॥

अथ प्रबले कलौ युगे कुलमार्गेणैव सर्वं कर्म साधनीयमिति प्रतिपादनाय तस्यैव मार्गं स्तोतुमना महादेवः पूर्वं तन्मार्गवर्त्तिनं जनं प्रशंसति । बहुजन्मेत्यादिभिः साक्षाच्छिवमयः साक्षाच्छिवस्वरूपः ॥ ३८ ॥

यत्रेति । यत्र साधने भोगविरहः भोगाभावः उभयमश्नुते योगं भोगञ्च लभते ॥ ३९ ॥

पूजिताः स्युरिति शेषः ॥ ४० । ४१ ॥

श्वपच इत्यादि । अतिरिच्यते [illegible] ॥ ४२ ॥

अयन्तु परमो मार्गो गुप्तोऽस्ति पशुसङ्कटे ।
व्यक्तीभविष्यत्यचिरात् संवृत्ते प्रबले कलौ ॥ ४५ ॥
कलिकाले प्रवृत्ते तु सत्यं सत्यं मयोच्यते ।
न स्थास्यति विना कौलान् पशवो मानवा भुवि ॥ ४७ ॥
यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा ।
न स्थास्यति वरारोहे । तदैव प्रबलः कलिः ॥ ४७ ॥
यदा तु पुण्यपापानां परीक्षा वेदसम्भवा ।
न स्थास्यति शिवे ! शान्ते ! तदैव प्रबलः कलिः ॥ ४८ ॥
क्वचिच्छिन्ना क्वचिद्भिन्ना यदा सुरतरङ्गिणी ।
भविष्यति कुलेशानि ! तदैव प्रबलः कलिः ॥ ४९ ॥
यदा तु म्लेच्छजातीया राजानो धनलोलुपाः ।
भविष्यन्ति महाप्राज्ञे ! तदैव प्रबलः कलिः ॥ ५० ॥
यदा स्त्रियोऽतिदुर्दान्ताः कर्कशाः कलहे रताः ।
गर्हिष्यन्ति च भर्त्तारं तदैव प्रबलः कलिः ॥ ५१ ॥
यदा तु मानवा भूमौ स्त्रीजिताः कामकिङ्कराः ।
द्रुह्यन्ति गुरुमित्रादीन् तदैव प्रबलः कलिः ॥ ५२ ॥

कौलधर्मस्य सर्वधर्मोत्तमत्वे हेतुं दर्शयन्नाह यस्यानुष्ठानमात्रेणे त्यादि ॥ ४३ । ४४ ॥

पशुसङ्कटे पशुसमूहे । सम्वृत्ते सम्यक् प्रवृत्ते ॥ ४५ । ४६ ॥

अथ तत्तद्युगविधेयाचारप्रसङ्गेन संक्षेपतः कलियुगप्रद-लतालक्षणानि कथयति यदा त्वित्यादिभिः । हे वरारोहे ! उत्तमे ! ॥ ४७ ॥

शान्ते ! हे संयतचित्ते ! ॥ ४८ ॥

सुरतरङ्गिणी गङ्गा ॥ ४९ ॥

यदा स्त्रियादि । अतिदुर्दान्ताः अतिदुःखेन दम्यन्ते याः तथा-

कुलमार्गेण तत्त्वानि शोधितानि च योगिभिः ।
ये दद्युः सत्यवचसे न हि तान् बाधते कलिः ॥ ६०

हिंसामात्सर्यरहिता दम्भद्वेषविवर्जिताः ।
कुलधर्मेषु निष्ठा ये न हि तान् बाधते कलिः ॥ ६

कौलिकैः सह संसर्गं वसतिं कुलसाधुभिः ।
कुर्वन्ति कौलसेवां ये न हि तान् बाधते कलिः ॥ ६

नानावेशधराः कौलाः कुलाचारेषु निष्ठिताः ।
सेवन्ते त्वां कुलाचारैर्न हि तान् बाधते कलिः ॥ ६

स्नानं दानं तपस्तीर्थं व्रतं तर्पणमेव च ।
ये कुर्वन्ति कुलाचारैर्न हि तान् बाधते कलिः ॥ ६

जीवसेकादिसंस्काराः पितृश्राद्धादिकाः क्रियाः ।
ये कुर्वन्ति कुलाचारैर्न हि तान् बाधते कलिः ॥ ६

कुलतत्त्वं कुलद्रव्यं कुलयोगिनमेव च ।
नमस्कुर्वन्ति ये भक्त्या न हि तान् बाधते कलिः ॥ ६

कौटिल्यानृतहीनानां स्वच्छानां कुलमार्गिणाम् ।
परोपकारव्रतिनां साधूनां किङ्करः कलिः ॥ ६७ ॥

कुलसाधनसत्याः कुलसाधने यथार्थाभिधायिनः ॥ ५९ ॥

तत्त्वानि मद्यमांसादीनि ॥ ६० ॥

हिंसामात्सर्यरहिताः प्राणवियोगानुकूलव्यापारो हिंसा च
शुभद्वेषो मात्सर्यम् ताभ्यां हीनाः ॥ ६१ ॥

वसतिं निवासम् ॥ ६२–६५ ॥

कुलतत्त्वम् स्त्रीकुसुमादि कुलद्रव्यम् मद्यमांसादि ॥ ६६ ॥

परोपकारव्रतिनाम् परोपकाररूपं व्रतमस्त्येषामिति परोपकार
व्रतिनः तेषाम् ॥ ६७ ॥

कलेर्दोषसमूहस्य महानेको गुणः प्रिये ।
सत्यसङ्कल्पजीवानां यो यः सङ्कल्पमात्रतः ॥ ६८ ॥

अपरे तु युगे देवि ! पुण्यं पापञ्च मानसम् ।
नृणामासीत् कलौ पुण्यं केवलं न तु दुष्कृतम् ॥ ६९ ॥

कुलाचारविहीना ये सततासत्यभाषिणः ।
परद्रोहपरा ये च ते नराः कलिकिङ्कराः ॥ ७० ॥

कुलतत्त्वे सभक्ता ये परयोषित्सु कामुकाः ।
द्वेष्टारः कुलनिष्ठानां ते प्रियाः कलिकिङ्कराः ॥ ७१ ॥

युगाचारप्रसङ्गेन कलेः प्राबल्यलक्षणम् ।
संक्षेपात् कथितं भद्रे ! प्रीतये तव पार्व्वति ! ॥ ७२ ॥

प्रकटेऽत्र कलौ देवि ! सर्वे धर्म्माश्च दुर्बलाः ।
स्थास्यत्येकं सत्यमात्रं तस्मात् सत्यमयो भवेत् ॥ ७३ ॥

सत्यधर्मं समाश्रित्य यत् कर्म्म कुरुते नरः ।
तदेव सफलं कर्म्म सत्यं जानीहि सुव्रते ! ॥ ७४ ॥

न हि सत्यात् परो धर्मो न पापमनृतात् परम् ।
तस्मात् सर्व्वात्मना मर्त्त्यः सत्यमेकं समाश्रयेत् ॥ ७५ ॥

कलेरिति । दोषसमूहस्य दोषसमूहवतः ॥ ६८ ॥

अपरे [illegible] ॥ ६९ । ७० । ७१ । ७२ ॥

कलियुगस्य प्राबल्ये सति सत्यमेव प्रशस्तः कुलाचारो विधातव्य इत्याभिप्रायवान् महादेवः सत्यं प्रशंसन्नाह । प्रकटेऽत्रेत्यादि ॥ ७३ । ७४ ॥

नहीत्यादि । अनृतात् असत्यात् सर्वात्मना सर्वप्रयत्नेन । आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म चेत्यमरः । समाश्रयेत् सम्यक् सेवेत ॥ ७५ ॥

सत्यहीना वृथा पूजा सत्यहीनो वृथा जपः ।
सत्यहीनं तपो व्यर्थमूषरे वपनं यथा ॥ ७६ ॥
सत्यरूपं परं ब्रह्म सत्यं हि परमं तपः ।
सत्यमूलाः क्रियाः सर्व्वाः सत्यात् परतरो न हि ॥ ७७ ॥
अतएव मया प्रोक्तं दुष्कृते प्रबले कलौ ।
कुलाचारोऽपि सत्येन कर्त्तव्यो व्यक्तभावतः ॥ ७८ ॥
गोपनाद्धीयते सत्यं न गुप्तिरनृतं विना ।
तस्मात् प्रकाशतः कुर्य्यात् कौलिकः कुलसाधनम् ॥ ७९ ॥
कुलधर्म्मस्य गुप्त्यर्थं नानृतं स्याज्जुगुप्सितम् ।
यदुक्तं कुलतन्त्रेषु न शस्तं प्रबले कलौ ॥ ८० ॥
कृते धर्म्मश्चतुष्पादः त्रेतायां पादहीनकः ।
द्विपादो द्वापरे देवि ! पादमात्रं कलौ युगे ॥ ८१ ॥
तत्रापि सत्यं बलवत् तपः खञ्जं दयापि च ।
सत्यपादे कृते लोपे धर्म्मलोपः प्रजायते ॥ ८२ ॥

ऊषरे क्षारमृत्तिकायुक्तदेशे ॥ ७६ । ७७ ॥

अतएव सर्व्वेषां कर्म्मणां सत्यमूलत्वादेवेत्यर्थः । दुष्कृते पापिनि ॥ ७८ ॥

हीयते हीनं भवति त्यक्तं भवतीत्यर्थः ॥ ७९ ॥

ननु कुलधर्म्मस्य गुप्त्यर्थं नानृतं स्याज्जुगुप्सितमिति कुलतन्त्रे भवतैवोक्तं तत्कथमिदानीमुच्यते तस्मात् प्रकाशतः कुर्य्यात् कौलिकः कुलसाधनमित्यत आह । कुलधर्म्मस्येत्यादि ॥ ८० ॥

कृत इत्यादि । कृते सत्ययुगे चतुष्पादो धर्म्म आसीदिति शेषः समासान्तविधेरनित्यत्वान्न पादशब्दस्यान्तस्य लोपः । पादमात्रम् धर्म्मस्यावशिष्यते इति शेषः ॥ ८१ ॥

तत्रापि पादमात्रेऽपि दयापि च खञ्जा लघ्वी इति बोधः

तस्मात् सत्यं समाश्रित्य सर्वकर्माणि साधयेत् ।
कुलाचारं विना यत्र नास्त्युपायः कुलेश्वरि ! ॥ ८३ ॥
तत्रानृतप्रवेशश्चेत् कुतो निःश्रेयसं भवेत् ।
सर्वथा सत्यपूतात्मा मन्मुखेरितवर्त्मना ॥ ८४ ॥
सर्वं कर्म नरः कुर्य्यात् स्वस्ववर्णाश्रमोदितम् ।
दीक्षां पूजां जपं होमं पुरश्चरणतर्पणम् ॥ ८५ ॥
व्रतोद्वाहौ पुंसवनं सीमन्तोन्नयनन्तथा ।
जातकर्म तथा नामचूड़ाकरणमेव च ॥८५ ॥
मृतक्रियां पितृश्राद्धं कुर्य्यादागमसम्मतम् ।
तीर्थश्राद्धं वृषोत्सर्गं शारदोत्सवमेव च ॥ ८६ ॥
यात्रां गृहप्रवेशञ्च नववस्त्रादिधारणम् ।
वापीकूपतड़ागानां संस्कारं तिथिकर्म्म च । ८७ ॥
गृहारम्भप्रतिष्ठाञ्च देवानां स्थापनन्तथा ।
दिवाकृत्यं निशाकृत्यं पर्वकृत्यं तथैव च ॥ ८८ ॥
ऋतुमासवर्षकृत्यं नित्यं नैमित्तिकञ्च यत् ।
कर्त्तव्यं यदकर्त्तव्यं त्याज्यं ग्राह्यञ्च यद्भवेत् ॥ ८९ ॥
मयोक्तेन विधानेन तत् सर्वं सरधयेन्नरः ।
न कुर्य्याद् यदि मोहेन दुर्मत्याश्रद्धयापि वा ॥ ९० ॥

…र्विंशु कर्म्मणि घञ् ॥ ८२ ॥
अत्र प्रवेशे सती निःश्रेयसं मुक्तिः ॥ ८३ । ८४ ॥
तेषु किं सर्वं कर्म्म तत्राह दीक्षामित्यादि । पुरश्चरणमिति
…॥ ८५ ॥
नामचूड़ाकरणमेव च नामकरणं चूड़ाकरणञ्चेत्यर्थः ॥ ८६ ॥
नववस्त्रादीत्यादिना नवीनभूषणादेः संग्रहः ॥ ८७ ॥

विनष्टः सर्वकर्मभ्यो विष्ठायां स भवेत् कृमिः ।
यदि मन्मतमुत्सृज्य महेशि ! प्रबले कलौ ॥ ८१ ॥
यदा यत् क्रियते कर्म विपरीताय तद्भवेत् ।
मन्मतासम्मता दीक्षा साधकप्राणघातिनी ॥ ८२ ॥
पूजापि विफला देवि ! हुतं भस्मार्पणं यथा ।
देवता कुपिता तस्य विघ्नस्तस्य पदे पदे ॥ ८३ ॥
कलिकाले प्रहृष्टे तु ज्ञात्वा मच्छासनं प्रिये ! ।
योऽन्यमार्गैः क्रियां कुर्य्यात् स महापातकी भवेत् ॥८
व्रतोद्वाही प्रकुर्व्वाणो योऽन्यमार्गेण मानवः ।
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥ ८४ ॥
व्रते ब्रह्मवधः प्रोक्तः व्रात्यो माणवको भवेत् ।
केवलं सूत्रवाहोऽसौ चण्डालादधमोऽपि सः ॥ ८५ ॥
उद्वाहितापि या नारी जारीयात् सा तु गर्हिता ।
उद्वोढ़ापि भवेत् पापी संसर्गात् कुलनायिके ! ॥ ८६
वेश्यागमनजं पापं तस्य पुंसो दिने दिने ।

गृहारम्भप्रतिष्ठाश्च गृहारम्भं गृहप्रतिष्ठाश्चेत्यर्थः ॥ ८८–९०

प्रबले कलौ युगे सदाशिवमतमुत्सृज्य कर्म्माणि कुर्वतो जन
महापातकित्वं क्रियमाणानां कर्म्मणाञ्च नैष्फल्यमित्याह न कुर्य्यादि
त्यादिभिः । मोहेन अविवेकेन अश्रद्धया विश्वासाभावेन ॥ ९१ । ९२

भस्मार्पणम् अर्प्यते यत्र तदर्पणम् कर्म्मणि ल्युट् भस्मन्यर्पण
मिति सप्तमीतत्पुरुषः भस्मार्पितमित्यर्थः भस्मार्पितमिव वा पा
॥ ९३ । ९४ । ९५ ॥

व्रतेत्यादि । अन्यमार्गेण जातसंस्कारोऽपि माणवको व्रात्यो
भवेत् संस्कारहीनो भवेदित्यर्थः ॥ ९६ ॥

उद्वाहितेत्यादि । अन्यमार्गेणोद्वाहिता या नारी सा तु गर्हित

तदन्नदत्ततोयादि नैव गृह्णन्ति देवताः ॥ ९७ ॥

पितरोऽपि न चाश्नन्ति यतस्तन्मलपूयवत् ।

तयोरपत्यं कानीनः सर्वधर्मबहिष्कृतः ॥ ९८ ॥

दैवे पैत्रे कुलाचारे नाधिकारोऽस्य जायते ।

अशाम्भवेन मार्गेण देवतास्थापनञ्चरेत् ॥ ९९ ॥

न सान्निध्यं भवेत्तत्र देवतायाः कथञ्चन ।

इहामुत्र फलं नास्ति कायक्लेशो धनक्षयः ॥ १०० ॥

आगमोक्तविधिं हित्वा यः श्राद्धं कुरुते नरः ।

श्राद्धं तन्निष्फलं सोऽपि पितृभिर्नरकं व्रजेत् ॥ १०१ ॥

तत्तोयं शोणितसमं पिण्डो मलमयो भवेत् ।

तस्मात्सर्वैः प्रयत्नेन शाङ्करं मतमाश्रयेत् ॥ १०२ ॥

बहुनात्र किमुक्तेन सत्यं सत्यं मयोच्यते ।

अशाम्भवं कृतं कर्म सर्वं देवि ! निरर्थकम् ॥ १०३ ॥

आस्तु तावत् परो धर्मः पूर्वधर्मोऽपि नश्यति ।

शाम्भवाचारहीनस्य नरकान्नैव निष्कृतिः ॥ १०४ ॥

मदुदीरितमार्गेण नित्यनैमित्तकर्मणाम् ।

साधनं यन्महेशानि ! तदेव तव साधनम् ॥ १०५ ॥

निष्फला भवेदिति जानीयात् । तान्तु गर्हितामिति वा पाठः । संव-
र्गात् अन्यमार्गेणोद्वाहितायाः भार्य्याः सङ्गमात् तस्य कृतान्यविध्यु-
द्वाहितनारीसंसर्गस्य तदन्नदत्तान्नतोयाद्यग्रहणे कारणमाह यत
इत्यादि । तत् अन्नतोयादि तयोः अन्यमार्गोद्वाहितनारीतदुद्वोढृपुरु-
षयोः ॥ ९७ ॥

अस्य कानीनस्य ॥ ९८ ॥

तत्र अशाम्भवमार्गस्थापितदेवताप्रतिमायाम् ॥ १००—१०२ ॥

विशेषाराधनं तत्र मन्त्रयन्त्रादिसंयुतम् ।
भेषजं कलिरोगाणां शृणुत्वं गदतो मम ॥ १०६ ॥

इति श्रीमहानिर्व्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्व्वधर्म्मनिर्णयसारे
श्रीमदाद्यासदाशिवसंवादे जीवनिस्तारोपायप्रश्ने परा-
प्रकृतिसाधनोपक्रमो नाम चतुर्थोल्लासः ॥ ४ ॥

निष्कृतिर्निस्तारः ॥ १०४ । १०५ ॥

भेषजम् औषधम् गदतो मम कथयतो मत्तः सम्बन्धसामान्यस्य
शेषत्वेन विवक्षितत्वात् शेषे षष्ठीति षष्ठी ॥ १०६ ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां चतुर्थोल्लासः ।

---

# पञ्चमोल्लासः ।

—∞—

श्रीसदाशिव उवाच

त्वमाद्या परमा शक्तिः सर्वशक्तिस्वरूपिणी ।
तव शक्त्या वयं शक्ताः सृष्टिस्थितिलयादिषु ॥ १ ॥
तव रूपाण्यनन्तानि नानावर्णाकृतीनि च ।
नानाप्रयाससाध्यानि वर्णितुं केन शक्यते ॥ २ ॥
तव कारुण्यलेशेन कुलतन्त्रागमादिषु ।
तेषामर्चासाधनानि कथितानि यथामति ॥ ३ ॥
गुप्तसाधनमेतत्तु न कुत्रापि प्रकाशितम् ।
अस्य प्रसादात् कल्याणि ! मयि ते करुणेदृशी ॥ ४ ॥
त्वया पृष्टमिदानीं तन्नाहं गोपयितुं क्षमः ।
कथयामि तव प्रीत्यै मम प्राणाधिकं प्रिये ! ॥ ५ ॥
सर्वदुःखप्रशमनं सर्वापद्विनिवारकम् ।
त्वत्प्राप्तिमूलमचिरात्तव सन्तोषकारणम् ॥ ६ ॥

मन्त्रयन्त्रादिसंयुक्तस्य विशेषाराधनस्यैवाभिधाने प्रवृत्तः श्रीसदाशिव उवाच त्वमाद्या परमेत्यादि ॥ १ ॥

नानावर्णाकृतीनि नाना अनेके वर्णा आकृतय आकाराश्च येषां रूपाणां तानि ॥ २ ॥

कारुण्यलेशेन दयाया लवेन । तेषां तव रूपाणाम् ॥ ३ ॥

एतत्तु अतःपरमुच्यमानन्तु । अस्य गुप्तसाधनस्य ॥ ४ ॥

तत् गुप्तसाधनम् ॥ ५ । ६ ॥

कलिकल्मषदीनानां नृणां स्वल्पायुषां प्रिये ।
बहुप्रयासासक्तानामेतदेव परं धनम् ॥ ७ ॥
न चात्र न्यासबाहुल्यं नोपवासादिसंयमः ।
सुखसाध्यमबाहुल्यं भक्तानां फलदं महत् ॥ ८ ॥
तत्रादौ शृणु देवेशि ! मन्त्रोद्धारक्रमं प्रिये ! ।
यस्य श्रवणमात्रेण जीवन्मुक्तः प्रजायते ॥ ९ ॥
प्राणेशस्तैजसारूढो भैरवाव्योमबिन्दुमान् ।
बीजमेतत् समुद्धृत्य द्वितीयमुद्धरेत् प्रिये ! ॥ १० ॥
सन्ध्या रक्तसमारूढा वामनेत्रेन्दुसंयुता ।
तृतीयं शृणु कल्याणि ! दीपसंस्थः प्रजापतिः ॥ ११ ॥
गोविन्दबिन्दुसंयुक्तः साधकानां सुखावहः ।
बीजत्रयान्ते परमेश्वरि ! सम्बोधनं पदम् ॥ १२ ॥

एतदेवातः परमुच्यमानं गुप्तसाधनमेव ॥ ७ ॥

अत्र अतःपरमुच्यमाने साधने । अबाहुल्यं बाहुल्यशून्यम् ॥ ८ ॥

तत्र साधने ॥ ९ ॥

तमेव मन्त्रोद्धारक्रममाह प्राणेश इत्यादिभिः । तैजसारूढः तैजसो रेफस्तमारूढः प्राणेशो हकारो भैरव्याव्योमबिन्दुमान् भैरवी ईकारः व्योमबिन्दुरनुस्वारः ताभ्यां विशिष्टो विधातव्यः एवं ह्रीमित्येतद्बीजं समुद्धृत्य द्वितीयं बीजमुद्धरेत् ॥ १० ॥

तत् किं बीजमत आह सन्ध्येत्यादि । रक्तसमारूढा रेफं समारूढा सन्ध्या तालव्यः शकारो वामनेत्रेन्दुसंयुता वामनेत्रमीकारः इन्दुरनुस्वारः ताभ्यां संयुक्ता कर्त्तव्या एवञ्च श्रीमिति द्वितीयं बीजमुद्धृत्यमासीत् । हे कल्याणि ! तृतीयं बीजं शृणु तत् किं बीजमत आह । दीपसंस्थः इत्यादि । दीपसंस्थ दीपो रेफः तत्र स्थितः प्रजापतिः ककारो गोविन्दबिन्दुसंयुक्तः गोविन्द ईकारः बिन्दुरनुस्वारः

वह्निजायान्तावधिः प्रोक्तो दशार्णोऽयं मनुः शिवे ।
सर्वविद्यामयी देवी विद्येयं परमेश्वरी ॥ १३ ॥
आद्यत्रयाणां बीजानां प्रत्येकं त्रयमेव वा ।
प्रजपेत् साधकाधीशः सर्वकामार्थसिद्धये ॥ १४ ॥
बीजमाद्यत्रयं हित्वा सप्तार्णापि दशाक्षरी ।
कामवाग्भवताराद्या सप्तार्णाष्टाक्षरी त्रिधा ॥ १५ ॥

ताभ्यां संयुक्तः कर्णेन्दुः एतादृश ककारः साधकानां सुखावहः सुखदायको भवति एवञ्च क्रीमिति तृतीयं बीजमुद्धृतमासीत् । बीजत्रयस्यान्ते वह्निजाया स्वाहा अवधिरन्तभूता यस्य एतादृशं परमेश्वरि इति सम्बोधनं पदं वदेत् । एवञ्चपदयोजनया ह्रीं श्रीं क्रीं परमेश्वरि स्वाहेति मन्त्रो जातः । हे शिवे ! अयं मनुर्मन्त्रो दशार्णो दशवर्णकः प्रोक्तः वह्निजायावधिरिति पाठे तु मन्त्रो विशेष्यः तस्यैवेदं विशेषणमिति ज्ञातव्यं सर्वविद्यामयी सर्वविद्यास्वरूपेयं मन्त्रात्मिका देवी परमेश्वरी विद्या नाम ॥ ११ । १२ । १३ ॥

आद्येत्यादि । आद्यत्रयाणामेतस्यैव मन्त्रस्यादिभूतानां ह्रीं प्रभृतीनां त्रयाणां बीजानां मध्ये प्रत्येकं ह्रीमिति श्रीमिति क्रीमिति वा बीजं ह्रींश्रींक्रीमिति बीजत्रयमपि वा धर्मकामार्थसिद्धये साधकाधीशः साधकोत्तमः प्रजपेत् एवन्तु पञ्चमन्त्रा आसन् ॥ १४ ॥

बीजमित्यादि ह्रीं प्रभृत्याद्यत्रयं बीजं हित्वा त्यक्त्वा दशाक्षरी मन्त्रात्मिका परमेश्वरी विद्या सप्तार्णापि परमेश्वरि स्वाहेत्याकारा सप्ताक्षर्यपि भवेत् अनेन सहिताः षड् मन्त्रा अभूवन् । कामवाग्भवताराद्या क्लीमिति ऐमिति ओमिति वा बीजमाद्यं यस्यास्तथाभूता चेत् सप्तार्णस्वरूपा परमेश्वरी विद्या स्यात्तदा क्लीं परमेश्वरि स्वाहेत्याकारा ऐं परमेश्वरि स्वाहेत्याकारा ओं परमेश्वरि स्वाहेत्याकारा चाष्टाक्षरीति भवति एवञ्चैषाष्टाक्षरी त्रिधा जाता एतैस्त्रिभिः सहिता नव मन्त्रा अभूवन् ॥ १५ ॥

दशार्णमन्त्रणपदात् कालिके ! पदमुच्चरेत् ।
पुनराद्यत्रयं बीजं वह्निजायां ततो वदेत् ॥ १६ ॥
षोडशीयं समाख्याता सर्वतन्त्रेषु गोपिता ।
वध्वाद्या प्रणवाद्या चेदेषा सप्तदशी द्विधा ॥ १७ ॥
तव मन्त्रा ह्यसंख्याताः कोटिकोट्यर्बुदास्तथा ।
संक्षेपादत्र कथिता मन्त्राणां द्वादश प्रिये ! ॥ १८ ॥
येषु येषु च तन्त्रेषु ये ये मन्त्राः प्रकीर्त्तिताः ।
ते सर्वे तव मन्त्राः स्युस्त्वमाद्या प्रकृतिर्यतः ॥ १९ ॥
एतेषां सर्वमन्त्राणां एकमेव हि साधनम् ।
कथयामि तव प्रीत्यै तथा लोकहिताय च ॥ २० ॥
कुलाचारं विना देवि ! शक्तिमन्त्रो न सिद्धिदः ।

दशार्णेत्यादि । दशार्णस्य मनोरामन्त्रणपदात् परं कालिके इ[illegible]
पदमुच्चरेत् वदेत् ततः परं ह्रीं प्रभृत्याद्यत्रयं बीजं पुनर्वदेत् ततो[illegible]
नन्तरं वह्निजायां स्वाहेति पदं वदेत् सकलपदयोजनया ह्रीं श्रीं क्रीं
परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहेति मन्त्रो जातः । इयं षोड[illegible]
षोडशवर्णा मन्त्रात्मिका परमेश्वरी विद्या सर्वतन्त्रेषु गोपितापि त[illegible]
प्रीत्यै मया समाख्याता सम्यक् कथिता । एतेन सह ता दश मन्त्[illegible]
अभवन् । वेदाद्येषा षोडशी वध्वाद्या स्त्रीमिति-बीजाद्या प्रणवाद्[illegible]
ओङ्काराद्या वा स्यात् तदा स्त्रीं ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्[illegible]
श्रीं क्रीं स्वाहेत्याकारा ओं ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्[illegible]
क्रीं स्वाहेत्याकारा च सप्तदशी सप्तदशाक्षर्यपि भवेत् एवमेषा सप्तद[illegible]
द्विधा जाता एताभ्यां मिलिता द्वादशमन्त्रा आसन् ॥ १६—१८ ॥

सकलतन्त्रोक्तानां सर्वेषां मन्त्राणां पार्वतीसम्बन्धित्वे [illegible]
माह । त्वमाद्या प्रकृतिर्यत इति ॥ १९ । २० ॥

तस्मात् कुलाचाररतः साधयेच्छक्तिसाधनम् ॥ २१ ॥
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ।
शक्तिपूजाविधावाद्ये पञ्चतत्त्वं प्रकीर्त्तितम् ॥ २२ ॥
पञ्चतत्त्वं विना पूजा अभिचाराय कल्प्यते ।
शिलायां शस्यवापे च यथा नैवाङ्कुरो भवेत् ॥ २३ ॥
पञ्चतत्त्वविहीनायां पूजायां न फलोद्भवः ।
प्रातःकृत्यं विना देवि ! नाधिकारी तु कर्म्मसु ॥ २४॥
तस्मादादौ प्रवक्ष्यामि प्रातःकृत्यं यथोचितम् ।
रजनीशेषयामस्य शेषार्द्धे ऽरुणोदयः ॥ २५ ॥
तदा साधक उत्थाय मुक्तस्वापः कृतासनः ।
ध्यायेच्छिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् ॥ २६ ॥
श्वेताम्बरपरीधानं श्वेतमाल्यानुलेपनम् ।
वराभयकरं शान्तं करुणामयविग्रहम् ॥ २७ ॥

तदेव साधनमाह कुलाचारमित्यादिभिः ॥ २१ ॥

पञ्चतत्त्वं विना शक्तिपूजाया निष्फलत्वादवश्यमेव पञ्चतत्त्वेन शक्तेः पूजा विधातव्येत्याह मद्यमित्यादिभिः ॥ २२ ॥

अभिचाराय हिंसाकर्म्मणे । हिंसाकर्म्माभिचारः स्यादित्यमरः ॥ २३ । २४ । २५ ॥

प्रातःकृत्यमेवाह रजनीशेषयामस्येत्यादिभिः । रजनीशेषयामस्य रात्रेरन्तिमस्य प्रहरस्य शेषार्द्धमन्तिमं दण्डचतुष्टयमरुणोदयः स्यात् तदा तस्मिन्नरुणोदये काले मुक्तस्वापस्त्यक्तनिद्रः साधक उत्थाय कृतमासनं येन तथाभूत आसनोपविष्टश्च सन् शिरसि शुक्लाब्जे श्वेतपद्मे स्थितं गुरुं ध्यायेदित्यन्वयः । द्विनेत्रमित्यादीनि द्वितीयान्तानि गुरुविशेषणानि ॥ २६ ॥

श्वेतेत्यादि । श्वेताम्बरपरीधानं परिधीयते यत्तत् परीधानं

वामिनोत्पलधारिण्या शक्त्यालिङ्गितविग्रहम् ।
स्मेराननं सुप्रसन्नं साधकाभीष्टदायकम् ॥ २८ ॥
एवं ध्यात्वा कुलेशानि ! मानसैरुपचारकैः ।
पूजयित्वा जपेन्मन्त्री वाग्भवं बीजमुत्तमम् ॥ २९ ॥
यथाशक्ति जपं कृत्वा समर्प्य दक्षिणे करे ।
ततस्तु प्रणमेद्धीमान् मन्त्रेणानेन सद्गुरुम् ॥ ३० ॥
भवपाशविनाशाय ज्ञानदृष्टिप्रदर्शिने ।
नमः सद्गुरवे तुभ्यं भुक्तिमुक्तिप्रदायिने ॥ ३१ ॥
नराकृतिपरब्रह्मरूपायाज्ञानहारिणे ।
कुलधर्म्मप्रकाशाय तस्मै श्रीगुरवे नमः ॥ ३२ ॥
प्रणम्यैवं गुरुं तत्र चिन्तयेन्निजदेवताम् ।

कर्म्मणि ल्युट् परीत्यस्य दीर्घत्वार्थः । श्वेते अम्बरे वस्त्रे परीधाने यस्य तथाभूतं श्वेतमाल्यानुलेपनम् अनुलिप्यते गन्धदनुलेपनं चन्दनादि श्वेते माल्यानुलेपने यस्य तम् । वरेत्यादि । वराभयकरं वरोऽभयं च करयोर्यस्य तं शान्तं रागद्वेषादिशून्यं करुणामयविग्रहं करुणामयः कृपाप्राचुर्य्यवान् विग्रहो देहो यस्य तम् । वामेनोत्पलधारिण्या वामहस्तेन कमलं दधत्या शक्त्या स्त्रिया आलिङ्गितविग्रहमालिष्टशरीरम् ॥ २७ । २८ ॥

एवमित्यादि । हे कुलेशानि ! मन्त्री साधकः एवं गुरुं ध्यात्वा मानसैर्मनःप्रकल्पितैः पाद्यार्घ्याचमनादिभिरुपचारकैः, पूजयित्वा चोत्तमं श्रेष्ठं वाग्भवम् ऐमिति बीजं जपेत् ॥ २९ ॥

जपम् ऐमिति बीजस्येति शेषः ॥ ३० ॥

अनेन केन मन्त्रेणेत्यपेक्षायां तमेव मन्त्रमाह भवपाशविनाशायेति । भवपाशविनाशाय संसाररूपस्य पाशस्य विनाशकाय ज्ञानदृष्टिप्रदर्शिने ज्ञानरूपां दृष्टिं प्रदर्शयितुं शीलं यस्य स तस्मै ॥ ३१ । ३२ ॥

पूर्ववत् पूजयित्वा तां मूलमन्त्रजपञ्चरेत् ॥ ३३ ॥
यथाशक्ति जपं कृत्वा देव्या वामकरेऽर्पयेत् ।
मन्त्रेणानेन मतिमान् प्रणमेदिष्टदेवताम् ॥ ३४ ॥
नमः सर्वस्वरूपिण्यै जगद्धात्र्यै नमोनमः ।
आद्यायै कालिकायै ते कर्त्र्यै हर्त्र्यै नमोनमः ॥३५॥
नमस्कृत्य वहिर्गच्छेद्वामपादपुरःसरम् ।
त्यक्त्वा मूत्रपुरीषञ्च दन्तधावनमाचरेत् ॥ ३६ ॥
ततो गत्वा जलाभ्यासे स्नानं कृत्वा यथाविधि ।
आदावप उपस्पृश्य प्रविशेत् सलिले ततः ॥ ३७ ॥
नाभिमात्रजले स्थित्वा मलानामपनुत्तये ।
सकृत् स्नात्वा तथोन्मज्य मान्त्रमाचमनञ्चरेत् ॥ ३८ ॥
आत्मविद्याशिवैस्तत्त्वैः स्वाहान्तैः साधकाग्रणीः ।
त्रिस्प्राश्यापो द्विरुन्मृज्य त्वाचमेत् कुलसाधकः ॥ ३९ ॥

प्रणम्येत्यादि । एवमुक्तप्रकारेण गुरुं प्रणम्य प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा तत्र शिरसि शुक्लाब्जे आसीनां निजदेवतां साधकश्चिन्तयेद्ध्यायेत् ततः पूर्ववत् गुरुवन्मानसैरुपचारकैस्तान्निजदेवतां पूजयित्वा ह्रीं श्रीं क्रीमित्यादिकस्य मूलमन्त्रस्य जपञ्चरेत् कुर्य्यात् ॥ ३३ । ३४ ॥

तं मन्त्रमेवाह । नमः सर्वेति ॥ ३५ । ३६ ॥

तत इत्यादि । जलाभ्यासे वारिनिकटे स्नानविधिमेवाह । आदावप इत्यादिभिः अपो जलानि । सलिले जले ॥ ३७ ॥

मन्त्रैः कार्य्यं मान्त्रम् ॥ ३८ ॥

आचमनमन्त्रानेव दर्शयन्नाह । आत्मेत्यादि । स्वाहा अन्तो येषां तथाभूतैः आत्मविद्याशिवतत्त्वैः आत्मतत्त्वाय स्वाहा विद्यातत्त्वाय स्वाहा शिवतत्त्वाय स्वाहेति मन्त्रैरित्यर्थः साधकाग्रणीः साधकश्रेष्ठः कुलसाधकोऽपो जलानि त्रिर्वारत्रयं प्राश्य प्रपीय द्विर्वारद्वयमुन्मृज्य

कुलयन्त्रं मन्त्रगर्भं विलिख्य सलिले सुधीः ।
मूलमन्त्रं द्वादशधा तस्योपरि जपेत् प्रिये ! ॥ ४० ॥
तेजोरूपं जलं ध्यात्वा सूर्य्यमुद्दिश्य देशिकः ।
तत्तोयैस्त्र्यञ्जलीन् दत्त्वा तेनैव पाथसा त्रिधा ।
अभिषिच्य स्वमूर्द्धानं सप्तच्छिद्राणि रोधयेत् ॥ ४१ ॥
ततस्तु देवताप्रीत्यै त्रिर्निमज्ज्य जलान्तरे ।
उत्थाय गात्रं सम्मार्ज्य पिदध्याच्छुद्धवाससी ॥ ४२ ॥
मृत्स्नया भस्मना वापि त्रिपुण्ड्रं बिन्दुसंयुतम् ।
ललाटे तिलकं कुर्य्याद्गायत्र्या वधकुन्तलः ॥ ४३ ॥
वैदिकीं तान्त्रिकीञ्चैव यथानुक्रमयोगतः ।

इत्येवमादस्य ह्रीं प्रभृतीनां मन्त्राणां मध्ये कश्चिदपि मन्त्रो गर्भे यस्यै-वम्भूतं त्रिकोणात्मकं कुलं यन्त्रं सलिले जले विलिख्य सुधीर्धीरः साधकस्तस्य कुलयन्त्रस्योपरि ह्रीं श्रीं क्रीमित्याद्यात्मकं मूलमन्त्रं द्वादशधा द्वादशवारञ्जपेदिति द्वितीयेनान्वयः ॥ ३९ । ४० ॥

तेजोरूपमिति । देशिकः साधकः कुलयन्त्रसम्बन्धि जलं तेजोरूपं ध्यात्वा तत्तोयैः कुलयन्त्रसम्बन्धिभिर्जलैस्त्र्यञ्जलीन् सूर्य्यमुद्दिश्य दत्त्वा तेनैव कुलयन्त्रसम्बन्धिनैव पाथसा जलेन स्वमूर्द्धानं त्रिधा त्रिवारमभि-षिच्य सप्तच्छिद्राणि कर्णनेत्रनासामुखविवराणि हस्तद्वयाङ्गुलिभी-रोधयेत् ॥ ४१ ॥

ततस्त्विति । ततस्तु सप्तच्छिद्ररोधनादनन्तरं तु देवताप्रीत्यै सङ्कल्प्य जलान्तरे त्रिर्वारत्रयं निमज्ज्य तत उत्थाय गात्रं सम्मार्ज्य वस्त्रेण प्रोञ्छ्य च शुद्धवाससी धौतवस्त्रे पिदध्यात् आच्छादयेत् परिद-ध्यादित्यर्थः ॥ ४२ ॥

मृत्स्नयेति । ततो गायत्र्या बद्धकुन्तलो निबद्धकेशः सन् मृत्स्न-या प्रशस्तया मृत्तिकया तादृशेनैव भस्मना वापि बिन्दुसंयुतं त्रिपुण्ड्रं तिलकं ललाटे कुर्य्यात् ॥ ४३ ॥

सन्ध्यां समाचरेन्मन्त्री तान्त्रिकीं शृणु कथ्यते ॥ ४४ ॥
आचम्य पूर्ववत्तोये तीर्थान्यावाहयेच्छिवे ! ॥ ४५ ॥
गङ्गे ! च यमुने ! चैव गोदावरि ! सरस्वति ! ।
नर्मदे ! सिन्धु ! कावेरि ! जलेऽस्मिन् सन्निधिं कुरु ४६
मन्त्रेणानेन मतिमान् मुद्रयाङ्कुशसंज्ञया ।
आवाह्य तीर्थं सलिले मूलं द्वादशधा जपेत् ॥ ४७ ॥
ततस्तत्तोयतो बिन्दूंस्त्रिधा भूमौ विनिक्षिपेत् ।
मध्यमानामिकायोगान्मूलोच्चारणपूर्वकम् ॥ ४८ ॥
सप्तवारं स्वमूर्द्धानमभिषिच्य ततो जलम् ।
वामहस्ते समादाय छादयेद्दक्षपाणिना ॥ ४९ ॥

वैदिकीमिति । ततो मन्त्री साधको यथानुक्रमयोगतोऽनुक्रमेणैव वैदिकीं तान्त्रिकीञ्च सन्ध्यां समाचरेत् कुर्य्यात् । तयोर्मध्ये तान्त्रिकीं सन्ध्यां त्वं शृणु मया कथ्यते ॥ ४४ ॥

तान्त्रिकीं सन्ध्यामेवाह । आचम्येत्यादिभिः हे शिवे ! पूर्ववदाचम्य तोये जले तीर्थान्यावाहयेत् ॥ ४५ ॥

ननु केन मन्त्रेण कानि वा तीर्थान्यावाहयेदित्यपेक्षायामाह । गङ्गेचेत्यादि । सन्निधिम् आसत्तिम् ॥ ४६ ॥

मन्त्रेणेति । मतिमान् साधकोऽनेन अनन्तरमेवोक्तेन मन्त्रेणा-ङ्कुशसंज्ञया मुद्रया सलिले जले तीर्थमावाह्य मूलं मन्त्रं सलिले एव द्वादशधा जपेत् अङ्कुशमुद्रा यथा ज्ञानार्णवे । दक्षमुष्टिं विधायाथ तर्ज्जन्यग्रप्रकुञ्चिनी । अङ्कुशाख्या महामुद्रा त्रैलोक्याकर्षणक्षमेति ॥ ४७ ॥

तत इत्यादि । ततः परं मूलमन्त्रस्योच्चारणं पूर्वं यत्र कर्म्मणि तत् मूलोच्चारणपूर्वकं मध्यमानामिकायोगात्तत्तोयतो बिन्दून् त्रिधा त्रिवारं भूमौ विनिक्षिपेत् ॥ ४८ ॥

सप्तवारमिति । मूलोच्चारणपूर्वकं मध्यमानामिकायोगात् तेनैव

ईशानवायुवरुणवह्नीन्द्रबीजपञ्चकम् ।
प्रजप्य वेदधा तोयं दक्षहस्ते समानयेत् ॥ ५० ॥
वीक्ष्य तेजोमयं ध्यात्वा चेडयाकृष्य साधकः ।
देहान्तःकलुषं तेन रेचयेत् पिङ्गलाख्यया ॥ ५१ ॥
निष्कृष्य पुरतो वज्रशिलायामस्त्रमुच्चरन् ।
त्रिवारं ताडयन् मन्त्री हस्तौ प्रक्षालयेत्ततः ॥ ५२ ॥
आचम्योक्तेन मन्त्रेण सूर्य्यायार्घ्यं निवेदयेत् ॥ ५३ ॥
तारमायाहंस इति घृणिसूर्य्य ततःपरम् ।
इदमर्घ्यं तुभ्यमुक्त्वा दद्यात् स्वाहेत्युदीरयन् ॥ ५४ ॥
ततो ध्यायेन्महादेवीं गायत्रीं परदेवताम् ।

जलेन सप्तवारं स्वमूर्द्धानमात्मीयं मस्तकमभिषिच्य ततः परं वामहस्ते जलं समादाय गृहीत्वा दक्षपाणिनाच्छादयेत् ॥ ४९ ॥

ईशानेत्यादि । दक्षपाणिनाच्छाद्य च ईशानं वायुवरुणवह्नीन्द्र-स्वामिकं हं यं वं रं लमित्येतद्बीजपञ्चकं वेदधा चतुर्व्वारं प्रजप्य तत्तोयं दक्षहस्ते समानयेत् ॥ ५० ॥

वीक्ष्येति । साधको जनो दक्षहस्ते समानीतं तज्जलं वीक्ष्य विलोक्य तेजोमयं तेजोरूपं ध्यात्वा ईडया नाड्या आकृष्य च पिङ्गला-ख्यया नाड्या तेन जलेन देहान्तःकलुषं शरीरान्तःपापं रेचये-द्वहिः कुर्य्यात् ॥ ५१ ॥

निष्कृष्येति । मन्त्री साधक एवं देहान्तःकलुषं निष्कृष्य पुरतोऽग्रे मनःकल्पितायां वज्रशिलायामस्त्रं फडिति मन्त्रमुच्चरन् जपन् सन् त्रिवारं ताडयेत् आहन्यात् ततोऽनन्तरं हस्तौ प्रक्षालयेद्धावेत् ॥ ५२ ॥

आचम्येति । ततः उक्तेन मन्त्रेणाचम्य सूर्य्यायार्घ्यं निवेदये-द्दद्यात् ॥ ५३ ॥

नहि केन मन्त्रेण सूर्य्यायार्घ्यं निवेदनीयमत आह । तारेत्यादि ।

प्रातर्मध्याह्नसायाह्ने त्रिरूपां गुणभेदतः ॥ ५५ ॥
प्रातर्ब्राह्मीं रक्तवर्णां द्विभुजाञ्च कुमारिकाम्।
कमण्डलुं तीर्थपूर्णमक्षमालाञ्च बिभ्रतीम्।
कृष्णाजिनाम्बरधरां हंसारूढ़ां शुचिस्मिताम् ॥ ५६ ॥
मध्याह्ने तां श्यामवर्णां वैष्णवीञ्च चतुर्भुजाम्।
शङ्खचक्रगदापद्मधारिणीं गरुडासनाम् ॥ ५७ ॥
पीनोत्तुङ्गकुचद्वन्द्वां वनमालाविभूषिताम्।
युवतीं सततं ध्यायेन्मध्ये मार्त्तण्डमण्डले ॥ ५८ ॥
सायाह्ने वरदां देवीं गायत्रीं संस्मरेद् यतिः।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥ ५९ ॥

एवं तारमायाहंस इत्युक्त्वा ततःपरं घृणिसूर्य्येत्युक्त्वा ततश्च परमिदमर्घ्यं तुभ्यमित्युक्त्वा ततोऽनन्तरं स्वाहेत्युदीरयन् कीर्त्तयन् साधकः सूर्य्यायार्घ्यं दद्यात् ओं ह्रीं हंसघृणिसूर्य्य इदमर्घ्यं तुभ्यं स्वाहेति मन्त्रेणार्घ्यं निवेदयेदित्यर्थः ॥ ५४ । ५५ ॥

रजआदिगुणभेदात् प्रातर्मध्याह्नसायाह्ने त्रिरूपत्वं प्रदर्शयन् गायत्र्या ध्यानमेवाह। प्रातर्ब्राह्मीमित्यादिभिः प्रातरिति। रक्तवर्णाम् रक्तो लोहितो वर्णो यस्यास्तां द्विभुजां द्वौ भुजौ बाहू यस्यास्तथाभूतां तीर्थपूर्णं गङ्गादितीर्थजलैः पूरितं कमण्डलुम् अक्षमालां रुद्राक्षमालाञ्च पाणिभ्यां बिभ्रतीं दधतीं कृष्णाजिनाम्बरधरां नीलचर्मरूपं वस्त्रं परिदधतीं हंसारूढ़ां हंसः पक्षिविशेषस्तमारूढ़ां शुचिस्मितां शुचि पवित्रं शुभ्रं वा स्मितमीषद्धासो यस्यास्ताम्। कुमारिकां कन्यकां ब्राह्मीं ब्रह्मणः शक्तिम् एवम्भूतां गायत्रीं देवीं प्रातःकाले ध्यायेत्। अग्रेऽप्येवमेवान्वयः कर्त्तव्यः ॥ ५६ ॥

तां गायत्रीम् ॥ ५७ ॥

पीनेति। पीनं दृढ़मुत्तुङ्गमुन्नतं कुचद्वन्द्वं यस्याः तथाभूताम् ॥५८॥

त्रिनेत्रां वरदां पाशं शूलञ्च नृकरोटिकाम् ।
बिभ्रतीं करपद्मैश्च वृद्धां गलितयौवनाम् ॥ ६० ॥
एवं ध्यात्वा महादेव्यै जलानामञ्जलित्रयम् ।
दत्त्वा जपेत्तु गायत्रीं दशधा शतधापि वा ॥ ६१ ॥
गायत्रीं शृणु देवेशि ! वदामि तव भावतः ।
आद्यायै पदमुच्चार्य्य विद्महे तदनन्तरम् ॥ ६२ ॥
परमेश्वर्य्यै धीमहि तन्नः काली प्रचोदयात् ।
एषा तु तव गायत्री महापापप्रणाशिनी ॥ ६३ ॥

सायाह्ने इत्यादि । यतिः निर्जितेन्द्रियव्यूहः' ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते इत्यमरः । वृषासनकृताश्रयाम् वृषरूपमासनं यस्य स वृषासनः शिवः स एव कृत आश्रयो निजाधारो यया तथाभूताम् । अथवा वृषरूपं यत् मकरन्दासनं तदात्मकः कृत आश्रयो यया तथाभूताम् ॥ ५९ ॥

नृकरोटिकाम् नरकपालम् । गलितयौवनां ध्वस्ततारुण्याम् ॥६०॥

एवमित्यादि । महादेव्यै गायत्रीं दशधा शतधापि वा दशवारं शतवारं वेत्यर्थः ॥ ६१ ॥

भावतः प्रीतितः ॥ ६२ ॥

तां गायत्रीमेवाह आद्यायै इत्यादिना । पूर्वमाद्यायै इति पदमुच्चार्य्य तदनन्तरं विद्महे इति पदमुच्चरेत् । तदनन्तरं परमेश्वर्य्यै धीमहि तन्नः काली प्रचोदयादित्युच्चरेत् । योजनया आद्यायै विद्महे परमेश्वर्य्यै धीमहि तन्नः काली प्रचोदयादित्याकारा गायत्र्यासीत् । एतद्गायत्र्यर्थस्तु आद्यायै परमेश्वर्य्यै आद्यां परमेश्वरीं मात्तां वयं विद्महे मन्यामहे धीमहि चिन्तयामश्च तत् जगत्कारणत्वेन ख्यातिप्रसिद्धा काली नोऽस्मान् प्रचोदयात् प्रेरयेत् धर्मार्थकाममोक्षेषु विनियोजयेदित्यर्थ इति ॥ ६२ ॥

त्रिसन्ध्यमेतां प्रजपन् सन्ध्यायाः फलमाप्नुयात् ।
ततस्तु तर्पयेद्भद्रे ! देवर्षिपितृदेवताः ॥ ६४ ॥
प्रणवं सद्वितीयाख्यां तर्पयामि नमः पदम् ।
शक्तौ तु प्रणवे मायां नमःस्थाने द्विठं वदेत् ॥ ६५ ॥
मूलान्ते सर्वभूतान्ते निवासिन्यै पदं वदेत् ।
सर्वस्वरूपां ङेयुक्तां सायुधामपि तथा पठेत् ॥ ६६ ॥
सावरणां सचतुर्थीं तद्वदेव परात्पराम् ।
आद्यायै कालिकायै च इदमर्घ्यं ततो द्विठः ॥ ६७ ॥

एताम् केवलां तव गायत्रीम् । ततस्तु गायत्रीजपादनन्तरं तु ॥ ६४ ॥

ननु केन केन मन्त्रेण देवर्षिपितृदेवतास्तर्पयितव्या इत्याकाङ्क्षायां तर्पणमन्त्रमाह । प्रणवमित्यादिना । पूर्वं प्रणवमोङ्कारं वदेत् । ततः सद्वितीयाख्यां द्वितीयया विभक्त्या सहितामाख्यां नामधेयं वदेत् । ततश्च परं तर्पयामीति नम इति च पदं वदेत् । शक्तौ तु शक्तिविषये तु प्रणवे प्रणवस्थाने मायां ह्रीमिति वीजं वदेत् । नमःस्थाने द्विठं स्वाहेति पदं वदेत् । एतेन ओं देवांस्तर्पयामि नम इति मन्त्रेण देवान् । ओमृषींस्तर्पयामि नम इत्यनेन ऋषीन् । ओं पितॄंस्तर्पयामि नम इति मन्त्रेण पितॄन् । ह्रीमाद्यां कालीं तर्पयामि स्वाहेत्यनेनाद्यां कालीं तर्पयेदिति ज्ञापितम् ॥ ६५ ॥

मूलान्त इत्यादि । मूलस्य ह्रीं श्रीं क्रीं परमेश्वरि स्वाहेति मन्त्रस्यान्ते यत् सर्वभूतेति पदं तस्यान्ते निवासिन्यै इति पदं वदेत् ततो ङेयुक्तां सर्वस्वरूपां वदेत् । ततः तथा ङेयुक्तां सायुधेत्यपि पदं वदेत् । ततः सचतुर्थीं सावरणां वदेत् । ततः तद्वदेव सचतुर्थीमेव परात्परां वदेत् । ततः आद्यायै कालिकायै ते इदमर्घ्यमिमि वदेत् । ततो द्विठः स्वाहेति पदं वदेत् । सकलपदयोजनया ह्रीं श्रीं क्रीं परमेश्वरि स्वाहा स-

अनेनार्घ्यं महादेव्यै दत्त्वा मूलं जपेत् सुधीः ।
यथाशक्ति जपं कृत्वा देव्या वामकरेऽर्पयेत् ॥ ६८ ॥
प्रणम्य देवीं पूजार्थं जलमादाय साधकः ।
नत्वा तीर्थं पठन् स्तोत्रं देवताध्यानतत्परः ॥ ६९ ॥
यागमण्डपमागत्य पाणिपादौ विशोधयेत् ।
ततो द्वारस्य पुरतः सामान्यार्घ्यं प्रकल्पयेत् ॥ ७० ॥
त्रिकोणवृत्तभूबिम्बं मण्डलं रचयेत् सुधीः ।
आधारशक्तिं सम्पूज्य तत्राधारं नियोजयेत् ॥ ७१ ॥
अस्त्रेण पात्रं प्रक्षाल्य हृन्मन्त्रेण प्रपूर्य्य च ।

ह्रीं भूतनिवासिन्यै सर्व्वस्वरूपायै सायुधायै सावरणायै परात्परायै आद्यायै कालिकायै ते इदमर्घ्यं स्वाहेति मन्त्र आसीत् ॥ ६६ । ६७ ॥

अनेनेति । अनेनानन्तरमेवोक्तेन मन्त्रेण महादेव्यै अर्घ्यं दत्त्वा सुधीर्धीरः साधको मूलं मन्त्रं जपेत् । यथाशक्ति जपं कृत्वा च जपजन्यं फलं देव्या वामकरेऽर्पयेत् दद्यात् ॥ ६८ ॥

प्रणम्येति । ततः साधको देवीं प्रणम्य पूजार्थं जलमादाय गृहीत्वा तीर्थं नत्वा च स्तोत्रं पठन् देवताध्यानतत्परः सन् यागमण्डपं यजनगृहमागत्य पाणिपादौ विशोधयेत् धावेत् । ततो द्वारस्य पुरतोऽग्रे सामान्यार्घ्यं प्रकल्पयेत् रचयेत् ॥ ६९ । ७० ॥

ननु सामान्यार्घ्यं किं नामेत्यत आह । त्रिकोणेत्यादि । सुधीर्विचक्षणः त्रिकोणस्य वृत्तस्य भूबिम्बं चैतेषां समाहारः त्रिकोणवृत्तभूबिम्बं मण्डलं रचयेत् पूर्वं त्रिकोणं ततस्तद्बहिरभितो वृत्तं वर्त्तुलं ततस्तद्बहिर्भूबिम्बं चतुष्कोणस्य मण्डलं कुर्य्यादित्यर्थः तत्र रचिते मण्डले ओं आधारशक्तये नम इति मन्त्रेण गन्धपुष्पादिभिराधारशक्तिं सम्पूज्य सामान्यार्घ्यं पात्रस्थापनाय तत्रिकोणेन रचिते मण्डले कमप्याधारं नियोजयेत् स्थापयेत् ॥ ७१ ॥

निक्षिप्य गन्धं पुष्पञ्च तीर्थान्यावाहयेत्ततः ॥ ७२ ॥
आधारपात्रतोयेषु वह्न्यर्कशशिमण्डलम् ।
पूजयित्वा तद्दशधा मायाबीजेन मन्त्रयेत् ॥ ७३ ॥
प्रदर्शयेद्धेनुयोनिं सामान्यार्घ्यमिदं स्मृतम् ।
ततस्तज्जलपुष्पैश्च पूजयेद् द्वारदेवताः ॥ ७४ ॥
गणेशं क्षेत्रपालञ्च वटुकं योगिनीं तथा ।
गङ्गाञ्च यमुनाञ्चैव लक्ष्मीं वाणीं ततो यजेत् ॥ ७५ ॥

अस्त्रेणेति । अस्त्रेण फडिति मन्त्रेण पात्रं प्रक्षाल्याधारे [illegible]संस्थाप्य च मूलमन्त्रेण नमोमन्त्रेण जलैः प्रपूर्य च तत्र गन्धं चन्दनादिकं पुष्पञ्च निक्षिप्य ततःपरं तत्र तीर्थान्यावाहयेत् ॥ ७२ ॥

आधारेति । ततः आधारश्च पात्रञ्च तोयञ्च तान्याधारपात्रतोयानि तेषु वह्न्यर्कशशिमण्डलं पूजयित्वा आधारे वह्निमण्डलं पात्रेऽर्कमण्डलं तोये च शशिमण्डलं वक्ष्यमाणमन्त्रेण गन्धपुष्पादिभिरर्चयित्वेत्यर्थः दशधा दशवारं मायाबीजेन ह्रीमितिबीजेन तज्जलं मन्त्रयेत् ॥ ७३ ॥

प्रदर्शयेदिति । ततः तस्योपरि धेनुयोनी मुद्रे प्रदर्शयेत् इदमेव सामान्यार्घ्यं स्मृतम् । ततःपरं तज्जलपुष्पैः सामान्यार्घ्यसम्बन्धितोयकुसुमैर्द्वारदेवताः पूजयेत् । धेनुमुद्रा यथा । अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः । तथा च तर्ज्जनीमध्या धेनुमुद्राऽमृतप्रदेति ॥ ७४ ॥

या द्वारदेवताः पूजयेत्ता एव दर्शयन्नाह । गणेशमित्यादि । गं गणेशाय नम इति मन्त्रेण गणेशम् । क्षं क्षेत्रपालाय नम इति मन्त्रेण क्षेत्रपालम् । वं वटुकाय नम इत्यनेन वटुकम् । यां योगिन्यै नम इत्यनेन योगिनीम् । गां गङ्गायै नम इत्यनेन गङ्गाम् । यां यमुनायै नम इति मन्त्रेण यमुनाम् । श्रीं लक्ष्म्यै नम इत्यनेन लक्ष्मीम् । ऐं सरस्वत्यै नम इति मन्त्रेण वाणीं गन्धपुष्पादिभिर्द्वारे पूजयेत् ॥ ७५ ॥

किञ्चित् स्पृशन् वामशाखां वामपादपुरःसरम् ।
स्मरन् देव्याः पदाम्भोजं मण्डपं प्रविशेत् सुधीः ॥ ७६ ॥
नैरृत्यां दिशि वास्तोशं ब्रह्माणञ्च समर्चयन् ।
सामान्यार्घ्यस्य तोयेन प्रोक्षयेद्यागमन्दिरम् ॥ ७७ ॥
अनन्तरं साधकेन्द्रो दिव्यदृष्ट्यवलोकनैः ।
दिव्यानुत्सारयेद्विघ्नानस्त्राद्भिर्वान्तरीक्षगान् ॥ ७८ ॥
पार्ष्णिघातैस्त्रिभिर्भौमानिति विघ्नान्निवारयेत् ।
चन्दनागुरुकस्तूरीकर्पूरैर्यागमण्डपम् ॥ ७९ ॥
धूपयेत् स्वोपवेशार्थं चतुरस्रं त्रिकोणकम् ।
विलिख्य पूजयेत्तत्र कामरूपाय मन्मनुः ॥ ८० ॥

किञ्चिदिति । ततो वामशाखां द्वारस्थितचतुष्काष्ठानां मध्ये वामं काष्ठं किञ्चित् स्पृशन् देव्याः पदाम्भोजस्य स्मरन् सुधीः साधको वामपादपुरःसरं यथा स्यात् तथा मण्डपं देवीयजनमण्डपं देवीयजन-मन्दिरं प्रविशेत् ॥ ७६ ॥

नैरृत्यामित्यादि । मण्डपं प्रविश्य च तत्रैव नैरृत्यां दिशि प्रणवादिनमोऽन्तेन मन्त्रेण गन्धपुष्पादिभिर्वास्तोशं ब्रह्माणं च समर्चयन् पूजयन् सन् सामान्यार्घ्यस्य तोयेन यागमन्दिरं प्रोक्षयेत् प्रसिञ्चेत् ॥ ७७ ॥

अनन्तरमिति । अनन्तरं ततःपरमेव साधकेन्द्रो दिव्य-दृष्ट्यवलोकनैः निमेषशून्या दृष्टिर्दिव्यदृष्टिस्तयावलोकनैर्निरीक्षणै-र्दिवि भवा दिव्यास्तान् विघ्नानुत्सारयेन्निवारयेत् अन्तरीक्षगान् गगनगतान् विघ्नांस्तु अस्त्राद्भिः फडिति मन्त्रेण जलैर्वोत्सार-येत् । भौमान् भूमिभवान् विघ्नांस्तु पार्ष्णिघातैस्त्रिभिः त्रिभिः पादतलाघातैर्निवारयेत् । ततो यागमण्डपं चन्दनागुरुकस्तूरीकर्पूरै-र्धूपयेत् वासयेत् ततः स्वोपवेशार्थं त्रिकोणकं तद्बहिश्चतुरस्रं चतु-ष्कोणञ्च मण्डलं विलिख्य तत्र लिखिते मण्डले तदधिष्ठातृदेवतां

तत्रासनं समास्तीर्य्य काममाधारशक्तितः ।
कमलासनाय नमो मन्त्रेणैवासनं यजेत् ॥ ८१ ॥
उपविश्यासने विद्वान् प्राङ्मुखो वाप्युदङ्मुखः ।
बद्धवीरासनो मन्त्री विजयां परिशोधयेत् ॥ ८२ ॥
तारं मायां समुच्चार्य्य अमृते ! अमृतोद्भवे ! ।
अमृतवर्षिणि ! ततोऽमृतमाकर्षय द्विधा ॥ ८३ ॥
सिद्धिं देहि ततो ब्रूयात् कालिकां मे ततः परम् ।
वशमानय ठद्वन्द्वं सम्बिदाशोधने मनुः ॥ ८४ ॥
मूलमन्त्रं सप्तवारं प्रजप्य विजयोपरि ।

कामरूपं कामरूपाय हृत् कामरूपाय नम इति यो मनुर्मन्त्रस्तेन गन्धपुष्पादिभिः पूजयेत् ॥ ७८—८० ॥

तत्रेति । ततस्तत्र मण्डले आसनमास्तीर्य्याच्छाद्य पूर्वं कामं क्लीमिति बीजमुच्चार्य्य ततः आधारशक्तीति वदेत् आधारशक्तितश्च परं कमलासनाय नम इति वदेत् । योजनया क्लीमाधारशक्तिकमलासनाय नम इति मन्त्रो जातः अनेनैव मन्त्रेणासनं तदधिष्ठातृदैवतं यजेत् ॥ ८१ ॥

विजयां भङ्गाम् ॥ ८२ ॥

ननु केन मन्त्रेण विजयां परिशोधयेदित्यपेक्षायां तच्छोधनमन्त्रमेवाह । तारमित्यादिद्वाभ्याम् । पूर्वं तारं प्रणवं मायां ह्रीमिति बीजञ्च समुच्चार्य्य ततःपरम् अमृते अमृतोद्भवे अमृतवर्षिणि इति ब्रूयात् ततोऽमृतमिति ब्रूयात् ततो द्विधा द्विवारमाकर्षयेति ब्रूयात् । ततश्च सिद्धिं देहीति ब्रूयात् । ततःपरं कालिकां मे इति ब्रूयात् । ततश्च वशमानयेति ठद्वन्द्वं स्वाहेति ब्रूयात् । सकलपदयोजनया ओं ह्रीममृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षयाकर्षय सिद्धिं देहि कालिकां मे वशमानय स्वाहेति मन्त्रो जातः सम्बिदाशोधने भङ्गायाः शोधनेऽयमेव मनुः प्रोक्तः ॥ ८३ । ८४ ॥

आवाहन्यादिमुद्राश्च धेनुयोनिं प्रदर्शयेत् ॥ ८५ ॥
गुरुं पद्मे सहस्रारे यथा सङ्केतमुद्रया ।
त्रिधैव तर्पयेद्देवीं हृदि मूलं समुच्चरन् ॥ ८६ ॥
वाग्भवं वदयुग्मञ्च वाग्वादिनि ! पदं ततः ।
मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि ।
स्वाहान्तेनैव मनुना जुहुयात् कुण्डलीमुखे ॥ ८७ ॥
स्वीकृत्य सम्विदां वामकर्णोर्द्ध्वे श्रीगुरुं नमेत् ।

मूलमन्त्रमिति । विजयोपरि मूलमन्त्रं सप्तवारं प्रजप्य आवाह्यते यया सा आवाहनी मुद्रा सा मुद्रा आदिर्यासां सा आवाहन्यादिः सा चासौ मुद्रा चेत्यावाहन्यादिमुद्रा ताम् । धेनुयोनी च मुद्रे विजयोपरि प्रदर्शयेत् आवाहन्यादिमुद्रा यथा दक्षिणामूर्त्तिसंहितायाम् । पुटाञ्जलिमधः कुर्य्यादियमावाहनी भवेत् । इयन्तु विपरीतेन तदा वै स्थापनी भवेत् । ऊर्द्ध्वाङ्गुष्ठकमुष्टिभ्यां तदेयं सन्निधापनी । अन्ताङ्गुष्ठकमुष्टिभ्यां तदेयं सन्निरोधिनीति ॥ ८५ ॥

गुरुमिति । ऐम् अमुकानन्दनाथं श्रीगुरुं तर्पयामि नमः इति मन्त्रेण सङ्केतमुद्रया गुरूपदिष्टया तत्त्वमुद्रया सहस्रारे सहस्रदले पद्मे गुरुं यथावत्त्रिधा विजयया तर्पयेत् मूलं मन्त्रं समुच्चरन् मनुं ह्रीमाद्यां कालीं तर्पयामि स्वाहेति मन्त्रेण तत्त्वमुद्रयैव हृदये देवीं विजयया त्रिधैव तर्पयेत् ॥ ८६ ॥

वाग्भवमिति । पूर्वं वाग्भवम् ऐमिति बीजं वदेत् ततो वदयुग्मं वदेत् ततो वाग्वादिनि इति पदं वदेत् ततो मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि इति वदेत् । योजनया ऐं वद वद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि मन्त्रो जातः स्वाहान्तेनैवामुना मनुना कुण्डलीमुखे विजयां जुहुयात् दद्यात् ॥ ८७ ॥

स्वीकृत्येति । एवं सम्विदां भङ्गां स्वीकृत्य गृहीत्वा वामकर्ण-

दक्षिणे च गणेशानमाद्यां मध्ये सनातनीम् ॥ ८८ ॥
कृताञ्जलिपुटो भूत्वा देवीध्यानपरायणः ।
पूजाद्रव्याणि सर्व्वाणि दक्षिणे स्थापयेत् सुधीः ।
वामे सुवासितं तोयं कुलद्रव्याणि यानि च ॥ ८९ ॥
अस्त्रान्तमूलमन्त्रेण सामान्यार्घ्योदकेन च ।
सम्प्रोक्ष्य सर्ववस्तूनि वेष्टयेज्जलधारया ।
वह्निबीजेन देवेशि ! वह्नेः प्राकारमाचरेत् ॥ ९० ॥
पुष्पं चन्दनसंयुक्तमादाय करयोर्द्वयोः ।
अस्त्रेण घर्षयित्वा तत् प्रक्षिपेत् करशुद्धये ॥ ९१ ॥
तर्ज्जनीमध्यमाभ्याञ्च वामपाणितले शिवे ! ।
ऊर्द्ध्वोर्द्ध्वतालत्रितयं दत्त्वा दिग्बन्धनं ततः ।
अस्त्रेण छोटिकाभिश्च भूतशुद्धिमथाचरेत् ॥ ९२ ॥

स्योर्द्ध्वदेशे ओं श्रीगुरुभ्यो नम इति मन्त्रेण श्रीगुरुन्नमेत् । दक्षिणे दक्षकर्णस्योर्द्ध्वदेशे ओं गणेशाय नम इति मन्त्रेण गणेशानं नमेत् । ओं सनातन्यै आद्यायै काल्यै नम इत्यनेन मध्ये ललाटदेशे सनातनीमाद्यां कालिकां नमेत् ॥ ८८ ॥

पूजाद्रव्याणि पुष्पादीनि । कुलद्रव्याणि मद्यादीनि ॥ ८९ ॥

अस्त्रान्तेति । ततः अस्त्रान्तमूलमन्त्रेण फडन्तेन मूलमन्त्रेण सामान्यार्घ्योदकेन च सर्ववस्तूनि सम्प्रोक्ष्याभिषिच्य जलधारया वेष्टयेत् । हे देवेशि ! ततो वह्निबीजेन रमिति-बीजेन वह्नेः प्राकारमावरणमाचरेत् कुर्य्यात् ॥ ९० ॥

पुष्पमिति । ततः करशुद्धये चन्दनसंयुक्तं पुष्पं द्वयोः करयोरादाय गृहीत्वा अस्त्रेण फडिति मन्त्रेण तत् पुष्पं घर्षयित्वा प्रक्षिपेत् ॥ ९१ ॥

तर्ज्जनीति । हे शिवे ! ततः तर्ज्जनीमध्यमाभ्यामङ्गुलिभ्यां वाम-

स्वाङ्के निधाय च करावुत्तानौ साधकोत्तमः ।
मनो निवेश्य मूले च हुङ्कारेणैव कुण्डलीम् ॥ ९३ ॥
उत्थाप्य हंसमन्त्रेण पृथिव्या सहितान्तु ताम् ।
स्वाधिष्ठानं समानीय तत्त्वं तत्त्वे नियोजयेत् ॥ ९४ ॥
गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत् ।
रसादिजिह्वया सार्द्धं जलमग्नौ विलापयेत् ॥ ९५ ॥
रूपादिचक्षुषा सार्द्धमग्निं वायौ विलाप्य च ।
स्पर्शादि त्वग्युतं वायुमाकाशे प्रविलापयेत् ॥ ९६ ॥
अहङ्कारे हरेद्व्योम सशब्दं तमहत्यपि ।

पाणितले अङ्गुष्ठे तालत्रितयं दत्त्वा ततोऽस्त्रेण फडिति मन्त्रेण छोटिकाभिरङ्गुलिध्वनिभिश्च दिग्बन्धनमाचरेत् । अथ दिग्बन्धनादनन्तरं भूतशुद्धिमाचरेत् ॥ ९२ ॥

भूतशुद्ध्याचरणप्रकारमेवाह स्वाङ्क इत्यादिभिः । साधकोत्तमः स्वाङ्के स्वक्रोडे उत्तानौ करौ निधाय संस्थाप्य मूले मूलाधारचक्रे च मनो निवेश्य हुङ्कारेणैव कुण्डलीमुत्थाप्य हंसमन्त्रेण हंसः इत्यात्मकेनैव मन्त्रेण पृथिव्या सहितां तां कुण्डलीं शक्तिं स्वाधिष्ठानं स्वाधिष्ठानचक्रं समानीय तत्त्वं पृथिव्यादिकं तत्त्वे जलादौ नियोजयेत् विलापयेत् ॥ ९३ ॥ ९४ ॥

पृथिव्यादेस्तत्त्वस्य जलादितत्त्वे विलापनप्रकारमेव दर्शयन्नाह गन्धादीत्यादि । गन्ध आदिर्यस्य तद्गन्धादि एवम्भूतञ्च तद्घ्राणं नासा चेति गन्धादिघ्राणं तेन संयुक्तां पृथिवीम् अप्सु जलेषु, संहरेत् विलापयेत् । घ्राणादीति पाठे तु घ्रायते नासिकया आघ्रायते यः स घ्राणो गन्ध एव जलादिकमप्यग्न्यादावेवमेव विलापयेत् ॥ ९५ ॥ ९६

अहङ्कार इति । अहङ्कारे सशब्दं शब्दसहितं व्योम आकाशं

महत्तत्त्वं प्रकृतौ तां ब्रह्मणि विलापयेत् ॥ ९७ ॥
एवं विलाप्य मतिमान् वामकुक्षौ विचिन्तयेत् ।
पुरुषं कृष्णवर्णञ्च रक्तश्मश्रुविलोचनम् ॥ ९८ ॥
खड्गचर्मधरं क्रुद्धमङ्गुष्ठपरिमाणकम् ।
सर्वपापस्वरूपञ्च सर्वदाधोमुखस्थितम् ॥ ९९ ॥
ततस्तु वामनासायां यं बीजं धूम्रवर्णकम् ।
सञ्चिन्त्य पूरयेत्तेन वायुं षोड़शमात्रया ।
तेन पापात्मकं देहं शोषयेत् साधकाग्रणीः ॥ १०० ॥
नाभौ रं रक्तवर्णञ्च ध्यात्वा तज्जातवह्निना ।
चतुःषष्ट्या कुम्भकेन दहेत् पापरतात्मनम् ॥ १०१ ॥
ललाटे वारुणं बीजं शुक्लवर्णं विचिन्त्य च ।

हरेत् विलापयेत् । तत् अहङ्कारतत्त्वं महति महत्तत्त्वे हरेत् । महत्तत्त्वञ्च प्रकृतौ विलापयेत् । तां प्रकृतिं ब्रह्मणि विलापयेत् ॥ ९७ ॥

एवमिति । मतिमान् साधक इत्थममुना प्रकारेण पृथिव्यादितत्त्वं विलाप्य वामकुक्षौ वामे उदरे कृष्णवर्णं सर्वपापस्वरूपं पुरुषं विचिन्तयेत् । रक्तश्मश्रुविलोचनमित्यादीनि द्वितीयान्तपदानि सर्वपापस्वरूपस्य पुरुषस्यैव विशेषणानि । रक्तश्मश्रुविलोचनम् रक्ते लोहितवर्णे श्मश्रुविलोचने यस्य तथाभूतम् ॥ ९८ । ९९ ॥

ततस्त्विति । ततोऽनन्तरन्तु वामनासायां धूम्रवर्णकं यं बीजं सञ्चिन्त्य तदेव बीजं जपन् साधकस्तेन वामनासारन्ध्रेण षोड़शमात्रया वायुं पूरयेदाकर्षेत् । साधकाग्रणीः साधकोत्तमस्तेन पूरितेन वायुना पापात्मकं पापमात्मनि स्वस्मिन् यस्य एवम्भूतं देहं शोषयेत् ॥ १०० ॥

नाभाविति । ततो नाभौ रक्तवर्णं रमिति बीजं ध्यात्वा तदेव बीजं जपन्नपि तज्जातवह्निना ततो रमिति बीजादुत्पन्नेनाग्निना चतुःषष्ट्या कुम्भकेन पापरतां निजां तनूं दहेत् ॥ १०१ ॥

द्वात्रिंशता रेचकेन प्लावयेदमृताम्भसा ॥ १०२ ॥
आपादशीर्षपर्य्यन्तमाप्लाव्य तदनन्तरम् ।
उत्पन्नं भावयेद्देहं नवीनं देवतामयम् ॥ १०३ ॥
पृथ्वीवीजं पीतवर्णं मूलाधारे विचिन्तयन् ।
तेन दिव्यावलोकेन दृढ़ीकुर्य्यान्निजां तनूम् ॥ १०४ ॥
हृदये हस्तमादाय आं ह्रीं क्रों हंसमुच्चरन् ।
सोऽहं-मन्त्रेण तद्देहे देव्याः प्राणान् निधापयेत् ॥१०५॥
भूतशुद्धिं विधायेत्थं देवीभावपरायणः ।
समाहितमनाः कुर्य्यात् मातृकान्यासमम्बिके ! ॥१०६॥
मातृकाया ऋषिर्ब्रह्मा गायत्रीछन्द ईरितम् ।
देवता मातृका देवी वीजं व्यञ्जनसंज्ञकम् ॥ १०७ ॥

ललाटे इति । ततो ललाटे शुक्लवर्णं वारुणं वमिति वीजं सञ्चिन्त्य तदेव वीजं जपन्नपि द्वात्रिंशता रेचकेनामृताम्भसा वारुणवीजस्य तेनामृतरूपेण जलेन दग्धां तनूं प्लावयेत् ॥ १०२ ॥

आपादेति । एवमापादशीर्षपर्य्यन्तं देहमाप्लाव्य तदनन्तरं देवतामयं देवतादेहस्वरूपं नवीनमुत्पन्नं देहं भावयेत् चिन्तयेत् ॥ १०३ ॥

पृथ्वीति । ततो मूलाधारे पीतवर्णं लमित्याकारकं पृथ्वीवीजं विचिन्तयन् सन् तेन लमिति-वीजेन दिव्यावलोकेन च निजां तनूं दृढ़ीकुर्य्यात् ॥ १०४ ॥

हृदये इति । ततो हृदये हस्तमादाय निधाय आं ह्रीं क्रों हंस इत्युच्चरन् साधकः सोऽहं-मन्त्रेण तद्देहे तस्मिन्नवीने देहे देव्याः प्राणान् प्रतिष्ठयेत् आं ह्रीं क्रों हंसः सोऽहमिति मन्त्रेण तत्र देहे देव्याः प्राणानां प्रतिष्ठां कुर्य्यादित्यर्थः ॥ १०५ ॥

देवीभावपरायणः देवीस्वरूपोऽहमिति चिन्तनं तत्परः ॥ १०६ ॥

अथ मातृकान्यासक्रममेव दिदर्शयिषुन् मातृकाया ऋष्यादिकमाह

स्वरास्तु शक्तयः सर्गः कीलकं परिकीर्त्तितम्।
लिपिन्यासे महादेवि! विनियोगप्रयोगिता।
ऋष्यादिन्यासं विधायैवं कराङ्गन्यासमाचरेत्॥ १०८ ॥
अं आं-मध्ये कवर्गञ्च इं ईं-मध्ये चवर्गकम्।
उं ऊं मध्ये टवर्गन्तु एं ऐं-मध्ये तवर्गकम्॥१०९॥
ओं औं-मध्ये पवर्गन्तु यादिक्षान्तं वरानने!।
बिन्दुसर्गान्तराले च षडङ्गे मन्त्र ईरितः॥११०॥
विन्यस्य न्यासविधिना ध्यायेन्मातृसरस्वतीम्॥१११॥

मातृकाया इत्यादिना। सर्गः विसर्गः विनियोगप्रयोगिता। विनियोगस्य प्रयोगित्वम् विनियोगः प्रयोक्तव्य इत्यर्थः। अस्या मातृकाया ब्रह्मा ऋषिर्गायत्री छन्दो। मातृका सरस्वती देवी देवता। हलो बीजम्। स्वराः शक्तयः। विसर्गः कीलकम्। धर्म्मार्थकाममोक्षावाप्तये लिपिन्यासे विनियोगः। शिरसि ब्रह्मणे ऋषये नमः। मुखे गायत्र्यै छन्दसे नमः। हृदये मातृकायै सरस्वत्यै देव्यै देवतायै नमः। गुह्ये व्यञ्जनाय बीजाय नमः। पादयोः स्वरेभ्यः शक्तिभ्यो नमः। सर्वाङ्गेषु विसर्गाय कीलकाय नमः। धर्म्मार्थकाममोक्षावाप्तये लिपिन्यासे विनियोगः। एवम् ऋषिन्यासं विधाय कृत्वा कराङ्गन्यासमाचरेत् कुर्य्यात्॥ १०७ ॥ ॥ १०८ ॥

कराङ्गन्यासक्रममेवाह। अं आं-मध्ये इत्यादिना। अं आं-मध्ये स्थितं कवर्गम् इं ईं-मध्ये स्थितं चवर्गम् उं ऊं-मध्ये स्थितं टवर्गम् एं ऐं-मध्ये स्थितं तवर्गम् ओं औं-मध्ये स्थितं पवर्गम् बिन्दुसर्गान्तराले अनुस्वारविसर्गमध्ये स्थितं यादि क्षान्तञ्च वर्णमङ्गुष्ठादिषु हृदयादिषु च षट्सु षट्स्वङ्गेषु न्यासविधिना यथाक्रमं विन्यस्य मातृसरस्वतीं ध्यायेदित्यन्वयः। यथा अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः। इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा। उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्। एं तं थं दं धं नं ऐं अनामिकाभ्यां

पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।
मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥ ११२ ॥
ध्यात्वैवं मातृकां देवीं षट्सु चक्रेषु विन्यसेत् ।

हुम् । ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट् । अं यं रं लं वं शं षं सं हं क्षं अः करतलकरपृष्ठाभ्यां फट् । इति करन्यासः । हृदयादिन्यासे यथा अं कं खं गं घं ङं आं हृदयाय नमः । इं चं छं जं झं ञं ईं शिरसे स्वाहा । उं टं ठं डं ढं णं ऊं शिखायै वषट् । एं तं थं दं धं नं ऐं कवचाय हुम् । ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट् । अं यं रं लं वं शं षं सं हं क्षं अः अस्त्राय फट् । इति षडङ्गन्यासोऽयमेव मन्त्र ईरितः कथितः ॥ १०९—१११ ॥

मातृसरस्वतीध्यानमेवाह पञ्चाशल्लिपिभिरिति । वाग्देवतां सरस्वतीमाश्रये भजे इत्यन्वयः । कथम्भूतां वाग्देवताम् पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलाम् पञ्चाशता वर्णैर्विभक्तानि पृथक् पृथक् भूतानि मुखदोःपन्मध्यवक्षःस्थलानि यस्याः तथाभूताम् । तत्र दोर्बाहुः पद् पादः । पुनः कथम्भूताम् भास्वन्मौलिनिबद्धचन्द्रशकलाम् भास्वन्मौलौ दीप्यमाने किरीटे निबद्धं चन्द्रशकलं चन्द्रखण्डं यया ताम् । चूड़ा किरीटं केशाश्च संयता मौलयस्त्रय इत्यमरः । पुनः कथम्भूताम् आपीनतुङ्गस्तनीम् आपीनौ अतिमहान्तौ तुङ्गावुन्नतौ स्तनौ यस्यास्तथाभूताम् । पुनः कथम्भूताम् हस्ताम्बुजैः पाणिकमलै-र्ज्ञानमुद्राम् अक्षगुणमक्षमाल्यम् । सुधाढ्यकलशममृतपूर्णं घटं विद्यां च बिभ्राणां दधतीम् । पुनः कीदृशीम् विशदप्रभाम् विशदा शुभ्रा प्रभा यस्यास्ताम् । पुनः कीदृशीम् त्रीणि नयनानि नेत्राणि यस्यास्तथाभूताम् ॥ ११२ ॥

ध्यात्वेति । एवं मातृकां देवीं ध्यात्वा षट्सु चक्रेषु विन्यसेत् ।

हक्षौ भ्रूमध्यगे पद्मे कण्ठे च षोडश स्वरान् ॥११३॥
हृदम्बुजे कादिठान्तान् विन्यस्य कुलसाधकः।
डादिफान्तान् नाभिदेशे बादिलान्तांश्च लिङ्गके॥ ११४
मूलाधारे चतुःपत्रे वादिसान्तान् प्रविन्यसेत्।
इत्यन्तर्मातृकां न्यस्य मातृकार्णान् बहिर्न्यसेत् ॥११५॥
ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः।
ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रगेषु च ॥ ११६ ॥

षट्सु चक्रेषु मातृकाया न्यासस्य क्रममेवाह हक्षावित्यादिना। भ्रूमध्यगे विशुद्धाख्ये द्विदले पद्मे हक्षौ वर्णौ विन्यसेत्। कण्ठे कण्ठस्थिते आज्ञाख्ये षोडशपत्रे पद्मे षोडश स्वरान् न्यसेत्। हृदम्बुजे अनाहताख्ये द्वादशदले हृदयपद्मे कादिठान्तान् द्वादशवर्णान् विन्यस्य कुलसाधको नाभिदेशस्थिते मणिपूरकाख्ये दशदले पद्मे डादिफान्तान् दशवर्णान् विन्यसेत्। लिङ्गके लिङ्गदेशस्थे स्वाधिष्ठानाख्ये षड्दले पद्मे बादिलान्तान् षड्वर्णान् विन्यसेत्। चतुष्पत्रे मूलाधारे वादिसान्तांश्चतुरो वर्णान् प्रविन्यसेत्। यथा भ्रूमध्यगे पद्मे हं नमः क्षं नमः। कण्ठगे पद्मे अं नमः आं नमः इं नमः ईं नमः उं नमः ऊं नमः ऋं नमः ॠं नमः ऌं नमः ॡं नमः एं नमः ऐं नमः ओं नमः औं नमः अं नमः अः नमः। हृद्गते पद्मे कं नमः खं नमः गं नमः घं नमः ङं नमः चं नमः छं नमः जं नमः झं नमः ञं नमः टं नमः ठं नमः। नाभिगते पद्मे डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः फं नमः। लिङ्गगते पद्मे बं नमः भं नमः मं नमः यं नमः रं नमः लं नमः। मूलाधारे वं नमः शं नमः षं नमः सं नमः। इति षट्चक्रेषु मातृकान्यासक्रमः। इत्यनेन प्रकारेण मनसा मातृकार्णान् मातृकावर्णानन्तरभ्यन्तरे न्यस्य बहिरपि न्यसेत् ॥ ११३–११५ ॥

पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयांसयोः ।
ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे ततः ॥ ११७ ॥
जठराननयोर्न्यस्य मातृकार्णान् यथाक्रमम् ।
इत्थं लिपिं प्रविन्यस्य प्राणायामं समाचरेत् ॥ ११८ ॥
मायाबीजं षोड़शधा जप्त्वा वामेन वायुना ।
पूरयेदात्मनो देहं चतुःषष्ट्या तु कुम्भयेत् ॥ ११९ ॥

मातृकावर्णानां बहिर्न्यासस्य क्रममाह ललाटेत्यादिना । ललाट-मुखवृत्तादि[illegible]मातृकार्णान् यथाक्रमं न्यसेदिति श्लोकेनान्वयः । यथा ललाटे अं नमः मुखवृत्ते आं नमः दक्षेऽक्षिणि इं नमः वामेऽक्षिणि ईं नमः दक्षश्रुतौ उं नमः वामकर्णे ऊं नमः दक्षनासापुटे ऋं नमः वामनासायाम् ॠं नमः दक्षगण्डे ऌं नमः वामकपोले ॡं नमः ओष्ठे एं नमः अधरे ऐं नमः ऊर्द्ध्वदन्तपङ्क्तौ ओं नमः अधरदन्तपंक्तौ औं नमः उत्तमाङ्गे अं नमः आस्यविवरे अः नमः बाह्वोः ईशानां सन्धीनामग्रेषु क्रमतः कं नमः खं नमः गं नमः घं नमः ङं नमः चं नमः छं नमः जं नमः झं नमः ञं नमः पादयोः ईशानां सन्धीनामग्रेषु क्रमतः टं नमः ठं नमः डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः दक्षपार्श्वे पं नमः वामपार्श्वे फं नमः पृष्ठे बं नमः नाभौ भं नमः जठरे मं नमः हृदये यं नमः दक्षस्कन्धे रं नमः वामस्कन्धे लं नमः ककुद्रूपेऽग्रे वं नमः हृदयपूर्वे पाणियुगे शं नमः षं नमः हृत्पूर्वे पादयुगे सं नमः हं नमः जठराननयोः क्षं नमः इति मातृकावर्णानां बहिर्न्यासस्य क्रमः ॥ ११६—११८ ॥

ननु देवीमन्त्रस्य साधने कथं प्राणायामं विदध्यात् तत्राह । मायाबीजमित्यादि । सुधीर्धीरो मायाबीजं ह्रीं-बीजं षोड़शधा षोड़शवारं जप्त्वा वामेन नासापुटेन वायुनात्मनो देहं पूरयेत् । ततः कनिष्ठानामिकाङ्गुष्ठैर्नासाद्वयं धृत्वा चतुःषष्ट्या आवृत्त्या ह्रीं बीजं

कनिष्ठानामिकाङ्गुष्ठैर्धृत्वा नासाद्वयं सुधीः।
शान्तियुता जपन् वीजं वायुं दक्षेण रेचयेत् ॥ १२०॥
पुनः पुनस्त्रिरावृत्य प्राणायाम इति स्मृतः।
प्राणायामं विधायेत्थमृषिन्यासं समाचरेत् ॥ १२१ ॥
अस्य मन्त्रस्य ऋषयो ब्रह्मा ब्रह्मर्षयस्तथा।
गायत्र्यादीनि छन्दांसि आद्या काली तु देवता ॥१२२॥
आद्यावीजं वीजमिति शक्तिर्माया प्रकीर्त्तिता।
कमला कीलकं प्रोक्तं स्थानेष्वेतेषु विन्यसेत्—
शिरो वदनहृद्गुह्यपादसर्व्वाङ्गकेषु च ॥ १
मूलमन्त्रेण हस्ताभ्यामापादमस्तकावधि।

जपन् सन् वायुं कुम्भयेत् स्थिरं कुर्य्यात्। ततो शान्तियुताद्यया ह्रीं वीजं जपन् तेनैव वा नासापुटेनैव वायुं रेचयेत् त्यजेत्। पुनः पुनरावृत्त्या त्रिवारमयमेवं कुर्य्यात्। देवीमन्त्रस्य साधने इति एष प्राणायामः स्मृतः प्राणायामविधिः प्रोक्त इत्यर्थः ॥ ११९—१२१ ॥

ऋषिन्यासक्रमं दर्शयन्तस्य मन्त्रस्य ऋष्यादिकमाह। अस्य मन्त्रस्येत्यादिना। अस्य मन्त्रस्य ह्रीं श्रीं क्रीं परमेश्वरि स्वाहेत्यस्य आद्यावीजं क्रीं-वीजम्। माया ह्रीं-वीजम्। कमला श्रीं-वीजम्। एतेषु स्थानेषु ऋष्यादिकं विन्यसेत्। एतेषु केषु स्थानेषु विन्यसेत् तत्राह। शिर इत्यादिना। यथा अस्य मन्त्रस्य ब्रह्मा ब्रह्मर्षयश्च ऋषयो गायत्र्यादीनि छन्दांसि आद्या काली देवता क्रीं वीजं ह्रीं शक्तिः श्रीं कीलकं धर्म्मार्थकाममोक्षावाप्तये ऋषिन्यासे विनियोगः। शिरसि ब्रह्मणे ब्रह्मर्षिभ्यश्चर्षिभ्यो नमः। मुखे गायत्र्यादिभ्यश्छन्दोभ्यो नमः। हृदये आद्यायै काल्यै देवतायै नमः। गुह्ये क्रीं-वीजाय नमः पादयोर्ह्रीं-शक्तये नमः। सर्व्वाङ्गेषु श्रीं-कीलकाय नमः। धर्म्मार्थकाममोक्षावाप्तये ऋषिन्यासे विनियोगः। इति ऋषिन्यास-

मस्तकात् पादपर्य्यन्तं सप्तधा वा त्रिधा न्यसेत् ।
अयन्तु व्यापकन्यासो यथोक्तफलसिद्धिदः ॥ १२४ ॥
यद्बीजाद्या भवेद्विद्या तद्बीजेनाङ्गकल्पना ।
अथवा मूलमन्त्रेण षड्दीर्घेण विना प्रिये ! ॥ १२५ ॥
अङ्गुष्ठाभ्यां तर्जनीभ्यां मध्यमाभ्यां तथैव च ।
अनामिकाभ्यां कनिष्ठाभ्यां करयोस्तलपृष्ठयोः ।
नमःस्वाहावषट्हुञ्च वौषट् फट् क्रमशः सुधीः ॥१२६॥
हृदयाय नमः पूर्वं मस्तके वह्निवल्लभा ।

क्रमः ॥ १२२ । १२३ ॥

अथ व्यापकन्यासं ब्रूते । मूलेत्यादिना । आपादमस्तकावधि-पादमारभ्य मस्तकपर्य्यन्तं मस्तकमारभ्य पादपर्य्यन्तञ्च प्रतिहस्ताभ्यां मूलमन्त्रेण सप्तधा सप्तवारं त्रिधा वा न्यसेत्न्यासं कुर्यात् । मस्तकादिति ल्यब्लोपे कर्म्मण्यधिकरणे चेति कर्म्मणि पञ्चमी ॥ १२४ ॥

अथ कराङ्गन्यासविधिमित्रूपयति । यद्बीजाद्येत्यादिना । यद्बीजमाद्यं यस्याः सा यद्बीजाद्या मन्त्रात्मिका विद्या भवेत् । षराङ्गे, षट्-दीर्घेण विनेति निषेधात् आकारादि-षट्-दीर्घस्वरभाजा तेन बीजेनाङ्गकल्पना अङ्गुष्ठादि-हृदयादि-षडङ्गन्यासकल्पना कर्त्तव्येत्यर्थः । अथवा हे प्रिये ! षट् दीर्घेण विना अध्याहियमाणाकारादिषड्दीर्घ-स्वरशून्येन मूलमन्त्रेणैवाङ्गकल्पना कर्त्तव्या ॥ १२५ ॥

पूर्वमङ्गुष्ठादि-षडङ्गन्यासक्रममाह । अङ्गुष्ठाभ्यामित्यादिना सार्द्धेन । अङ्गुष्ठाभ्यां नमः अङ्गुष्ठावुद्दिश्य नम इत्युक्तमित्यर्थः । एवमग्रेऽप्यन्वयोविधेयः । सुधीः साधकः क्रमशः क्रमेण ह्रां अङ्गुष्ठाभ्यां नमः ह्रीं तर्जनीभ्यां स्वाहा ह्रूं मध्यमाभ्यां वषट् ह्रैं अनामिकाभ्यां नमः ह्रौं कनिष्ठाभ्यां वौषट् ह्रः करतलकरपृष्ठाभ्यां फट् ह्रीं श्रीं क्रीं परमेश्वरि स्वाहा अङ्गुष्ठाभ्यां नमः एवम्वा अङ्गुष्ठादिषडङ्गन्यासं विदध्यादिति शेषः ॥ १२६ ॥

शिखायै पदमित्युक्तं कवचाय हमीरितम् ॥ १२७ ॥
नेत्रत्रयाय वौषट् च अस्त्राय फडिति क्रमात्।
षडङ्गानि विधायेत्थं पीठन्यासं समाचरेत् ॥ १२८ ॥
आधारशक्तिं कूर्मञ्च शेषं पृथ्वीं तथैव च।
सुधाम्बुधिं मणिद्वीपं पारिजाततरुं ततः ॥ १२९ ॥
चिन्तामणिगृहञ्चैव मणिमाणिक्यवेदिकाम्।
तत्र पद्मासनं वीरो विन्यसेत् हृदयाम्बुजे ॥ १३० ॥
दक्षवामांसयोर्वामकटौ दक्षकटौ तथा।
धर्मं ज्ञानं तथैश्वर्यं वैराग्यं क्रमतो न्यसेत् ॥ १३१ ॥

अथ हृदयादिषडङ्गन्यासमाह। हृदयाय नम इत्यादिना। पूर्वं हृदयाय नमः हृदयशब्दिष्य नम इत्युक्तमित्यर्थः। एवमग्रेऽप्यन्वयः। वह्निवल्लभा स्वाहा। ह्रां हृदयाय नमः। ह्रीं शिरसे स्वाहा। ह्रूं शिखायै वषट्। ह्रैं कवचाय हुम्। ह्रौं नेत्रत्रयाय वौषट्। ह्रः अस्त्राय फट् इति। ह्रीं श्रीं क्रीं परमेश्वरि स्वाहा हृदयाय नमः एवं वा क्रमात् सुधीर्हृदयादिषडङ्गेषु न्यासं कुर्य्यात्। इत्थमेवं विधानेन षडङ्गानि प्रति न्यासं विधाय पीठन्यासं समाचरेत् ॥ १२७ । १२८ ॥

पीठन्यासाचरणक्रममेव दर्शयन्नाह। आधारशक्तिमित्यादि। वीरो हृदयाम्बुजे हृत्पद्मे आधारशक्तिं न्यसेत्। तत्रैव कूर्म्मादिकमपि न्यसेत्। तत्र मणिमाणिक्यवेदिकायाम् यथा हृदयाम्बुजे आधारशक्तये नमः कूर्म्माय नमः शेषाय नमः पृथ्व्यै नमः सुधाम्बुधये नमः मणिद्वीपाय नमः पारिजाततरवे नमः चिन्तामणिगृहाय नमः मणिमाणिक्यवेदिकायां पद्मासनाय नमः इति ॥ १२९ । १३० ॥

दक्षेत्यादि। दक्षिणांसादिषु क्रमतो धर्म्मादिकं न्यसेत्। यथा दक्षांसे धर्म्माय नमः वामस्कन्धे ज्ञानाय नमः वामकटौ ऐश्वर्य्याय नमः दक्षकटौ वैराग्याय नमः इति ॥ १३१ ॥

मुखपार्श्वे नाभिदक्षपार्श्वे साधकसत्तमः ।
नञ्पूर्व्वाणि च तान्येव धर्म्मादीनि यथाक्रमम् ॥१२२॥
आनन्दकन्दं हृदये सूर्य्यं सोमं हुताशनम् ।
सत्त्वं रजस्तमश्चैव बिन्दुयुक्तादिमाक्षरैः ।
केशरान् कर्णिकाञ्चैव पत्रेषु पीठनायिकाः ॥ १२३ ॥
मङ्गला विजया भद्रा जयन्ती चापराजिता ।
नन्दिनी नारसिंही च वैष्णवीत्यष्टनायिकाः ॥ १२४ ॥
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्ताख्यकस्तथा ।
कपाली भीषणश्चैव संहारीत्यष्ट भैरवाः ।
दलाग्रेषु न्यसेदेतान् प्राणायामं ततश्चरेत् ॥ १२५ ॥

मुखेत्यादि । साधकसत्तमो मुखादिषु नञ् पूर्व्वाणि तान्येव धर्म्मादीनि यथाक्रमं क्रमेणैव न्यसेत् । यथा मुखे अधर्म्माय नमः वामपार्श्वे अज्ञानाय नमः नाभौ अनैश्वर्य्याय नमः दक्षपार्श्वे अवैराग्याय नमः इति ॥ १२२ ॥

आनन्देत्यादि । आनन्दकन्दादीन् हृदये न्यसेत् । बिन्दुयुक्तादिमाक्षरैः सानुस्वारैरादिमैरक्षरैः सह सत्त्वं रजस्तमश्च तत्रैव न्यसेत् । यथा । हृदये आनन्दकन्दाय नमः सूर्य्याय नमः सोमाय नमः वह्नये नमः सं सत्त्वाय नमः रं रजसे नमः तं तमसे नमः केशरेभ्यो नमः कर्णिकायै नम इति । हृदयाम्बुजस्य पत्रेषु पीठनायिका न्यसेत् ॥१२३॥

पत्रेषु याः पीठनायिका न्यसेत्ता आह एकेन । मङ्गलेति । यथा हृत्पद्मपत्रेषु क्रमतः मङ्गलायै नमः विजयायै नमः भद्रायै नमः जयन्त्यै नमः अपराजितायै नमः नन्दिन्यै नमः नारसिंह्यै नमः वैष्णव्यै नम इति ॥ १२४ ॥

असिताङ्ग इति । असिताङ्गादीनेतानष्ट भैरवान् दलाग्रेषु न्यसेत् । यथा हृत्पद्मपत्राग्रेषु क्रमतः असिताङ्गाय भैरवाय नमः

गन्धपुष्पे समादाय करकच्छपमुद्रया ।
हृदि हस्तौ समाधाय ध्यायेद्देवीं सनातनीम् ॥ १३६ ॥
ध्यानन्तु द्विविधं प्रोक्तं सरूपारूपभेदतः ।
अरूपं तव यद्ध्यानमवाङ्मनसगोचरम् ॥ १३७ ॥
अव्यक्तं सर्वतो व्याप्तमिदमित्थं विवर्ज्जितम् ।
अगम्यं योगिभिर्गम्यं कृच्छ्रैर्बहुसमाधिभिः ॥ १३८ ॥
मनसो धारणार्थाय शीघ्रं स्वाभीष्टसिद्धये ।
सूक्ष्मध्यानप्रबोधाय स्थूलध्यानं वदामि ते ॥ १३९ ॥
अरूपायाः कालिकायाः कालमातुर्महाद्युतेः ।
गुणक्रियानुसारेण क्रियते रूपकल्पना ॥ १४० ॥

इरवै भैरवाय नमः चण्डाय नमः क्रोधोन्मत्ताय नमः भयङ्कराय भैरवाय नमः कपालिने नमः भीषणाय नमः संहारिणे नम इति एवं पीठन्यासं विधाय ततः प्राणायामञ्चरेत् ॥ १३५ ॥

गन्धेति । ततो गुरूपदिष्टया करकच्छपमुद्रया गन्धपुष्पे समादाय स्थापयित्वा हृदि हस्तौ समाधाय संस्थाप्य सनातनीमाद्यन्तशून्यां देवीं ध्यायेत् ॥ १३६ ॥

ध्यानमिति । हे देवि ! सरूपारूपभेदतः तव ध्यानन्तु द्विविधं प्रोक्तम् । तयोर्मध्ये अरूपं रूपरहितं तव यद्ध्यानं ध्येयं, सरूपं तत्तु अवाङ्मनसगोचरम् । वाचो मनसश्चाविषयभूतम् । ध्यायते यत्तत् ध्यानम् । बाहुलकात् कर्मणि ल्युट् ॥ १३७ ॥

अव्यक्तमित्यादि । इदमित्थं विवर्ज्जितम् । इदमित्थमेवेति निश्चयरहितम् । अगम्यम् अज्ञेयम् । कृच्छ्रैः प्राजापत्यादिभिः तैः समोऽन्तःकरणसंयमः स आदिर्येषान्ते शमादयः बहवश्च ते समाधयः तैः ॥ १३८ ॥

शीघ्रमिति पूर्वान्वयि ॥ १३९ ॥

ननु रूपवत एव पदार्थस्य स्थूलध्यानं सम्भवति नन त्वाद्यन्तशू-

मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरं बिभ्रतीं
पाणिभ्यामभयं वरञ्च विलसद्रक्तारविन्दस्थिताम्
नृत्यन्तं पुरतो निपीय मधुरं माध्वीकमद्यं महा-
कालं वीक्ष्य विकासिताननवरामाद्यां भजे कालिकाम् ॥१४१॥

एवं ध्यात्वा स्वशिरसि पुष्पं दत्त्वा तु साधकः ।
पूजयेत् परया भक्त्या मानसैरुपचारकैः ॥ १४२ ॥
हृत्पद्ममासनं दद्यात् सहस्रारच्युतामृतैः ।
पाद्यं चरणयोर्दद्यात् मनस्त्वर्घ्यं निवेदयेत् ॥ १४३ ॥

न्याया रूपरहितत्वात् कथं स्थूलध्यानं प्रतीयते तत्राह । अरूपाया इत्यादि ॥ १४० ॥

स्थूलध्यानमेवाह । मेघाङ्गीमिति । आद्यां कालिकामहं भजे इत्यन्वयः । कथम्भूतां कालिकाम् मेघाङ्गीम् मेघ इवाङ्गं यस्यास्तथा-भूताम् । पुनः कथम्भूताम् शशिशेखराम् शशी शेखरे शिरसि यस्याः ताम् । पुनः कीदृशीम् त्रिनयनाम् त्रीणि नयनानि नेत्राणि यस्याः ताम् । पुनः कथम्भूताम् पाणिभ्यां हस्ताभ्यामभयं वरञ्च बिभ्रतीं दधतीम् । पुनः कीदृशीम् विलसद्रक्तारविन्दस्थितां विलसत् स्फुरद्रक्ता-रविन्दं लोहितं पद्मं तत्र स्थितामुपविष्टाम् । पुनः कथम्भूताम् । मधुरं माध्वीकमद्यं मधूकपुष्पोद्भवं मद्यं निपीय पुरतोऽग्रे नृत्यन्तं महाकालं वीक्ष्य दृष्ट्वा विकासितमाननवरं मुखश्रेष्ठं यस्याः तथा-भूताम् ॥ १४१ ॥

एवमिति । एवममुना प्रकारेणाद्यां कालीं ध्यात्वा कच्छप-मुद्रया गृहीतं पुष्पं स्वशिरसि दत्त्वा साधकः परया भक्त्या मानसै-रुपचारैर्देवीं पूजयेत् ॥ १४२ ॥

मानसैरुपचारैर्देव्याः पूजनमेव दर्शयति । हृत्पद्ममित्यादिना । देव्यै हृत्पद्ममासनं दद्यात् । सहस्रारच्युतामृतैः सहस्रदलपद्मात् स्रवितैरमृतैर्देव्याश्चरणयोः पाद्यं दद्यात् । एवमग्रेऽप्यन्वयः ॥ १४३ ॥

तेनाघ्रातेनाचमनं पानीयमपि कल्पयेत् ।
आकाशतत्त्वं वसनं गन्धन्तु गन्धतत्त्वकम् ॥ १४४ ॥
चित्तं प्रकल्पयेत् पुष्पं धूपं प्राणान् प्रकल्पयेत् ।
तेजस्तत्त्वञ्च दीपार्थे नैवेद्यञ्च सुधाम्बुधिम् ॥ १४५ ॥
अनाहतध्वनिं घण्टां वायुतत्त्वञ्च चामरम् ।
नृत्यमिन्द्रियकर्माणि चाञ्चल्यं मनसस्तथा ॥ १४६ ॥
पुष्पं नानाविधं दद्यादात्मनो भावसिद्धये ।
अमायमनहङ्कारमरागममदन्तथा ॥ १४७ ॥
अमोहकमदम्भञ्च अद्वेषाक्षोभके तथा ।
अमात्सर्यमलोभञ्च दश पुष्पं प्रकीर्त्तितम् ॥ १४८ ॥
अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।

तेनाघ्रातेन । गन्धतत्त्वकं तेन ॥ १४४ ॥

सुधाम्बुधिममृतसागरम् ॥ १४५ । १४६ ॥

पुष्पमिति । आत्मनो भावसिद्धये स्वाभिप्रेतपदार्थनिष्पत्तये । वाक्ये [illegible] नानाविधानि पुष्पाण्यभिधत्ते । अमायमित्यादिना वाक्यद्वयेन । मायाया अभावोऽमायं प्रथमं पुष्पम् । अनहङ्कारम् अहङ्कार आत्मन्यतिपूज्यत्वाभिमानः तदभावोऽनहङ्कारं द्वितीयं पुष्पम् । रागः क्रोधः तदभावोऽरागं तृतीयं पुष्पम् । मदो धनविद्यादिनिमित्तकं चित्तस्योत्सुकत्वं तदभावोऽमदं चतुर्थं पुष्पम् ॥ १४७ ॥

मोहोऽविवेकः तदभावोऽमोहकं पञ्चमं पुष्पम् । दम्भः कपटः तदभावोऽदम्भं षष्ठं पुष्पम् । द्वेषोऽप्रीतिः तदभावोऽद्वेषं सप्तमं पुष्पम् । क्षोभो व्यर्थमितस्ततः सञ्चलनम् तदभावोऽक्षोभकमष्टमं पुष्पम् । मात्सर्यं [illegible] तदभावोऽमात्सर्यं नवमं पुष्पं । लोभो धनाद्याप्तौ [illegible] आवश्यकेऽपि पुनर्वृद्ध्यभिलाषः तदभावो ह्यलोभं दशमं पुष्पम् । एवं दश पुष्पं प्रकीर्त्तितम् ॥ १४८ ॥

दया क्षमा ज्ञानपुष्पं पञ्च पुष्पं ततःपरम् ॥ १४९ ॥
इति पञ्चदशैः पुष्पैर्भावरूपैः प्रपूजयेत् ।
सुधाम्बुधिं मांसशैलं भर्जितं मीनपर्वतम् ॥ १५० ॥
मुद्राराशिं सुभक्तञ्च घृताक्तं पायसं तथा ।
कुलामृतञ्च तत्पुष्पं पीठक्षालनवारि च ॥ १५१ ॥
कामक्रोधौ विघ्नकृतौ बलिं दत्त्वा जपं चरेत् ।
माला वर्णमयी प्रोक्ता कुण्डलीसूत्रगुम्फिता ॥ १५२ ॥
सबिन्दुं वर्णमुच्चार्य्य मूलमन्त्रं जपेच्छिवे ।
अकारादिलकारान्तमनुलोम इति स्मृतः ॥ १५३ ॥
पुनर्लकारमारभ्य श्रीकण्ठान्तं मनुं जपेत् ।
विलोम इति विख्यातः क्षकारो मेरुरुच्यते ॥ १५४ ॥

अहिंसा परपीड़ानिवृत्तिः । इन्द्रियनिग्रहः विषयेषु चक्षुरादिकं-यमनम् । दया निष्कारणपरदुःखविनाशेच्छा । क्षमा परेणापकारे कृते तस्य प्रत्यपकारानाचरणम् । ज्ञानं सारासारविवेकसंपुष्पम् । भावरूपैः भाव्यन्ते चिन्त्यन्ते इति भावाः कर्मण्यण् । तद्रूपैः भाव्य-मानैरित्यर्थः ॥ १४९ ॥

सुधाम्बुधिं मद्यसमुद्रम् । घृताक्तं घृतमिश्रितम् ॥ १५० ॥

कुलामृतं शक्तिघटितमन्त्रविशेषम् । तत्पुष्पम् कुलपुष्पं स्त्रीपुष्प-मित्यर्थः । पीठक्षालनवारि स्वाङ्गविशेषधावनाम्भः ॥ १५१ ॥

नन्वाभ्यन्तरजपाचरणे कीदृशी माला जपविधानञ्च कीदृशं कर्त्तव्य-मित्यपेक्षायामाह । मालेत्यादि । कुण्डलीरूपेण सूत्रेण ग्रथिता-चयिता वर्णमयी वर्णरूपा मालाभ्यन्तरजपे प्रोक्ता ॥ १५२ ॥

सबिन्दुमिति । सबिन्दुं सानुस्वारमकारादिलकारान्तं वर्णमुच्चार्य मूलमन्त्रं समुच्चरेत् जपेत् । यथा । अं ह्रीं श्रीं क्रीं परमेश्वरि स्वाहेति एवमेव जपेत् । जपोऽयमनुलोम इति स्मृतः ॥ १५३ ॥

पुनरित्यादि । पुनर्लकारस्यान्तरस्थितं लकारमारभ्य श्रीकण्ठा-

अष्टवर्गान्तिमैर्वर्णैः सबिन्दुमूलमथाष्टकम् ।
एवमष्टोत्तरशतं जप्त्वानेन समर्पयेत् ॥ १५५ ॥
सर्वान्तरात्मनिलये स्वान्तर्ज्योतिःस्वरूपिणि ।
गृहाण जपमस्माकं मातराद्ये कालि ! नमोऽस्तु ते ॥ १५६ ॥
समर्प्य जपमेतेन साष्टाङ्गं प्रणमेत्प्रिया ।
हृत्पद्मस्थापितां कृत्वा बहिःपूजां समारभेत् ॥ १५७ ॥
विशेषार्घ्यस्य संस्कारस्तवादौ कथ्यते शृणु ।
यस्य स्थापनमात्रेण देवता सुप्रसीदति ॥ १५८ ॥
दृष्ट्वार्घ्यपात्रं योगिन्यो ब्रह्माद्या देवतागणाः ।
भैरवाश्चापि नृत्यन्ति प्रीत्या सिद्धिं ददत्यपि ॥ १५९ ॥
स्ववामे पुरतो भूमौ सामान्यार्घ्यस्य वारिणा ।
मायागर्भं त्रिकोणञ्च वृत्तञ्च चतुरस्रकम् ॥ १६० ॥

न्तमकारान्तं सबिन्दु वर्णमुच्चार्य मनु जपेत् । यथा लं ह्रीं श्रीं क्रीं परमेश्वरि ! स्वाहा । रं ह्रीं श्रीं क्रीं परमेश्वरि ! स्वाहेति एवम् । अयञ्च विलोम इति विख्यातः । क्षकारो मालाया मेरुस्थाने ॥ १५४ ॥

अष्टेत्यादि । अवान्तरभेदानाम् अकचटतपयशानां वर्गाणामन्तिमैः सबिन्दुभिः अः ङं ञणनमवळक्षरूपैर्वर्णैः सहाष्टकमष्टपरिमाणकं मूलमन्त्रं जपेत् । अनेन इतोऽनन्तरमेव वक्ष्यमाणेन मन्त्रेण ॥ १५५ ॥

जपसमर्पणमन्त्रमेवाह । सर्वान्तरात्मेति । सर्वान्तरात्मनिलये । सर्वेषामन्तरात्मा हृदयं निलयो गृहं यस्याः तथाभूते ॥ १५६ । १५७ ॥

तत्र बहिःपूजासमारम्भे ॥ १५८ । १५९ ॥

विशेषार्घ्यस्य संस्कारमेवाह । स्ववाम इत्यादिभिः । स्ववामे आत्मनो वामदेशे । पुरतो भूमौ अग्रतः पृथ्व्यां सामान्यार्घस्य वारिणा करणेन मायाबीजं ह्रीं बीजं गर्भे यस्येदृशं त्रिकोणं मण्डलं पूर्वं विलिख्य तद्बहिर्भागे वृत्तं मण्डलं तद्बहिः चतुरस्रं चतुष्कोणं मण्डलं विलिख्य

विलिख्य पूजयेत्तत्र मायाबीजपुरःसरम् ।
ङेन्तामाधारशक्तिञ्च नमःशब्दावसानिकाम् ॥ १६१ ॥
ततः प्रक्षालिताधारं विन्यस्य मण्डलोपरि ।
मं वह्निमण्डलं ङेन्तं दशकलात्मने ततः ॥ १६२ ॥
नमोऽन्तेन च सम्पूज्य क्षालयेदर्घ्यपात्रकम् ।
अस्त्रेण स्थापयेत्तत्र आधारोपरि साधकः ॥ १६३ ॥
अमर्कमण्डलायेति द्वादशात्मकलात्मने ।
नमोऽन्तेन यजेत् पात्रं मूलेनैव प्रपूरयेत् ॥ १६४ ॥
त्रिभागमलिनापूर्य शेषं तोयेन साधकः ।
गन्धपुष्पे तत्र दत्त्वा पूजयेदमुनाम्बिके ॥ १६५ ॥

तत्र मण्डले मायाबीजं ह्रींबीजं पुरःसरं यस्या एवम्भूतां ङेविभक्त्यन्तां नमःशब्दोऽवसानेऽन्ते यस्यास्तथाभूतामाधारशक्तिं पूजयेत् । ह्रीं आधारशक्तये नम इति मन्त्रेणाधारशक्तिमर्चयेदित्यर्थः ॥ १६०।१६१ ॥

तत इति । ततः आधारशक्तिपूजनादनन्तरं तन्मण्डलोपरि प्रक्षालिताधारं विन्यस्य संस्थाप्य । पूर्वं मभित्युक्त्वा ततः ङेन्तं वह्निमण्डलमुक्त्वा ततो दशकलात्मने इति वदेत् । योजनया । मं वह्निमण्डलाय दशकलात्मने इति मन्त्रो जातः । नमोऽन्तमानेन मन्त्रेण आधारे वह्निमण्डलं सम्पूज्य अस्त्रेण फडिति मन्त्रेणार्घ्यपात्रं क्षालयेत् । साधकस्तत्राधारोपरि क्षालितमर्घ्यपात्रं स्थापयेत् ॥ १६२।१६३ ॥

अमित्यादि । पूर्वम् अम् अर्कमण्डलायेत्युक्त्वा ततो द्वादशात्म-कलात्मने इति वदेत् । योजनया अम् अर्कमण्डलाय द्वादशकलात्मने इति मन्त्रो जातः । अनेनैव नमोऽन्तेन मन्त्रेण पात्रमध्ये पात्राधि-ष्ठातृदैवतमर्कमण्डलं यजेत् पूजयेत् । मूलेनैव मन्त्रेण पात्रम् प्रपूरयेत् ॥ १६४ ॥

ननु केन वस्तुना पात्रं प्रपूरयेत् तत्राह । त्रिभागमिति । अलिना मद्येन पात्रस्य त्रिभागमापूर्य शेषं तोयेन साधकः पूरयेत् ।

षष्ठस्वरं बिन्दुयुक्तमुक्त्वा वै चन्द्रमण्डलम्।
षोडशान्ते कलाशब्दादात्मने नम इत्यपि॥ १६६ ॥
ततस्तु श्रीफले पत्रे रक्तचन्दनचर्च्चितम्।
दूर्वापुष्पं साक्षतञ्च कृत्वा तत्र निधापयेत्॥ १६७ ॥
मूलेन तीर्थमावाह्य तत्र देवीं विभाव्य च।
पूजयेत् गन्धपुष्पाभ्यां मूलं द्वादशधा जपेत्॥ १६८ ॥
धेनुयोनी दर्शयित्वा धूपदीपौ प्रदर्शयेत्।
तदम्बु प्रोक्षणीपात्रे किञ्चिन्निक्षिप्य साधकः॥ १६९ ॥
आत्मानं द्रव्यवस्तूनि प्रोक्षयेत्तेन मन्त्रवित्।
पूजासमाप्तिपर्य्यन्तमर्घ्यपात्रं न चालयेत्॥ १७० ॥
विशेषार्घ्यस्य संस्कारः कथितोऽयं शुचिस्मिते!।
यन्त्रराजं प्रवक्ष्यामि समस्तपुरुषार्थदम्॥ १७१ ॥

तत्र तोये गन्धपुष्पे दत्त्वाऽऽत्मना इतोऽनन्तरमेव वक्ष्यमाणेन मन्त्रेण तत्रैव शशिमण्डलं पूजयेत्॥ १६५ ॥

शशिमण्डलपूजनस्य मन्त्रमाह। षष्ठेत्यादिना। पूर्वं बिन्दुयुक्त-मनुस्वारसहितं षष्ठस्वरमूं कथयित्वा कलाशब्दात् परमात्मने नम इत्यपि कथयेत्। योजनया। ऊं चन्द्रमण्डलाय षोडशकलात्मने नम इति मन्त्रः शशिमण्डलार्च्चने ज्ञातः॥ १६६ ॥

ततस्त्विति। ततस्तु परं श्रीफले बिल्वसम्बन्धिनि पत्रे रक्तचन्दन-चर्च्चितं रक्तचन्दनेन लिप्तं साक्षतमक्षतैर्विशिष्टं च दूर्वासहितं पुष्पं कृत्वा तत्र विशेषार्घ्यस्याग्रभागे निधापयेत् स्थापयेत्॥ १६७ ॥

तत्र विशेषार्घ्यतोये। विभाव्य विचिन्त्य॥ १६८ ॥

धेन्विति। विशेषार्घ्यतोये धेनुयोनी मुद्रे दर्शयित्वा तत्रैव धूपदीपावपि प्रदर्शयेत्। तदम्बु विशेषार्घ्यजलम्॥ १६९ ॥

प्रोक्षयेत् सिञ्चेत्। तेन प्रोक्षणीपात्रनिःक्षिप्तजलेन॥ १७० ॥

मायागर्भं त्रिकोणञ्च तद्बाह्ये वृत्तयुग्मकम् ।
तयोर्मध्ये युग्मयुग्मक्रमात् षोडश केशरान् ॥ १७२ ॥
तद्बाह्येऽष्टदलं पद्मं तद्बहिर्भूपुरं लिखेत् ।
चतुर्द्वारसमायुक्तं सुरेखं सुमनोहरम् ॥ १७३ ॥
स्वर्णे वा राजते ताम्रे कुण्डगोलविलेपिते ।
स्वयम्भूकुसुमैर्युक्ते चन्दनागुरुकुङ्कुमैः ॥ १७४ ॥
कुण्डोदेनाथवा लिप्ते स्वर्णमय्या शलाकया ।
मालूरकण्टकेनापि मूलमन्त्रं समुच्चरन् ॥ १७५ ॥
विलिखेत् यन्त्रराजन्तु देवताभावसिद्धये ।

समस्तपुरुषार्थदम् धर्मार्थकाममोक्षदायकमित्यर्थः ॥ १७१ ॥

यन्त्रराजलेखनस्य विधानमाह । मायागर्भमित्यादिभिः । माया ह्रींबीजं गर्भे यस्यैवम्भूतं त्रिकोणं मण्डलं पूर्वं लिखेत् । ततस्तद्बाह्ये तदभितो वृत्तयुग्मकं वर्त्तुलमण्डलद्वयं लिखेत् । तयोर्वृत्तमण्डलयोर्मध्ये युग्मयुग्मक्रमात् षोडश केशरान् लिखेत् । तद्बाह्ये वृत्तमण्डलयोर्बहिरष्टदलं पद्मं लिखेत् । तद्बहिः पद्माद्बहिस्तदभितश्चतुर्द्वारसमायुक्तं सुरेखं शोभनरेखायुतं सुमनोहरमतिमनोहरं भूपुरं लिखेत् ॥ १७२ । १७३ ॥

ननु यन्त्रमिदं कस्मिन्नाधारे केन वा करणेन लेखितव्यं तत्राह स्वर्णे इत्यादि । कुण्डगोलविलेपिते कुण्डगोलैर्वा शक्तिविशेषघटितपुष्पविशेषैर्विलेपिते स्वयम्भूकुसुमैः शक्तिघटितैरेव पुष्पविशेषैर्युक्ते चन्दनागुरुकुङ्कुमैर्वा लिप्ते केवलेन कुण्डोद्भवेन वा लिप्ते स्वर्णे सुवर्णनिर्मिते राजते रजतनिर्मिते ताम्रनिर्मिते वा पात्रे स्वर्णमय्या सुवर्णविकारभूतया शलाकया मालूरकण्टकेन बिल्वकण्टकेन वा मूलमन्त्रं समुच्चरन् सन् देवताभावसिद्धये देवताप्रीतिनिष्पत्तये यन्त्रराजं विलिखेत् ॥ १७४ । १७५ ॥

अथवेति । अथवा सुशिल्पिना स्वकर्मविषयकातिनैपुण्यशालि

पञ्चकोणकीलरेखाभिः स्फाटिके विद्रुमेऽपि वा ॥१७६॥
वैदूर्ये कारयेत् यन्त्रं आरकेण सुशिल्पिना ॥ १७७॥
शुभप्रतिष्ठितं कृत्वा स्थापयेद् भवनान्तरे।
नश्यन्ति दुष्टभूतानि महारोगभयानि च ॥
पुत्रपौत्रसुखैश्वर्य्यैर्मोदते तस्य मन्दिरम्।
दाता भर्त्ता यशस्वी च भवेत् यन्त्रप्रसादतः ॥ १७८ ॥
एवं यन्त्रं समालिख्य रत्नसिंहासने पुरः।
संस्थाप्य पीठन्यासोक्तविधिना पीठदेवताः।
सम्पूज्य कर्णिकामध्ये पूजयेन्मूलदेवताम् ॥ १७९ ॥
कलसस्थापनं वक्ष्ये स्तुत्यनुष्ठानमेव च।
येनानुष्ठानमात्रेण देवता सुप्रसीदति।
मन्त्रसिद्धिर्भवेन्नूनमिच्छासिद्धिः प्रजायते ॥ १८० ॥
कलां कलां गृहीत्वा तु देवानां विश्वकर्मणा।
निर्मितोऽयं स वै यस्मात् कलसस्तेन कथ्यते ॥ १८१॥

आरकेण शिल्पिना पञ्चकीलरेखाभिरुत्खानिताभी रेखाभिः स्फाटिके विद्रुमे वैदूर्ये वा यन्त्रं कारयेत् शुभेत्यादि। शुभप्रतिष्ठितम् शुभा प्रतिष्ठा सञ्जाताऽस्येवम्भूतं यन्त्रराजं कृत्वा यो भवनान्तरे स्थापयेत् तस्य दुष्टभूतानि नश्यन्तीत्यन्वयः ॥ १७६—१७८ ॥

एवमित्यादि। एवं विधानेन यन्त्रं समालिख्य पुरोऽग्रे रत्नसिंहासने संस्थाप्य च पीठन्यासोक्तविधिना पीठदेवताः सम्पूज्य कर्णिकामध्ये पञ्चबीजकोणमध्ये मूलदेवतां पूजयेत् ॥ १७९ ॥

अथ कलसादिभिः पञ्चतत्त्वैर्महादेव्याः पूजाया विधानं वक्तुमुपक्रमते। कलसेत्यादि ॥ १८० ॥

कलसं निर्वक्ति। कलामित्यादिना ॥ १८१ ॥

अथ कलसनिर्माणविधानमाह। षट्त्रिंशदित्यादिना। षट्त्रिं-

षट्त्रिंशदङ्गुलायामं षोडशाङ्गुलमध्यकं ।
चतुरङ्गुलकं कण्ठं मुखन्तस्य षडङ्गुलम् ।
पञ्चाङ्गुलिमितं मूलं विधानं घटनिर्म्मितौ ॥ १८२ ॥
सौवर्णं राजतं ताम्रं कांस्यजं मृत्तिकोद्भवम् ।
पाषाणं काचजं वापि घटमक्षतमव्रणम् ।
कारयेद्देवताप्रीत्यै वित्तशाठ्यं विवर्जयेत् ॥ १८३ ॥
सौवर्णं भोगदं प्रोक्तं राजतं मोक्षदायकम् ।
ताम्रं प्रीतिकरं ज्ञेयं कांस्यजं पुष्टिवर्द्धनम् ।
काचं वश्यकरं प्रोक्तं पाषाणं स्तम्भकर्म्मणि ।
मृण्मयं सर्वकार्य्येषु शुद्धश्च सुपरिष्कृतम् ॥ १८४ ॥
स्ववामभागे षट्कोणं तन्मध्ये ब्रह्मरन्ध्रकम् ।
तद्बहिर्वृत्तमालिख्य चतुरस्रन्ततो बहिः १८५ ॥

षडङ्गुलायामं षट्त्रिंशदङ्गुलयः परिमाणं यस्य स षट्त्रिंशदङ्गुलः एवम्भूतः आयामो विस्तारो यस्य तथाभूतम् षोडशाङ्गुलमध्यकं षोडशाङ्गुलयः परिमाणं यस्य तन्मध्यकं यस्य घटं कारयेदिति शेषः । तस्य घटस्य कण्ठं चतुरङ्गुलकं चतुरङ्गुलिपरिमितं मुखं षडङ्गुलं षडङ्गुलिपरिमितं मूलमधोदेशं तु पञ्चाङ्गुलिमितं कारयेत् । घटनिर्म्मितौ विधानमेतदेव प्रोक्तम् ॥ १८२॥

ननु कस्य कस्य वस्तुनः कलशः कारयितव्य इत्यपेक्षायामाह । सौवर्णमित्यादि । अक्षतम् अभग्नम् । अव्रणम् छिद्रशून्यम् ॥ १८३ ॥

सौवर्णं सुवर्णजातं कलसमिति शेषः ॥ १८४ ॥

स्ववामेत्यादि । स्ववामभागे षट्कोणं मण्डलमालिख्य तन्मध्ये षट्कोणमण्डलमध्ये ब्रह्मरन्ध्रकं शून्यमेकमालिख्य तद्बहिः षट्कोणमण्डलस्य बहिर्वृत्तं मण्डलमालिख्य ततोऽपि बहिः चतुष्कोणं मण्डलमालिखेत् ॥ १८५ ॥

सिन्दूररजसा वापि रक्तचन्दनकेन वा ।
निर्माय मण्डलं तत्र यजेदाधारदेवताम् ॥ १८६ ॥
मायामाधारशक्तिञ्च ङे नमोऽन्तां समुद्धरेत् ॥ १८७ ॥
नमसा क्षालिताधारं स्थापयेन्मण्डलोपरि ।
अस्त्रेण क्षालितं कुम्भं तत्राधारे निवेशयेत् ॥ १८८ ॥
क्षकाराद्यैरकारान्तैर्वर्णैर्बिन्दुसमायुतैः ।
मूलं समुच्चरन् मन्त्री कारणेन प्रपूरयेत् ॥ १८९ ॥
आधारकुम्भतीर्थेषु वह्न्यर्कशशिमण्डलम् ।
पूर्ववत् पूजयेद् विद्वान् देवीभावपरायणः ॥ १९० ॥
रक्तचन्दनसिन्दूररक्तमाल्यानुलेपनैः ।
भूषयित्वा तु कलसं पञ्चीकरणमाचरेत् ॥ १९१ ॥

ननु इदं मण्डलं केन द्रव्येण लेखनीयं तत्राह । सिन्दूरेत्यादि । तत्र मण्डले ॥ १८६ ॥

ननु केन मन्त्रेणाधारदेवतां यजेत्तत्राह । मायामिति । पूर्वं मायां ह्रीं बीजं समुद्धरेत् ततो ङे नमोऽन्तामाधारशक्तिं समुद्धरेत् । योजनया । ह्रीमाधारशक्तये नम इति मन्त्र आधारदेवतायजने ज्ञातः ॥ १८७ ॥

नमसा नम इति मनुना अस्त्रेण फडिति मन्त्रेण ॥ १८८ ॥

क्षकारेत्यादि । क्षकार आद्यो येषाम् अकारश्चान्त्यो येषान्तैर्बिन्दुसमायुतैरनुस्वारसहितैर्वर्णैः सह मूलं समुच्चरन् क्षं लं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं ह्रीं श्रीं क्रीं परमेश्वरि स्वाहेति मन्त्रं प्रजपन्मन्त्री साधकः कारणेन मद्येन कलसं प्रपूरयेत् ॥ १८९ ॥

तीर्थम् मद्यम् । पूर्ववत् विशेषार्घसंस्कारे इव ॥ १९० ॥ १९१ ॥

फटा दर्भेण सन्ताद्य हुं बीजेनावगुण्ठयेत् ।
ह्रीं दिव्यदृष्ट्या संवीक्ष्य नमसाभ्युक्षणं चरेत् ।
मूलेन गन्धं विदद्यात् पञ्चीकरणमीरितम् ॥ १९२ ॥
प्रणम्य कलशं रक्तपुष्पं दत्त्वा विशोधयेत् ॥ १९३ ॥
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ १९४ ॥
सूर्य्यमण्डलसम्भूते ! वरुणालयसम्भवे ! ।
अमाबीजमये देवि ! शुक्रशापाद्विमुच्यताम् ॥ १९५ ॥
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन ते देवि ! ब्रह्महत्या व्यपोहतु ॥ १९६
ह्रीं हंसः शुचिसद् वसुरन्तरीक्षसद्धोता ।

ननु पञ्चीकरणं किं नाम तत्राह । फडित्यादि । फटा मन्त्रेण दर्भेण कुशेन कलसं सन्ताद्य हुमिति बीजेनावगुण्ठनमुद्रयावगुण्ठये-द्वेष्टयेत् । ह्रीं बीजेन दिव्यदृष्ट्या कलसं संवीक्ष्य दृष्ट्वा नमसा मन्त्रेण कलसस्याभ्युक्षणमभिषेकं चरेत् कुर्य्यात् । मूलेन मन्त्रेण कलशे निवे-दनीयं गन्धं दद्यात् । इदमेव पञ्चीकरणमीरितं कथितम् ॥ १९२ ॥

विशोधयेत् मद्यमिति शेषः ॥ १९३ ॥

ननु केन केन मन्त्रेण मद्यं शोधयेदित्यपेक्षायां तच्छोधनमन्त्रानेव-क्रमत आह एकमेवेति । हे शुभे देवि ! ध्रुवं नित्यं स्थूलसूक्ष्ममयं स्थूलसूक्ष्मस्वरूपं एकमेवाद्वैतमेव यत्परं ब्रह्म अस्ति तेन परब्रह्मणा मे तव कचोद्भवां ब्रह्महत्यामहं नाशयामीत्यन्वयः ॥ १९४ । १९५ ॥

सूर्य्येत्यादि । हे वरुणालयसम्भवे ! । वरुणस्यालयो गृहं वरुणालयः समुद्रः तस्मात् सम्भव उत्पत्तिर्यस्याः तथाभूते ! । अतएव हे सूर्य्यमण्डलमध्यस्थे ! सूर्य्यमण्डलाभ्यन्तरस्थायिनि शुभे देवि ! शुक्रशापात्त्वया विमुच्यतां विमुक्तया भूयताम् ॥ १९६ ॥

वेदिसदतिथिर्दुरोणसत् नृसद्वर्ष ऋतसत् ।
गोजा अब्जा ऋतजा अद्रिजा ऋतं बृहत् ॥ १९७ ॥
वारुणेन च बीजेन षड्दीर्घस्वरभाजिना ।
ब्रह्मशापविमोक्षान्ते मोचितायै पदं वदेत् ।
सुधादेव्यै नमः पश्चात् सप्तधा ब्रह्मशापनुत् ॥ १९८ ॥
अङ्कुशं दीर्घषट्केन युतं श्रीमायया युतम् ।
सुधा पश्चाद् ब्रह्मशापं मोचयेति पदन्ततः ।
अमृतं स्रावयेद्युग्मं द्विठान्तो मनुरीरितः ॥ १९९ ॥
एवं शापान्मोचयित्वा यजेत्तत्र समाहितः ।
आनन्दभैरवं देवमानन्दभैरवीं तथा ॥ २०० ॥

वेदानामिति । हे देवि सुभे ! आनन्दमयमानन्दस्वरूपं यद्ब्रह्म तत्स्वरूपं तत् प्रणवरूपं वेदानां बीजन्तेन सत्येन प्रणवरूपवेदबीजेन ते तव ब्रह्मशापो व्यपोहतु नश्यतु ॥ १९७–१९८ ॥

वारुणेनेति । ब्रह्मशापविमोक्षशब्दस्यान्ते मोचितायै इति पदं वदेत् पश्चात् सुधादेव्यै नम इति वदेत् । योजनया ब्रह्मशाप परिमोचितायै सुधादेव्यै नम इति मन्त्रो जातः । अयं मन्त्रः षड्दीर्घस्वरभाजिना वारुणेन बीजेन संयोज्य यथा वां वीं वूं वैं वौं वः ब्रह्मशापविमोचितायै सुधादेव्यै नम इति सप्तधा सप्तवारं पठितोऽयं मन्त्रो ब्रह्मशापनुत् ब्रह्मशापमोचको भवति ॥ १९९ ॥

अङ्कुशमिति । पूर्वं दीर्घषट्केन युतमङ्कुशं क्रां वदेत् । पश्चात् श्रीमायया युतं श्रीं ह्रीं बीजयुक्तं सुधेति पदं वदेत् । पश्चात् ब्रह्मशापमिति मोचयेति च पदं वदेत् । ततोऽमृतं वदेत् । ततः स्रावयद्वन्द्वं वदेत् । योजनया । क्रां क्रीं क्रूं क्रैं क्रौं क्रः श्रीं ह्रीं सुधाब्रह्मशापं मोचयामृतं स्रावय स्रावयेति मन्त्रो जातः । अयं मनुर्द्विठान्तः स्वाहान्त ईरितः कथितः ॥ २०० ॥

सहक्षमलवशब्दान्ते वरयूं मिलितं वदेत् ।
आनन्दभैरवं ङेऽन्तं वषडन्तो मनुर्मतः ॥ २०१ ॥
अस्यास्यं विपरीतञ्च श्रवणे वामलोचना ।
सुधादेव्यै वौषडन्तो मनुरस्याः प्रपूजने ॥ २०२ ॥
सामरस्यं तयोस्तत्र ध्यात्वा तदमृताप्लुतम् ।
द्रव्यं विभाव्य तस्योर्द्ध्वं मूलं द्वादशधा जपेत् ॥ २०३ ॥
मूलेन देवताबुद्ध्या दत्त्वा पुष्पाञ्जलिं ततः ।
दर्शयेद्धूपदीपौ च घण्टावादनपूर्व्वकम् ॥ २०४ ॥
इत्थं तीर्थस्य संस्कारः सर्व्वदा देवपूजने ।
व्रते होमे विवाहे च तथैवोत्सवकर्म्मणि ॥ २०५ ॥

एवमिति । एवमुक्तक्रमेण पूर्व्वोक्तैः षड्भिर्मन्त्रैर्द्रव्यशापान्मोचयित्वा तत्र मद्ये आनन्दभैरवं देवन्तथानन्दभैरवीन्देवीं समाहितः सावधानः सन् यजेत् ॥ २०१ ॥

उभयोर्यजनस्य मन्त्रमाह । द्वाभ्याम् । सहेति । सहक्षमलवशब्दस्यान्ते मिलितं वरयूमिति पदं वदेत् । ततो ङेऽन्तमानन्दभैरवं वदेत् । योजनया । सहक्षमलवरयूं आनन्दभैरवायेति मनुर्जातः अयं मनुर्वषडन्तो वषट् शब्दान्तो मतः ॥ २०२ ॥

अस्येत्यादि । अस्य हसक्षमलवरयूमित्यस्यास्यं मुखं विपरीतं पठनीयम् । श्रवणे ऊकारस्थाने वामलोचनमीकारः पठनीयः । ततः सुधादेव्यै इति पठनीयम् । योजनया सहक्षमलवरयीं इति मनुर्जातः अस्या आनन्दभैरव्याः प्रपूजने वौषडन्तो वौषट् शब्दान्तोऽयमेव मनुर्मतः ध्यानन्तूभयोरग्रे वक्ष्यति ॥ २०३ ॥

सामरस्यमिति । तत्र मद्ये तयोरानन्दभैरव्यानन्दभैरवयोः सामरस्यमैकरस्यन्ध्यात्वा तदमृतप्लुतं तत्सामरस्यरूपामृतप्लुतं द्रव्यं मद्यं विभाव्य विचिन्त्य तस्य मद्यस्योर्द्ध्वं द्वादशधा द्वादशवारं मूलं मन्त्रं जपेत् ॥ २०४ ॥

मांसमानीय पुरतस्त्रिकोणमण्डलोपरि ।
फटाभ्युक्ष्य वायुवह्निबीजाभ्यां मन्त्रयेत्त्रिधा ॥ २०६ ॥
कवचेनावगुण्ठ्याथ संरक्षेदस्त्रमन्त्रतः ।
धेन्वाथममृतीकृत्य मन्त्रमेतमुदीरयेत् ॥ २०७ ॥
विष्णोर्वक्षसि या देवी या देवी शङ्करस्य च ।
मांसं मे पवित्रीकुरु कुरु तद्विष्णोः परमं पदम् ॥ २०८ ॥
इत्थं मीनं समानीय प्रोक्तमन्त्रेण संस्कृतम् ।
मन्त्रेणानेन मतिमांस्तं मीनमभिमन्त्रयेत् ॥ २०९ ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ २१० ॥

मूलेनेति । ततो देवताबुद्ध्या मूलेन मन्त्रेण मद्ये पुष्पाञ्जलिं दत्त्वा घण्टावादनपूर्वकं तस्योपरि धूपदीपौ च दर्शयेत् ॥ २०५ ॥

तीर्थस्य मद्यस्य ॥ २०६ ॥

अथ मांससंस्कारविधिमाह त्रिभिः । मांसमिति । मांसमानीय पुरतोऽग्रे त्रिकोणमण्डलोपरि संस्थाप्य फटा मन्त्रेणाभ्युक्ष्याभिषिच्य वायुवह्निबीजाभ्यां यं रं बीजाभ्यां त्रिधा त्रिवारं मन्त्रयेत् ॥ २०७ ॥

कवचेनेति । ततः कवचेन हूं बीजेन मांसमवगुण्ठ्यावगुण्ठ-नमुद्रया वेष्टयित्वा अस्त्रमन्त्रतः फड्मन्त्रेण संरक्षेत् । धेन्वा सुरभ्या वं बीजेन मांसममृतीकृत्य एतमितोऽनन्तरमेव वक्ष्यमाणं मन्त्रमु-दीरयेदुच्चारयेत् ॥ २०८ ॥

तमेव मन्त्रमाह । विष्णोरिति । विष्णोर्वक्षसि या देवी तिष्ठति या देवी शङ्करस्य च वक्षसि तिष्ठति सा त्वं मे मम मांसं पवित्रीकुरु । एवं योधितत्वांमवकर्षणात् मम तत्प्रधानं विष्णोः पदं कुरु ॥२०९॥

अथ मीनसंस्कारविधिमाह । इत्थमित्यादिना । प्रोक्तमन्त्रेण । मांसशोधने कथितेन मन्त्रेण ॥ २१० ॥

तथैव मुद्रामादाय शोधयेदमुना प्रिये ! ।

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

दिवीव चक्षुराततम् ॥ २११ ॥

ओं तद्विप्रासो विपण्यवो जागृवांसः समिन्धते ।

विष्णोर्यत् परमं पदम् ॥ २११ ॥

अथ वा सर्वतत्त्वानि मूलेनैव विशोधयेत् ।

मूले तु श्रद्दधानो यः किन्तस्य दलशाखया ॥ २१२ ॥

केवलं मूलमन्त्रेण यद्द्रव्यं शोधितं भवेत् ।

तदेव देवताप्रीत्यै सुप्रशस्तं मयोच्यते ॥ २१३ ॥

यथा कालस्य संक्षेपात् साधकानवकाशतः ।

सर्वं मूलेन संशोध्य महादेव्यै निवेदयेत् ॥ २१४ ॥

न चात्र प्रत्यवायोऽस्ति नाङ्गवैगुण्यदूषणम् ।

सत्यं सत्यं पुनः सत्यमिति शङ्करशासनम् ॥ २१५ ॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्म्मनिर्णयसारे
श्रीमदाद्यासदाशिवसंवादे मन्त्रोद्धारकलशस्थापन-
तत्त्वसंस्कारो नाम पञ्चमोल्लासः ।

तमेव मन्त्रमाह । त्र्यम्बकं यजामह इति ॥ २११ ॥

मुद्राशोधनमन्त्रमेवाह । तद्विष्णोरिति । सूरयो विद्वांसः परमत्युत्कृष्टं तत् अविदुषमप्रत्यक्षं विष्णोः पदं सदा पश्यन्ति । अत्र दृष्टान्तमाह । दिवीत्यादि । आततं विस्तृतं चक्षुर्दिवि स्थितं सर्व्वानामगोचरं सूर्य्यमिव ॥ २११ ॥

सर्वतत्त्वानि मद्यादीनि ॥ २१२ । २१३ ॥

अत्र मूलमन्त्रेणैव शोधितानां सर्वतत्त्वानां महादेव्यै समर्पणे ॥ २१४ । २१५ ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां पञ्चमोल्लासः ।




# षष्ठोल्लासः।

श्रीदेव्युवाच।

यत्त्वया कथितं पञ्चतत्त्वं पूजादिकर्म्मणि।
विशिष्य कथ्यतां नाथ! यदि तेऽस्ति कृपा मयि॥ १॥

श्रीसदाशिव उवाच।

गौड़ी पैष्टी तथा माध्वी त्रिविधा चोत्तमा सुरा।
सैव नानाविधा प्रोक्ता तालखर्ज्जूरसम्भवा।
तथा देशविभेदेन नानाद्रव्यविभेदतः।
बहुधेयं समाख्याता प्रशस्ता देवतार्च्चने॥ २॥
येन केन समुत्पन्ना येन केनाहृतापि वा।
नात्र जातिविभेदोऽस्ति शोधिता सर्व्वसिद्धिदा॥ ३॥
मांसन्तु त्रिविधं प्रोक्तं जलभूचरखेचरम्।
यस्मात् तस्मात् समानीतं येन तेन विघातितम्।
तत् सर्व्वं देवताप्रीत्यै भवेदेव नसंशयः॥ ४॥

मद्यादि पञ्चतत्त्वं विशेषतः श्रोतुमिच्छन्ती श्रीदेव्युवाच यत्त्वये-त्यादि॥ १॥

देव्यैवं प्रार्थितः सन् श्रीसदाशिव उवाच गौड़ीत्यादि। गौड़ी गुड़ोद्भवा। पैष्टी पिष्टोद्भवा। माध्वी मधूकपुष्पोद्भवा इति त्रिविधा त्रिःप्रकारा सुरा उत्तमा श्रेष्ठा प्रोक्ता सैव सुरैव। सुराया नानाविध-त्वमेव दर्शयन्नाह। तालखर्ज्जूरेत्यादि इयं सुरा॥ २॥

आहृता आनीता अत्र सुराविषये॥ ७॥

साधकेच्छा बलवती देये वस्तुनि दैवते ।
यद् यदात्मप्रियं द्रव्यं तत्तदिष्टाय कल्पयेत् ॥ ५ ॥
बलिदानविधौ देवि ! विहितः पुरुषः पशुः ।
स्त्रीपशुर्न च हन्तव्यस्तत्र शाम्भवशासनात् ॥ ६ ॥
उत्तमास्त्रिविधा मत्स्याः शालपाठीनरोहिताः ॥ ७ ॥
मध्यमाः कण्टकैर्हीना अधमा बहुकण्टकाः ।
तेऽपि देव्यै प्रदातव्या यदि सुष्ठु विभर्जिताः ॥ ८ ॥
मुद्रापि त्रिविधा प्रोक्ता उत्तमादि विभेदतः ।
चन्द्रबिम्बनिभं शुभ्रं शालितण्डुलसम्भवम् ।
यवगोधूमजं वापि घृतपक्वं मनोरमम् ॥ ९ ॥
मुद्रेयमुत्तमा मध्या भ्रष्टधान्यादिसम्भवा ।
भर्जितान्यन्यबीजानि अधमा परिकीर्त्तिता ॥ १० ॥
मांसं मीनश्च मुद्रा च फलमूलानि यानि च ।
सुधादाने देवतायै संज्ञैषां शुद्धिरीरिता ॥ ११ ॥

मांसस्य त्रिविधत्वमेव दर्शयति जलेत्यादिना । जलचरं कूर्म्मादि-मांसम् भूचरं छागादिमांसम् खेचरं तित्तिरिहारीतादिमांसम् तत् सर्वम् मांसम् ॥ ४ ॥

कल्पयेत् समर्पयेत् ॥ ५ ॥

पुरुषः पुंस्त्वावच्छिन्नः तत्र बलिदानविधौ ॥ ६ । ७ ॥

तेऽपि बहुकण्टका अपि मत्स्याः ॥ ८ ॥

चन्द्रबिम्बनिभम् चन्द्रमण्डलसदृशम् शुभ्रम् श्वेतम् शालितण्डुल-सम्भवम् शष्कुल्यादि ॥ ९ ॥

भ्रष्टधान्यादिसम्भवा लाजादि ॥ १० ॥

मांसमित्यादि । देवतायै सुधादाने सुरासमर्पणे एषां मांसादीनां शुद्धिरिति संज्ञा ईरिता कथिता ॥ ११ ॥

विना शुद्ध्या हेतुदानं पूजनन्तर्पणन्तथा।
निष्फलं जायते देवि! देवता न प्रसीदति॥ १२॥
शुद्धिं विना मद्यपानं केवलं विषभक्षणम्।
चिररोगी भवेन्मन्त्री स्वल्पायुर्म्रियतेऽचिरात्॥ १३॥
शेषतत्त्वं महेशानि! निर्वीजे प्रबले कलौ।
स्वकीया केवला ज्ञेया सर्वदोषविवर्जिता॥ १४॥
अत्र मान्त्रं स्वयम्भ्वादि कुसुमं प्राणवल्लभे!।
कथितं तत्प्रतिनिधौ कुशीदं परिकीर्त्तितम्॥ १५॥
अशोधितानि तत्त्वानि पत्रपुष्पफलानि च।
नैव दद्यान्महादेव्यै दत्त्वा वै नारकी भवेत्॥ १६॥
श्रीपात्रस्थापनं कुर्य्यात् स्त्रीयया गुणशीलया।
अभिषिञ्चेत् कारणेन सामान्यार्घ्योदकेन वा॥ १७॥
आदौ बालां समुच्चार्य्य त्रिपुरायै ततो वदेत्।
नमःशब्दावसाने च इमां शक्तिमुदीरयेत्॥ १८॥

मांसादीनां शुद्धिसंस्कारविधाने प्रयोजनं दर्शयन्नाह विना शुद्ध्येत्यादि। विना शुद्ध्या मांसादिकं विना हेतुदानम् सुरासमर्पणम्॥ १२॥

शुद्धिम् मांसादिकम्। अचिरात् अत्यल्पमेव कालमतीत्य॥ १३॥

शेषतत्त्वम् मैथुनम् निर्वीजे निस्तेजसि स्वकीया आत्मीया शक्तिः॥ १४॥

अथवेत्यादि। अत्र शेषतत्त्वविधौ तत्प्रतिनिधौ स्वयम्भ्वादि कुसुमप्रतिनिधौ। कुशीदम् रक्तचन्दनम्॥ १५॥

अशोधितानि सुरामांसादीनि महादेव्यै ददतः साधकस्य नरकगामित्वमाह अशोधितानीत्यादिना॥ १६॥

स्वीयया शक्त्या सह अभिषिञ्चेत् स्वीयां शक्तिमिति शेषः। कारणेन सुरया॥ १७॥

विना परिणयं वीरः शक्तिसेवां समाचरन् ।
परस्त्रीगामिनां पापं प्राप्नुयान्नात्र संशयः ॥ १७८ ॥
सम्प्राप्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः ।
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् ॥ १७९ ॥
नात्र जातिविचारोऽस्ति नोच्छिष्टादिविवेचनम् ।
चक्रमध्यगता वीरा मम रूपा यथाम्यथा ॥ १८० ॥
न देशकालनियमो न वा पात्रविचारणम् ।
येन केनाहृतं द्रव्यं चक्रेऽस्मिन् विनियोजयेत् ॥१८१॥
दूरदेशात् समानीतं पक्वं वापक्वमेव वा ।
वीरेण पशुना वापि चक्रमध्यगतं शुचिः ॥ १८२ ॥
चक्रारम्भे महेशानि ! विघ्नाः सर्वे भयाकुलाः ।
विभीतास्ते पलायन्ते वीराणां ब्रह्मतेजसा ॥ १८३ ॥
पिशाचा गुह्यका यक्षा वेतालाः क्रूरजातयः ।
श्रुत्वात्र भैरवीचक्रं दूरं गच्छन्ति साध्वसम् ॥ १८४॥
तत्र तीर्थानि सर्वाणि महातीर्थानि कानि च ।
सेन्द्रामरगणाः सर्वे तत्रागच्छन्ति सादरम् ॥ १८५ ॥
चक्रस्थानं महातीर्थं सर्वतीर्थाधिकं शिवे ! ।
त्रिदशा यत्र वाञ्छन्ति तव नैवेद्यमुत्तमम् ॥ १८६ ॥

परिणयम् विवाहम् ॥ १७८ । १७९ ॥
अत्र भैरवीचक्रे ॥ १८० ॥
द्रव्यं मद्यादि ॥ १८१ — १८२ ॥
साध्वसम् सभयम् ॥ १८४ ॥
यत्र चक्रस्थाने ॥ १८५ । १८६ ॥

संस्पृष्टं न श्वपचेनापि किरातेनापि हूणना।
आमं पक्वं यदानीतं वीरहस्तार्पितं शुचिः॥ १८७॥
दृष्ट्वा तु भैरवीचक्रं मम रूपांश्च साधकान्।
मुच्यन्ते पशुपाशेभ्यः कलिकल्मषदूषिताः॥ १८८॥
प्रबले कलिकाले तु न कुर्य्याच्चक्रगोपनम्।
सर्वत्र सर्वदा वीरः साधयेत् कुलसाधनम्॥ १८९॥
चक्रमध्ये वृथालापं चाञ्चल्यं बहुभाषणम्।
निष्ठीवनमधोवायुं वर्णभेदं विवर्ज्जयेत्॥ १९०॥
क्रूरान् खलान् पशून् पापान् नास्तिकान् कुलदूषकान्।
निन्दकान् कुलशास्त्राणां चक्राद्दूरतरं त्यजेत्॥ १९१॥
स्नेहाद्भयादानुरक्त्या पशुं चक्रे प्रवेशयन्।
कुलधर्म्मात् परिभ्रष्टो वीरोऽपि नरकं व्रजेत्॥ १९२॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः सामान्यजातयः।
कुलधर्म्माश्रिता ये वै पूज्यास्ते देववत् सदा॥ १९३॥
वर्णाभिमानाच्चक्रे तु वर्णभेदं करोति यः।
स याति घोरनिरयमपि वेदान्तपारगः॥ १९४॥
चक्रान्तर्गतकौलानां साधूनां शुद्धचेतसाम्।
साक्षाच्छिवस्वरूपाणां पापाशङ्का भवेत् कुतः॥ १९५॥
यावद्वसन्ति चक्रेषु विप्राद्याः शैवमार्गिणः।
तावत्तु शाम्भवाचारांश्चरेयुः शिवशासनात्॥ १९६॥
चक्राद्विनिःसृताः सर्व्वे स्वस्ववर्णाश्रमोदितम्।
लोकयात्राप्रसिद्ध्यर्थं कुर्य्युः कर्म्म पृथक् पृथक्॥ १९७॥

हूणना जातिविशेषेण आमम् अपक्वम्॥ १८७—१९१॥
भयाद्दानुरक्त्या भयस्नेहवेगानुरागेण॥ १९२—१९५॥

पुरश्चर्य्या शतेनापि शवमुण्डचितासनात् ।
चक्रमध्ये सकृत् जप्ता तत् फलं लभते सुधीः ॥ १९८ ॥
भैरवीचक्रमाहात्म्यं को वा वक्तुं क्षमो भवेत् ।
सकृदेतत् प्रकुर्व्वाणः सर्व्वैः पापैः प्रमुच्यते ॥ १९९ ॥
षण्मासं भूमिपालः स्यात् वर्षं मृत्युञ्जयः स्वयम् ।
नित्यं समाचरन् मर्त्त्यो ब्रह्मनिर्वाणमाप्नुयात् ॥२००॥
बहुना किमिहोक्तेन सत्यं जानीहि कालिके ! ।
इहामुत्र सुखावाप्त्यै कुलमार्गो हि नापरः ॥ २०१ ॥
कलेः प्राबल्यसमये सर्व्वधर्म्मविवर्ज्जिते ।
गोपनात् कुलधर्म्मस्य कौलोऽपि नारकी भवेत् ॥२०२॥
कथितं भैरवीचक्रं भोगमोक्षैकसाधनम् ।
तत्त्वचक्रं कुलेशानि ! साम्प्रतं वच्मि तत् शृणु ॥२०३॥
तत्त्वचक्रं चक्रराजं दिव्यचक्रं तदुच्यते ।
नात्राधिकारः सर्व्वेषां ब्रह्मज्ञान् साधकान् विना ॥२०४॥
परब्रह्मोपासका ये ब्रह्मज्ञा ब्रह्मतत्पराः ।
शुद्धान्तःकरणाः शान्ताः सर्व्वप्राणिहिते रताः ॥२०५॥
निर्व्विकारा निर्व्विकल्पा दयाशीला दृढव्रताः ।
सत्यसङ्कल्पका ब्राह्मणास्त एवात्राधिकारिणः ॥ २०६ ॥

चरेयुः कुर्य्युः ॥ १९६ । १९७ ॥

पुरश्चर्य्येत्यादि । शवमुण्डचितासनात् शवासनात् मुण्डासनात् चितासनाच्च यत् फलं लभते ॥ १९८ । १९९ ॥

षण्मासमिति । षण्मासं भैरवीचक्रं समाचरन् मर्त्त्यो भूमिपालः स्यादित्येवमन्वयः ॥ २००–२०२ ॥

अत्र चक्रराजे तत्त्वचक्रे ॥ २०४ ॥

शान्ताः रागद्वेषादिशून्याः ॥ २०५ ॥

ब्रह्मभावेन तत्त्वज्ञे ! ये पश्यन्ति चराचरम् ।
तेषां तत्त्वविदां पुंसां तत्त्वचक्रेऽधिकारिता ॥ २०७ ॥
सर्व्वं ब्रह्ममयं भावश्चक्रेऽस्मिंस्तत्त्वसंज्ञके ।
येषामुत्पद्यते देवि ! तएव तत्त्वचक्रिणः ॥ २०८ ॥
न घटस्थापनात्रास्ति न बाहुल्येन पूजनम् ।
सर्व्वत्र ब्रह्मभावेन साधयेत् तत्त्वसाधनम् ॥ २०९ ॥
ब्रह्ममन्त्री ब्रह्मनिष्ठो भवेच्चक्रेश्वरः प्रिये ! ।
ब्रह्मज्ञैः साधकैः सार्द्धं तत्त्वचक्रं समारभेत् ॥ २१० ॥
रम्ये सुनिर्म्मले देशे साधकानां सुखावहे ।
विचित्रासनमानीय कल्पयेद्विमलासनम् ॥ २११ ॥
तत्रोपविश्य चक्रेशः सहितो ब्रह्मसाधकैः ।
आसादयेत्तु तत्त्वानि स्थापयेदग्रतः शिवे ! ॥ २१२ ॥
तारादिप्राणबीजान्तं शतावृत्त्या जपन् मनुम् ।
सर्व्वं तत्त्वेषु चक्रेश इमं मन्त्रमुदीरयेत् ॥ २१३ ॥

अत्र तत्त्वचक्रे ॥ २०६ । २०७ ॥

भावो भावना विचिन्तनेत्यर्थः ॥ २०८ ॥

तत्त्वसाधनम् तत्त्वचक्रसाधनम् ॥ २०९ । २१० ॥

अथ तत्त्वचक्रस्य विधानमाह रम्ये इत्यादिभिः ॥ २११ ॥

तत्र कल्पिते विमलासने आसादयेत् आनयेत् तत्त्वानि मद्यादीनि ॥ २१२ ॥

तारादीत्यादि । ततो मद्यादिषु सर्वतत्त्वेषु तारादिप्राणबीजान्तं तारः प्रणव आदिर्यस्य स तारादिः प्राणबीजं हंस इति बीजमन्तो यस्य सः प्राणबीजान्तः तारादिश्चासौ प्राणबीजान्तश्च तारादिप्राणबीजान्तस्तं मनुम् ओं हंस इति मन्त्रं शतावृत्त्या जपं-श्चक्रेश इमं वक्ष्यमाणं मन्त्रमुदीरयेत् ॥ २१३ ॥

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥ २१४ ॥
सप्तधा वा त्रिधा जप्त्वा तानि सर्व्वाणि शोधयेत् ॥२१५॥
ततो ब्राह्मेण मनुना समर्प्य परमात्मने ।
ब्रह्मज्ञैः साधकैः सार्द्धं विदध्यात् पानभोजनम् ॥२१६॥
ब्रह्मचक्रे महेशानि ! वर्णभेदं विवर्जयेत् ।
न देशकालनियमो न पात्रनियमस्तथा ॥ २१७ ॥
ये कुर्व्वन्ति नरा मूढ़ा दिव्यचक्रे प्रमादतः ।
कुलभेदं वर्णभेदं ते गच्छन्त्यधमां गतिम् ॥ २१८ ॥
अतः सर्व्वप्रयत्नेन ब्रह्मज्ञैः साधकोत्तमैः ।
तत्त्वचक्रमनुष्ठेयं धर्म्मकामार्थमुक्तये ॥ २१९ ॥

श्रीदेव्युवाच ।

गृहस्थानामशेषेण धर्म्मानकथयत् प्रभो ! ।
संन्यासविहितान् धर्म्मान् कृपया वक्तुमर्हसि ॥ २२० ॥

श्रीसदाशिव उवाच ।

अवधूताश्रमो देवि ! कलौ संन्यास उच्यते ।
विधिना येन कर्त्तव्यस्तत् सर्व्वं शृणु साम्प्रतम् ॥२२१

मन्त्रमेवाह ब्रह्मार्पणमिति ॥ २१४ ॥

सप्तधेति । इमं मन्त्रं सप्तधा त्रिधा वा जप्त्वा सर्व्वाणि तानि मद्यादीनि शोधयेत् ॥ २१५ ॥

ब्राह्मेण मनुना ओं सच्चिदेकं ब्रह्मेति मन्त्रेण ॥ २१६ ॥

ब्रह्मचक्रे तत्त्वचक्रे ॥ २१७–२१९

एवमशेषान् गृहस्थधर्म्मान् श्रुत्वा अधुना संन्यासिधर्म्मान् श्रोतुमिच्छन्ती श्रीदेव्युवाच गृहस्थानामित्यादि ॥ २२० ॥

ब्रह्मज्ञाने समुत्पन्ने विरते सर्व्वकर्म्मणि ।
अध्यात्मविद्यानिपुणः संन्यासाश्रममाश्रयेत् ॥ २२२ ॥
विहाय वृद्धौ पितरौ शिशुं भार्य्यां पतिव्रताम् ।
त्यक्त्वासमर्थान् बन्धूंश्च प्रव्रजन्नारकी भवेत् ॥ २२३ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च ।
कुलावधूतसंस्कारे पञ्चानामधिकारिता ॥ २२४ ॥
सम्पाद्य गृहकर्म्माणि परितोष्य परानपि ।
निर्म्ममो निलयाद्गच्छेन्निष्कामो विजितेन्द्रियः ॥ २२५ ॥
आहूय स्वजनान् बन्धून् ग्रामस्थान् प्रतिवासिनः ।
प्रीत्यानुमतिमन्विच्छेत् गृहाज्जिगमिषुर्ज्जनः ॥ २२६ ॥
तेषामनुज्ञामादाय प्रणम्य परदेवताम् ।
ग्रामं प्रदक्षिणीकृत्य निरपेक्षो गृहादियात् ॥ २२७ ॥
मुक्तः संसारपाशेभ्यः परमानन्दनिर्वृतः ।
कुलावधूतं ब्रह्मज्ञं गत्वा संप्रार्थयेदिदम् ॥ २२८ ॥
गृहाश्रमे परब्रह्मन् ! ममैतद्विगतं वयः ।

एवं प्रेरितः सन् श्रीसदाशिव उवाच अवधूतेत्यादि । तत् विधानम् साम्प्रतमिदानीम् ॥ २२१ ॥

सन्न्यासग्रहणविधानमेवाह ब्रह्मज्ञाने इत्यादिभिः । अध्यात्मविद्यानिपुणः आत्मविद्याभिज्ञः ॥ २२२—२२४ ॥

सम्पाद्य साधयित्वा परान् पित्रादिभिन्नान् निर्ममः गृहादिविषयममताशून्यः निलयात् गृहात् ॥ २२५ ॥

अनुमतिमन्विच्छेत् अनुज्ञामादद्यात् ॥ २२६ ॥

निरपेक्षः निस्पृहः इयात् गच्छेत् ॥ २२७ ॥

परमानन्दनिर्वृतः परमानन्दे निमग्नः ॥ २२८ ॥

प्रमादं कुरु मे नाथ! संन्यासग्रहणं प्रति ॥ २२९ ॥
निवृत्तगृहकर्म्माणं विचार्य्य विधिवद्गुरुः ।
शान्तं विवेकिनं वीक्ष्य द्वितीयाश्रममादिशेत् ॥२३०॥
ततः शिष्यः कृतस्नानो यतात्मा विहिताह्निकः ।
ऋणत्रयविमुक्त्यर्थं देवर्षीनर्च्चयेत् पितॄन् ॥ २३१ ॥
देवा ब्रह्मा च विष्णुश्च रुद्रश्च स्वगणैः सह ।
ऋषयः सनकाद्याश्च देवब्रह्मर्षयस्तथा ॥ २३२ ॥
अत्र ये पितरः पूज्या वक्ष्यामि शृणु तानपि ॥ २३३ ॥
पिता पितामहश्चैव प्रपितामह एव च ।
माता पितामही देवि! तथैव प्रपितामही ।
मातामहादयोऽप्येवं मातामह्यादयोऽपि च ॥ २३४ ॥

यत् प्रार्थयेत् तदाह गृहाश्रमे इत्यादिना ॥ २२९ ॥

शान्तम् उपरतचित्तम् ॥ २३० ॥

ततः परं यतात्मा संयतमनाः शिष्यः कृतस्नानो विहिताह्निकश्च भूत्वा ऋणत्रयविमुक्त्यर्थं देवर्षीन् देवान् पितॄंश्चार्च्चयेत् पूजयेत् ॥ २३१ ॥

ऋणविमुक्त्यर्थं ये देवा ऋषयश्च पूज्यास्तानाह देवा इत्यादिना । ब्रह्मा च विष्णुश्च स्वगणैः सह रुद्रश्चैते देवाः सन्न्यासकर्मणि पूज्याः सनक आद्यो येषां ते सनकाद्याः सनकसनन्दनसनातनाद्याः सनकसजातीया ऋषयः तथा देवर्षयो नारदादयो ब्रह्मर्षयो भृग्वादयश्च पूज्याः ॥ २३२ ॥

अत्र सन्न्यासकर्मणि ॥ २३३ ॥

ऋणविमुक्त्यर्थं पूज्यान् पितॄनेवाह पितेत्यादि सार्द्धेन । एवं पितादिवन्मातामहादयोऽपि पूज्याः एवमन्वयः आदिना प्रमातामहवृद्धप्रमातामहयोः प्रमातामहीवृद्धप्रमातामह्योश्च ग्रहणम् ॥ २३४ ॥

प्राच्यामृषीन् यजेद्देवान् दक्षिणस्यां पितॄन् यजेत्।
मातामहान् प्रतीच्याञ्च पूजयेच्छ्राद्धकर्म्मणि ॥ २२५ ॥
पूर्व्वादिक्रमतो दद्यादासनानां द्वयं द्वयम्।
देवादीन् क्रमतस्तत्रावाह्य पूजां समाचरेत् ॥ २२६ ॥
समर्च्य विधिवत्तेभ्यः पिण्डान् दद्यात् पृथक् पृथक्।
पिण्डप्रदानविधिना दत्वा पिण्डं यथाक्रमम्।
कृताञ्जलिपुटो भूत्वा प्रार्थयेत् पितृदेवताः ॥ २२७ ॥
तृप्यध्वं पितरो देवा देवर्षिमातृका गणाः
गुणातीतपदे यूयमनृणीकुरुताचिरात् ॥ २२८ ॥
इत्यानृण्यमर्थयित्वा प्रणम्य च पुनः पुनः।

ननु कस्यां कस्यां दिशि देवादृषीन् पितॄंश्च पूजयेदित्यपेक्षायामाह प्राच्यामित्यादि। श्राद्धकर्म्मणि देवानृषींश्च प्राच्यां पूर्वस्यां दिशि यजेत् दक्षिणस्यां दिशि पितॄन् पित्रादीन् यजेत् प्रतीच्यां पश्चिमायां दिशि मातामहान्मातामहप्रभृतीन् पूजयेत् ॥ २२५ ॥

अथ संक्षेपतो देवादीनां पूजाया विधानमाह पूर्वादिक्रमत इत्यादिभिः। पूर्वादिक्रमतः पूर्वादिक्रमेण तिसृषु दिक्षासनानां द्वयं द्वयं दद्यात् तत्रासनानां द्वये द्वये क्रमतो देवादीनावाह्य तेषां पूजां समाचरेत् कुर्य्यात् ॥ २२६ ॥

समर्च्येत्यादि। देवर्षिपितॄन् विधिवत् समर्च्य तेभ्यो देवर्षिपितृभ्यः पृथक् पृथक् पिण्डान् विधिवद्दद्यात् वक्ष्यमाणेन पिण्डप्रदानविधिन देवादिभ्यो यथाक्रमं पिण्डं दत्वा कृताञ्जलिपुटो भूत्वा पितृदेवताः प्रार्थयेत् ॥ २२७ ॥

किं प्रार्थयेत्तत्राह तृप्यध्वमित्यादि। हे पितरो! देवा! देवर्षयो! मातृगणाश्च यूयं तृप्यध्वं गुणातीतपदे अतिक्रान्तगुणे पदे व्रजन्तं माम् अचिरादतिशीघ्रमेव यूयमनृणं कुरुत ॥ २२८ । २२९ ॥

ऋणत्रयविनिर्मुक्त श्चात्मश्राद्धं प्रकल्पयेत् ॥ २३९ ॥
पिता ह्यात्मैव सर्व्वेषां तत्पिता प्रपितामहः ।
आत्मन्यात्मार्पणार्थाय कुर्य्यादात्मक्रियां सुधीः ॥२४०॥
उत्तराभिमुखो भूत्वा पूर्व्ववत् कल्पितासने ।
आवाह्यात्मपितॄन् देवि ! दद्यात् पिण्डं समर्चयन् ॥२४१
प्रागग्रान् दक्षिणाग्रांश्च पश्चिमाग्रात् यथाक्रमात् ।
पिण्डार्थमास्तरेद्दर्भानुदगग्रान् स्वकर्म्मणि ॥ २४२ ॥
समाप्य श्राद्धकर्म्माणि गुरुर्दीक्षितवर्त्मना ।
शिष्यस्य चित्तशुद्ध्यर्थमिमं मन्त्रं शतं जपेत् ॥ २४३ ॥
ह्रीं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान् मृत्योर्मुक्षीयमामृतात् ॥२४४॥
उपासनानुसारेण वेद्यां मण्डलपूर्व्वकम् ।
संस्थाप्य कलसं तत्र गुरुः पूजां समारभेत् ॥ २४५ ॥

आत्मश्राद्धकरणे हेतुं दर्शयन्नाह पिता हीत्यादि । यतः सर्वेषामात्मैव पिता तत्पिता पितामहः प्रपितामहश्च स्यात् अतः आत्मनि परमात्मनि आत्मनोऽर्पणार्थाय सुधीर्विद्वान् आत्मक्रियां कुर्य्यात् ॥ २४० ॥

संक्षेपतः आत्मनः श्राद्धस्य विधानमाह उत्तराभिमुख इत्यादिना आत्मपितॄन् आत्मस्वरूपान् पित्रादीन् ॥ २४१ ॥

प्रागग्रानिति । पिण्डार्थं देवर्षिपितृमनुष्यकपिण्डदानार्थं यथाक्रमात् क्रमेणैव प्राक् प्राच्यां दिश्यग्राणि येषां तान् प्रागग्रान् दक्षिणाग्रान् पश्चिमाग्रांश्च दर्भान् कुशानास्तरेदाच्छादयेत् स्वकर्म्मणि एवात्मश्राद्धक्रियायां तु उदक् उदीच्यामग्राणि येषां तथाभूतान् दर्भानास्तरेत् ॥ २४२ । २४३ ॥

तमेव मन्त्रमाह ह्रीं त्र्यम्बकमित्यादिकम् ॥ २४४ ॥

ततस्तु परमं ब्रह्म ध्यात्वा ब्राधवत्मना।
विधाय पूजां ब्रह्मज्ञो वह्निस्थापनमाचरेत्॥ २४६॥
प्रागुक्तसंस्कृते वह्नौ सकल्योत्ताहुतिं गुरुः।
दत्वा शिष्यं समाहूय साकल्यं हावयेत्तु तम्॥ २४७॥
आदौ व्याहृतिभिर्हुत्वा प्राणहोमं प्रकल्पयेत्।
प्राणापानौ समानश्चोदानव्यानौ च वायवः॥ २४८॥
तत्त्वहोमं ततः कुर्य्याद्देहाभ्याससुक्तये।
पृथिवीसलिलं वह्निर्वायुराकाशमेव च॥ २४९॥
गन्धो रसश्च रूपञ्च स्पर्शः शब्दो यथाक्रमात्।
ततो वाक्पाणिपादाश्च पायूपस्थौ ततः परम्॥ २५०

उपासनेत्यादि। ततः उपासनाया अनुसारेण रचितायां वेद्यां मङ्गलपूर्वकं कलसं संस्थाप्य तत्र कलसे शिष्यस्येष्टदेवतायाः पूजां गुरुः समारभेत्॥ २४५॥

ततस्त्विति। ततस्तु शिष्येष्टदेवतापूजनादनन्तरं तु ब्रह्मज्ञो गुरुः परमं ब्रह्म ध्यात्वा ब्राधवत्मना तस्य पूजां च विधाय वेद्यां वह्नि-स्थापनमाचरेत् कुर्य्यात्॥ २४६॥

प्रागुक्तेत्यादि। ततः प्रागुक्तेन विधिना संस्कृते वह्नौ सकल्यो-त्ताहुतिं सकल्पे उत्तमामाहुतिं दत्वा गुरुस्तं शिष्यं समाहूय तेन साकल्यमग्नौ हावयेत्॥ २४७॥

आदाविति। आदौ प्रथमतो भूतादिभिर्व्याहृतिभिः साकल्यं हुत्वा ततः प्राणहोमं शरीरस्थप्राणादिपञ्चवायुहोमं प्रकल्पयेत् कुर्य्यात्। होतव्यान् प्राणादीन् पञ्चवायूनाह प्राणेत्याद्यर्द्धेन॥ २४८॥

तत्त्वेति। ततः परं देहाभ्यासमुक्तये शरीरनिष्ठाभिमानविच्छेदार्थं यथाक्रमं तत्त्वहोमं पृथ्व्यादिचतुर्विंशतितत्त्वहवनं कुर्य्यात्। क्रमेणैव हवनीयानि चतुर्विंशतितत्त्वान्याह पृथिवीत्यादिनाहङ्कार-रूपमनेन विभिन्नत्रिकेन सपादत्रयेन॥ २४९॥

श्रोत्रं त्वङ्नयनं जिह्वा घ्राणं बुद्धीन्द्रियाणि च ।
मनो बुद्धिश्च चित्तञ्चाहङ्कारो देहजाः क्रियाः ॥ २५१ ॥
सर्व्वाणीन्द्रियकर्म्माणि प्राणकर्म्माणि यानि च ॥ २५२ ॥
एतानि मे पदान्ते च शुद्ध्यन्तां पदमुच्चरेत् ।
ह्रीं ज्योतिरहं विरजा विपाप्मा भूयासमित्यपि ॥ २५३ ॥
चतुर्व्विंशतितत्त्वानि कर्म्माणि दैहिकानि च ।
हुत्वाग्नौ निष्क्रियो देहं मृतवच्चिन्तयेत्ततः ॥ २५४ ॥

गन्ध इत्यादि । पृथिव्यादिपञ्चतत्त्वहवनानन्तरं गन्धादिपञ्च-तत्त्वानि यथाक्रमात् होतव्यानि ततो वागादिपञ्चकर्म्मेन्द्रियाणि हवनीयानि ततः परं श्रोत्रादीनि पञ्चबुद्धीन्द्रियाणि होतव्यानि ततो मन आदीनि चत्वारि तत्त्वानि हवनीयानि ततो देहजाः क्रियाः होतव्याः ॥ २५० । २५१ ॥

सर्व्वाणीति । ततः सर्व्वाणीन्द्रियकर्म्माणि यानि च प्राणकर्म्माणि तान्यपि हवनीयानि ॥ २५२ ॥

प्राणादिपञ्चवायूनां पृथिव्यादिचतुर्व्विंशतितत्त्वानां देहजक्रियाणां सर्व्वेषां कर्म्मणां प्राणादिवायुकर्म्मणाञ्च होतव्यमन्त्रमाह एतानीत्या-दिना । पूर्व्वं एतानि मे इत्युच्चरेत् । तत्पदान्ते च शुद्ध्यन्तामिति पदमुच्चरेत् । ततो ह्रीं ज्योतिरहं विरजा विपाप्मा भूयासमित्युच्चरेत् ततो द्विठः स्वाहेत्यप्युच्चरेत् योजनया एतानि मे शुद्ध्यन्तां ह्रीं ज्योति-रहं विरजा विपाप्मा भूयासं स्वाहेति मन्त्रो जातः अनेनैव प्राणा-दीनि प्राणकर्म्मपर्य्यन्तानि सर्व्वाणि जुहुयात् यथा प्राणापानसमानोदान-व्याना मे शुद्ध्यन्तां ह्रीं ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहेति प्राणादीन् जुहुयादिति एवं सर्व्वत्र योजना ॥ २५३ ॥

चतुर्व्विंशतीत्यादि । एवं चतुर्व्विंशतितत्त्वानि दैहिकानि कर्म्माणि चाग्नौ हुत्वा निष्क्रियः क्रियाभ्यो निष्क्रान्तश्च भूत्वा ततो मृतवच्चिन्त-येत् ॥ २५४ ॥

विभाव्य मृतवत् कायं रहितं सर्व्वकर्म्मणा ।
अरंस्मरन् परमं ब्रह्म यज्ञसूत्रं समुद्धरेत् ॥ २५५ ॥
ऐं क्लीं हूं इति मन्त्रेण स्कन्धादुत्तार्य्य तत्त्ववित् ।
यज्ञसूत्रं करे कृत्वा पठित्वा व्याहृतित्रयम् ।
वह्निजायां समुच्चार्य्य घृताक्तमनले क्षिपेत् ॥ २५६ ॥
हुत्वैवमुपवीतञ्च कामबीजं समुच्चरन् ।
छित्त्वा शिखां करे कृत्वा घृतमध्ये नियोजयेत् ॥ २५७ ॥
ब्रह्मपुत्रि ! शिखे ! त्वं हि बालरूपा तपस्विनी ।
दीयते पावके स्थानं गच्छ देवि ! नमोऽस्तु ते ॥ २५८ ॥
कामं मायां कूर्च्चमन्त्रं वह्निजायामुदीरयन् ।
तस्मिन् सुसंस्कृते वह्नौ शिखाहोमं समाचरेत् ॥ २५९ ॥
शिखामाश्रित्य पितरो देवा देवर्षयस्तथा ।
सर्व्वाण्याश्रमकर्म्माणि निवसन्ति शिखोपरि ॥ २६० ॥

विभाव्येति । सर्व्वकर्म्मणा रहितं मृतवच्च कायं देहं विभाव्य विचिन्त्य तत् जगत्कारणत्वेनातिप्रसिद्धं परमं ब्रह्म स्मरन् सन् यज्ञसूत्रं यज्ञोपवीतं समुद्धरेत् उरःस्थलात् स्कन्धं नयेत् ॥ २५५ ॥

ऐमित्यादि । ततः तत्त्ववित् ब्रह्मविज्जनः ऐं क्लीं हूमिति मन्त्रेण यज्ञसूत्रं स्कन्धादुत्तार्य्य करे हस्ते च कृत्वा व्याहृतित्रयं पठित्वा व्याहृतित्रयान्ते च वह्निजायां स्वाहेति पदं समुच्चार्य्य घृताक्तं घृतसंयुक्तं यज्ञसूत्रमनलेऽग्नौ क्षिपेत् ॥ २५६ ॥

हुत्वेति । एवं प्रकारेणोपवीतं यज्ञसूत्रमग्नौ हुत्वा कामबीजं क्लीमिति बीजं समुच्चरन् सन् शिखां छित्त्वा करे च कृत्वा घृतमध्ये नियोजयेत् स्थापयेत् ॥ २५७ ॥

ब्रह्मेति । ततो ब्रह्मपुत्रि इत्याद्यं नमोऽस्तु इत्यन्तं मन्त्रमुदीरयन् कीर्त्तयन् तस्मिन् सुसंस्कृते वह्नौ शिखाया होमं समाचरेत् कुर्य्यात् ॥ २५८—२६० ॥

अतः सन्तर्प्य ताः सर्वा देवर्षिपितृदेवताः ।
शिखासूत्रपरित्यागाद्देही ब्रह्ममयो भवेत् ॥ २६१ ॥
यज्ञसूत्रशिखात्यागात् सन्न्यासः स्यात् द्विजन्मनाम् ॥२६२॥
शूद्राणामितरेषाञ्च शिखां छित्त्वैव संक्रिया ।
ततो मुक्तशिखासूत्रः प्रणमेत् दण्डवद्‌ गुरुम् ॥ २६३ ॥
गुरुरुत्थाप्य तं शिष्यं दक्षकर्णे वदेदिदम् ।
तत्त्वमसि महाप्राज्ञ ! हंसः सोऽहं विभावय ।
निर्म्ममो निरहङ्कारः स्वभावेन सुखं चर ॥ २६४ ॥
ततो घटञ्च वह्निञ्च विसृज्य ब्रह्मतत्त्ववित् ।
आत्मस्वरूपं तं मत्वा प्रणमेच्छिरसा गुरुः ॥ २६५ ॥
नमस्तुभ्यं नमो मह्यं तुभ्यं मह्यं नमो नमः ।
त्वमेव तत् तत्त्वमेव विश्वरूप ! नमोऽस्तु ते ॥ २६६ ॥
ब्रह्ममन्त्रोपासकानां तत्त्वज्ञानां जितात्मनाम् ।

ब्रह्ममयो ब्रह्मस्वरूपः ॥ २६१ ॥

द्विजन्मनाम् ब्राह्मणक्षत्रियवैश्यानाम् इतरेषाम् वर्णसङ्कराणाम् ॥ २६२ । २६३ ॥

ननु गुरुः शिष्यस्य दक्षिणे कर्णे किं वदेदित्यपेक्षायामाह तत्त्वमसीत्यादि । हे महाप्राज्ञ महामनीषिन् ! तत् जगत्कारणत्वेनातिप्रसिद्धं परं ब्रह्म त्वमेवासि अतोऽहमेव स परमात्मा स एवाहमस्मीति त्वं विभावय विचिन्तय किञ्च निर्ममः पुत्रादिविषयकममताशून्यो निरहङ्कारो विद्यादिनिमित्तकचित्तसमुन्नतिशून्यश्च सन् स्वभावेन सुखं यथा स्यात्तथा चर इतस्ततो गच्छ अटेत्यस्यादेर्लोपस्त्वार्षः ॥ २६४ ॥

तत इति । ततः परं घटं वह्निञ्च विसृज्य ब्रह्मतत्त्ववित् गुरुः शिष्यमात्मस्वरूपं मत्वा वक्ष्यमाणमन्त्रेण शिरसा प्रणमेत् ॥ २६५ ॥

येन मन्त्रेण प्रणमेत् तमेव मन्त्रमाह नमस्तुभ्यमित्यादिकम् ॥२६६॥

स्वमन्त्रेण शिखाच्छेदात् सन्यासग्रहणं भवेत् ॥२६७॥
ब्रह्मज्ञानविशुद्धानां किं यज्ञैः श्राद्धपूजनैः ।
स्वेच्छाचारपराणान्तु प्रत्यवायो न विद्यते ॥ २६८ ॥
ततो निर्द्वन्द्वरूपोऽसौ निष्कामस्थिरमानसः ।
विहरेत् स्वेच्छया शिष्यः साक्षाद् ब्रह्ममयो भुवि॥२६९॥
आब्रह्मस्तम्बपर्यन्तं सद्रूपेण विभावयन् ।
विश्वरूपाणि नामरूपाणि ध्यायन्नात्मानमात्मनि ॥ २७० ॥
अनिकेतः क्षमावृत्तो निःशङ्कः सङ्गवर्जितः ।
निर्ममो निरहङ्कारः सन्यासी विहरेत् क्षितौ ॥२७१॥
मुक्तो विधिनिषेधेभ्यो निर्योगक्षेम आत्मवित् ।
सुखदुःखसमो धीरो जितात्मा विगतस्पृहः ॥ २७२ ॥

ब्रह्ममन्त्रोपासकानान्तु सन्यासग्रहणे विशेषविधिमाह ब्रह्ममन्त्रेत्यादिना । तत्त्वज्ञानां ब्रह्मज्ञानिनां जितात्मनां जितमनसां ब्रह्ममन्त्रोपासकानां स्वमन्त्रेण शिखाच्छेदादेव सन्यासग्रहणं भवेत् ॥ २६७ ॥

ननु यज्ञश्राद्धादिकमकृत्वैव सन्यासं गृह्णतां ब्रह्ममन्त्रोपासकानां प्रत्यवायभागित्वं स्यात्तत्राह ब्रह्मज्ञानेत्यादि ॥ २६८ ॥

निर्द्वन्द्वरूपः सुखदुःखादियुगलानि द्वन्द्वानि तद्रहितो निर्द्वन्द्वस्तत्स्वरूपः ॥ २७६ ॥

आब्रह्मस्तम्बपर्य्यन्तं ब्रह्मारभ्य तृणादिगुल्मपर्य्यन्तं सद्रूपेण सत्स्वरूपेण विभावयन् विचिन्तयन् ॥ २७० ॥

अनिकेत इत्यादि । अनिकेतः नियतवासशून्यः क्षमावृत्तः क्षमैव वृत्तं यस्य सः निःशङ्कः उद्वेगरहितः सङ्गवर्जितः कश्चिदन्यना-सक्तः ॥ २७१ ॥

मुक्त इत्यादि । निर्योगक्षेमः अप्राप्तस्वीकारो योगः प्राप्तपरि-

स्थिरात्मा प्राप्तदुःखोऽपि सुखे प्राप्तेऽपि निस्पृहः ।
सदानन्दः शुचिः शान्तो निरपेक्षो निराकुलः ॥२७३॥
नोद्वेजकः स्याज्जीवानां सदा प्राणिहिते रतः ।
विगतामर्षभीर्दान्तो निःसङ्कल्पो निरुद्यमः ॥ २७४ ॥
शोकद्वेषविमुक्तः स्यात् शत्रौ मित्रे समो भवेत् ।
शीतवातातपसहः समो मानापमानयोः ॥ २७५ ॥
समः शुभाशुभे तुष्टो यदृच्छया प्राप्तवस्तुना ।
निस्त्रैगुण्यो निर्विकल्पो निर्लोभः स्यादसञ्चयी ॥२७६॥
यथासत्यमुपाश्रित्य मृषा विश्वं प्रतिष्ठति ।
आत्माश्रितस्तथा देहो जानन्नेवं सुखी भवेत् ॥ २७७॥

पालनं क्षेमः ताभ्यां रहितः सुखदुःखसमः सुखदुःखे समे यस्य सः जितात्मा जितदेहः विगतस्पृहः उच्चावचेषु इष्टमात्रेषु वस्तुषु इतस्ततो जिघृक्षा स्पृहा विगता स्पृहा यस्य सः ॥ २७२ ॥

स्थिरेत्यादि । स्थिरात्मा स्थिरचित्तः स्थिरस्वभावो वा निस्पृहः भोगाकाङ्क्षाशून्यः शुचिः बाह्याभ्यन्तरशौचसम्पन्नः शान्तः संयतान्तःकरणः निरपेक्षः परापेक्षारहितः निराकुलः आकुलताशून्यः ॥ २७३ ॥

नेत्यादि । नोद्वेजकः न भीतिजनकः विगतामर्षभीः अपगतक्रोधभयः दान्तः संयतबाह्येन्द्रियः निरुद्यमः स्वदेहनिर्वाहार्थव्यापारशून्यः ॥ २७४ ॥

शोकेत्यादि । शत्रौ मित्रे च समः एकरूपः मानापमानयोरपि समः हर्षविषादशून्य इत्यर्थः ॥ २७५ ॥

सम इत्यादि । निस्त्रैगुण्यः त्रयो गुणा यस्मिन् स त्रिगुणः सकामः तस्य भावस्त्रैगुण्यम् तस्मान्निष्क्रान्तो निस्त्रैगुण्यः निष्कामः इत्यर्थः निर्विकल्पः नानाविधकल्पनाशून्यः निर्लोभः धनाद्यागमे बहुधा जायमानेऽपि पुनर्बहुमानोऽभिलाषो लोभः तद्रहितः असञ्चयी तत्तद्वस्तुसञ्चयाभाववान् ॥ २७६ ॥

इन्द्रियाण्येव कुर्वन्ति स्वं स्वं कर्म पृथक् पृथक् ।
आत्मा साक्षी विनिर्लिप्तो ज्ञात्वैवं मोक्षभाग् भवेत्॥२७८

धातुप्रतिग्रहं निन्दामनृतं क्रीडनं स्त्रिया ।
रेतस्त्यागमसूयाञ्च सन्न्यासी परिवर्ज्जयेत् ॥ २७९ ॥

सर्वत्र समदृष्टिः स्यात् कीटे देवे तथा नरे ।
सर्वं ब्रह्मेति जानीयात् परिव्राट् सर्वकर्म्मसु ॥ २८० ॥

विप्रान्नं श्वपचान्नं वा यस्मात्तस्मात् समागतम् ।
देशं कालं तथा पात्रमश्नीयादविचारयन् ॥ २८१ ॥

अध्यात्मशास्त्राध्ययनैः सदा तत्त्वविचारणैः ।
अवधूतो नयेत् कालं स्वेच्छाचारपरायणः ॥ २८२ ॥

सन्न्यासिनां मृतं कायं दाहयेन्न कदाचन ।
सम्पूज्य गन्धपुष्पाद्यैर्निखनेद्वाप्सु मज्जयेत् ॥ २८३ ॥

यथेत्यादि । यथा सत्यं परमात्मानमेवोपाश्रित्यायलब्ध्र क्रिया मिथ्याभूतमपि विश्वं प्रतिष्ठति सत्यवदास्ते तथैवात्मानमाश्रितो मिथ्याभूत एव देहः प्रतिष्ठति एवं जानन् सन्न्यासी सुखी भवेत् ॥ २७७ ॥

इन्द्रियाणीति । इन्द्रियाण्येव पृथक् पृथक् स्वं स्वं कर्म कुर्वन्ति आत्मा तु साक्षी केवलः शुभाशुभकर्मणां द्रष्टा भवति अतएव निर्लिप्तः तत्तत्कर्मभिर्बद्धो न भवति एवं ज्ञात्वैव सन्न्यासी मोक्षभाग् भवेत् २७८ ॥

अनृतम् अयथार्थभाषणम् असूयाम् गतुस्वपि गुणेषु दोषारोपणम् ॥ २७९—२८१ ॥

अध्यात्मशास्त्राध्ययनैः वेदान्तादिशास्त्रपाठैः तत्त्वविचारणैः अह्म तत्त्वविवेचनैः ॥ २८२ ॥

निखनेत् शुचौ भूमौ गर्त्तं विधाय तत्रैव निदध्यात् अप्सु जलेषु ॥ २८३ ॥

अप्राप्तयोगमर्त्यानां सदा कामाभिलाषिणाम् ।
स्वभावाज्जायते देवि ! प्रवृत्तिः कर्म्मसङ्कुले ॥ २८४ ॥
तत्रापि ते सानुरक्ता ध्यानार्च्चाजपसाधने ।
श्रेयस्तदेव जानन्तु यत्रैव दृढनिश्चयाः ॥ २८५ ॥
अतः कर्म्मविधानानि प्रोक्तानि चित्तशुद्धये ।
नामरूपं बहुविधं तदर्थं कल्पितं मया ॥ २८६ ॥
ब्रह्मज्ञानादृते देवि ! कर्म्मसंन्यसनं विना ।
कुर्वन् कल्पशतं कर्म्म न भवेन्मुक्तिभाग् जनः ॥ २८७ ॥
कुलावधूतस्तत्त्वज्ञो जीवन्मुक्तो नराकृतिः ।
साक्षान्नारायणं मत्वा गृहस्थस्तं प्रपूजयेत् ॥ २८८ ॥
यतेर्दर्शनमात्रेण विमुक्तः सर्वपातकात् ।
तीर्थव्रततपोदानसर्वयज्ञफलं लभेत् ॥ २८९ ॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे श्रीमदाद्यासदाशिवसंवादे वर्णाश्रमाचारधर्मकथनं नामाष्टमोल्लासः ।

अप्राप्तयोगमर्त्यानाम् न प्राप्तो योगो ब्रह्मज्ञानसंबन्धो यैस्तथाभूतानाम् कर्मसङ्कुले कर्मसमूहे ॥ २८४ ॥

तत्रापि तत्रैवापि अप्राप्तयोगमर्त्याः सानुरक्ताः अनुरागवन्तः तदेव अर्च्चादिकर्मैव ॥ २८५ ॥

तदर्थम् अप्राप्तयोगमर्त्यार्थम् ॥ २८६—२८९ ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां अष्टमोल्लासः ।

———

# नवमोल्लासः ।

श्रीसदाशिव उवाच ।

वर्णाश्रमाचारधर्माः कथितास्तव सुव्रते ! ।
संस्कारान् सर्ववर्णानां शृणुष्व गदतो मम ॥ १ ॥
संस्कारेण विना देवि ! देहशुद्धिर्न जायते ।
नासंस्कृतोऽधिकारी स्यात दैवे पैत्रे च कर्मणि ॥ २ ॥
अतो विप्रादिभिर्वर्णैः स्वस्ववर्णोक्तसंस्क्रिया ।
कर्त्तव्या सर्वथा यत्नैरिहामुत्र हितेप्सुभिः ॥ ३ ॥
जीवसेकः पुंसवनं सीमन्तोन्नयनं तथा ।
जातनामा निष्क्रमणमन्नाशनमतः परम् ।
चूडोपनयनोद्वाहाः संस्काराः कथिता दश ॥ ४ ॥
शूद्राणां शूद्रभिन्नानामुपवीतं न विद्यते ।
तेषां नवैव संस्कारा द्विजातीनां दश स्मृताः ॥ ५ ॥
नित्यानि सर्व्वकर्म्माणि तथा नैमित्तिकानि च ।
काम्यान्यपि वरारोहे ! कुर्य्याच्छाम्भववर्त्मना ॥ ६ ॥

एवमशेषान् वर्णाश्रमाचारधर्मान् कथयित्वेदानीं सर्ववर्णानामखिलान् संस्कारान् विवक्षन् श्रीसदाशिव उवाच वर्णाश्रमेत्यादि । गदतो मम कथयतो मत्तः ॥ १–३ ॥

ब्राह्मणक्षत्रियवैश्यानां जीवसेकाद्य उद्वाहान्ता दश संस्काराः सन्ति शूद्राणां वर्णसङ्कराणां चोपनयनाख्यसंस्कारवर्जिता जीवसेकादयो नवैव संस्काराः सन्तीत्याह जीवसेक इत्यादिना सार्द्धद्वयेन ॥ ४ ॥

शूद्रभिन्नानाम् वर्णसङ्कराणाम् ॥ ५ ॥ ६ ॥

यानि यानि विधानानि येषु येषु च कर्म्मसु ।
पुरैव ब्रह्मरूपेण तान्युक्तानि मया प्रिये ! ॥ ७ ॥
संस्कारेषु च सर्व्वेषु तथैवान्येषु कर्म्मसु ।
विप्रादिवर्णभेदेन क्रमात्मन्त्राश्च दर्शिताः ॥ ८ ॥
सत्यत्रेताद्वापरेषु तत्तत्कर्म्मसु कालिके ! ।
प्रणवाद्यांस्तु तान् मन्त्रान् प्रयोगेषु नियोजयेत् ॥ ९ ॥
कलौ तु परमेशानि ! तैरेव मनुभिर्नराः ।
मायाद्यैः सर्व्वकर्म्माणि कुर्य्युः शङ्करशासनात् ॥१०॥
निगमागमतन्त्रेषु वेदेषु संहितासु च ।
सर्व्वे मन्त्रा मयैवोक्ताः प्रयोगो युगभेदतः ॥ ११ ॥
कलावन्नगतप्राणाः मानवा हीनतेजसः ।
तेषां हिताय कल्याणि ! कुलधर्म्मो निरूपितः ॥ १२ ॥
कलिदुर्व्वलजीवानां प्रयासाशक्तचेतसाम् ।
संस्कारादिक्रियास्तेषां संक्षेपेणापि वच्मि ते ॥ १३ ॥
सर्व्वेषां शुभकार्य्याणामादिभूता कुशण्डिका ।
तस्मादादौ प्रवक्ष्यामि शृणु तां देववन्दिते ! ॥ १४ ॥
रम्ये परिष्कृते देशे तुषाङ्गारादिवर्जिते ।
हस्तमात्रप्रमाणेन स्थण्डिलं रचयेत् सुधीः ॥ १५ ॥
तिस्रो रेखा विधातव्या प्रागग्रास्तत्र मण्डले ।

विधानानि आकाङ्क्षितानीति शेषः ॥ ७—९ ॥

मायाद्यैः माया ह्रीमिति वीजं आद्यं येषां मनूनाम् तैः ॥
१०—१३ ॥

ताम् कुशण्डिकाम् ॥ १४ ॥

कुशण्डिकामेवाह रम्ये इत्यादिभिः । स्थण्डिलम् चत्वरम् ॥१५॥

कूर्चेनाभ्युक्ष्य ताः सर्व्वा वह्निना वह्निमाहरेत् ॥१६॥
आनीय वह्निं तत्पार्श्वे स्थापयेद्वाग्भवं स्मरन् ॥१७॥
ततस्तस्मात्तदग्रांश गृहीत्वा दक्षपाणिना ।
क्लीं क्रव्यादेभ्यो नमः स्वाहा क्रव्यादांशम्परित्यजेत्॥१८॥
इत्थं प्रतिष्ठितं वह्निं पाणिभ्यामात्मसम्मुखम् ।
उद्धृत्य तासु रेखासु मायाद्यां व्याहृतिं स्मरन् ॥ १९ ॥
संस्थाप्य तृणदारुभ्यां प्रज्वलीकृत्य पावकम् ।
समिधे द्वे घृताक्ते च हुत्वा तस्मिन् हुताशने ।
स्वकर्म्मविहितं नाम कृत्वा ध्यायेद्धनञ्जयम् ॥ २० ॥
बालार्कारुणसङ्काशं सप्तजिह्वं द्विमस्तकम् ।

तिस्र इत्यादि । तत्र मण्डले हस्तमात्रप्रमाणेन रचिते स्थण्डिले
प्रागग्रास्तिस्रो रेखा विधातव्याः ततः कूर्च्चेन हुमिति मन्त्रेण ता
रेखा अभ्युक्ष्य जलेनाभिषिच्य वह्निना रमिति मन्त्रेण वह्निमाहरेत्
आनयेत् ॥ १६ ॥

आनीयेत्यादि । वह्निमानीय वाग्भवम् ऐमिति मन्त्रं स्मरन् सन्
तत्पार्श्वे स्थण्डिलस्य पार्श्वे स्थापयेत् ॥ १७ ॥

तत इत्यादि । ततः परं तस्मादङ्गारेकं ज्वलदङ्गारं प्रज्वलत्काष्ठं
दक्षपाणिना गृहीत्वा क्लीं क्रव्यादेभ्यो नमः स्वाहेति मन्त्रेण क्रव्या-
दांशं राक्षसभागं दक्षिणस्यां दिशि परित्यजेत् ॥ १८ ॥

इत्थमित्यादि । इत्थमनेन प्रकारेण प्रतिष्ठितं संस्कृतं वह्निं पाणि-
भ्यामुद्धृत्योत्थाप्य मायाद्यां ह्रीं बीजाद्यां व्याहृतिं स्मरन् सन् आत्मनः
सम्मुखं यथा स्यात्तथा तासु रेखासु संस्थाप्य तृणदारुभ्यां पावकमग्निं
प्रज्वलीकृत्य च तस्मिन् हुताशनेऽग्नौ घृताक्ते घृतसंयुक्ते द्वे समिधौ
काष्ठे हुत्वा प्रक्षिप्य वह्नेः स्वकर्मविहितं नाम च कृत्वा धनञ्जयमग्निं
ध्यायेत् ॥ १९ ॥ २० ॥

अजारूढं शक्तिधरं जटामुकुटमण्डितम् ॥ २१ ॥
ध्यात्वैवं प्राञ्जलिर्भूत्वावाहयेद्धव्यवाहनम् ॥ २२ ॥
मायामेह्येहि पदतः सर्वामर वदेत् प्रिये ।
हव्यवाहपदान्ते च मुनिभिः स्वगणैः सह ।
अध्वरं रक्ष रक्षेति नमः स्वाहा ततो वदेत् ॥ २३ ॥
इत्यावाह्य हव्यवाहमयं ते योनिरुच्चरन् ।
यथोपचारैः सम्पूज्य सप्तजिह्वां प्रपूजयेत् ॥ २४ ॥

कालो करालो च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वनिरूपिणी च
लेलायमानेति च सप्तजिह्वाः ॥ २५ ॥

वह्नेर्ध्यानमेवाह बालार्कारुणसङ्काशमित्यादि । बालो योऽर्कः सूर्य्यस्तद्वदरुणो लोहितवर्णः सङ्काशो दीप्तिर्यस्य तथाभूतम् ॥ २१ ॥

ध्यात्वेत्यादि । एवं हव्यवाहनमग्निं ध्यात्वा ततः प्राञ्जलिर्भूत्वा वक्ष्यमाणमन्त्रेण हव्यवाहनमावाहयेत् ॥ २२ ॥

वह्नेरावाहनमन्त्रमेवाह मायामित्यादिना सार्द्धेन । हे प्रिये ! पूर्वं मायां ह्रीमिति वीजं वदेत् ततः परमेह्येहीत्युक्तात् पदतः परं सर्वामरेति पदं वदेत् ततो हव्यवाहेति पदस्यान्ते मुनिभिः स्वगणैः सहाध्वरं रक्ष रक्षेति वदेत् ततो नमः स्वाहेति वदेत् सकलपदयोजनया ह्रीमेह्येहि सर्वामरहव्यवाह मुनिभिः स्वगणैः सहाध्वरं रक्ष रक्ष नमः स्वाहेति मन्त्रो जातः ॥ २३ ॥

इतीति । इत्यनेन मन्त्रेण हव्यवाहनमग्निमावाह्य वह्ने ! ते तवायं योनिरित्युच्चरन् सन् प्रणवादिनमोऽन्तेन नाममन्त्रेणोपचारैः पाद्यादिभिर्वह्निं यथावत् सम्पूज्य प्रणवादिनमोऽन्तनाममन्त्रेण गन्धपुष्पादिभिर्वह्नेः सप्तजिह्वाः प्रपूजयेत् ॥ २४ ॥

ततोऽग्नेः पूर्वमारभ्य सह कीलालपाणिना ।
उत्तरान्तं महेशानि ! त्रिधा प्रोक्षणमाचरेत् ॥ २६ ॥
तथैव याम्यमारभ्य कौवेरान्तं हुताशितुः ।
त्रिधा पर्य्युक्षणं कुर्य्यात्ततो यज्ञीयवस्तुनः ॥ २७ ॥
परिस्तरेत्ततो दर्भैः पूर्वस्मादुत्तरावधि ।
उदक्संस्थैरुत्तराग्रैः प्रागग्रैरन्यदिक्स्थितैः ॥ २८ ॥
अग्निं दक्षिणतः कृत्वा गत्वा ब्रह्मासनान्तिकम् ।
वामाङ्गुष्ठकनिष्ठाभ्यां ब्रह्मणः कल्पितासनात् ॥ २९ ॥
गृहीत्वा कुशपत्रैकं क्लीं निरस्तः परावसुः ।
इत्युक्त्वाग्नेर्दक्षिणस्यां निक्षिपेदुत्करादिना ॥ ३० ॥

वह्नेः सप्तजिह्वा एवाह कालीत्यादिनैकेन । काल्याद्या विश्वनिरूपिण्यन्ता लेलायमाना अग्नेर्हविर्ग्रहणार्था एताः सप्तजिह्वाः ॥ २५ ॥

तत इति । हे महेशानि ! ततः परं सहकीलालेपाणिना सजलेन हस्तेन पूर्वमारभ्योत्तरान्तमुत्तरपर्य्यन्तमग्नेस्त्रिधा त्रिवारं प्रोक्षणमाचरेत् ॥ २६ ॥

तथैवेत्यादि । ततस्तथैव सहकीलालपाणिनैव याम्यं दक्षिणमारभ्य कौवेरान्तमुत्तरपर्य्यन्तं हुताशितुर्वह्नेस्त्रिधा पर्य्युक्षणमभिषेचनं कुर्य्यात् ततः परं यज्ञीयवस्तुनोऽपि त्रिधैव पर्य्युक्षणं कुर्य्यात् ॥ २७ ॥

परिस्तरेदिति । ततः परं पूर्वस्मात् पूर्वमारभ्य उत्तरावधि उत्तरपर्य्यन्तमुदक्संस्थैरुत्तरादिक्स्थितैरुत्तराग्रैरन्यदिक्स्थितैः प्रागग्रैर्दर्भैः कुशैः स्थण्डिलं परिस्तरेदाच्छादयेत् ॥ २८ ॥

अग्निमित्यादि । ततोऽग्निं दक्षिणतः कृत्वा ब्रह्मासनान्तिकं गत्वा वामाङ्गुष्ठकनिष्ठाभ्यामङ्गुलिभ्यां ब्रह्मणः कल्पितादासनात् कुशपत्रैकमेकं कुशपत्रं गृहीत्वा क्लीं निरस्तः परावसुरिति-

सीद यज्ञपते ! ब्रह्मन्निदन्ते कल्पितासनम् ।
सीदामीति वदन् ब्रह्मा विशेत्तत्रोत्तरामुखः ॥ २१ ॥
सम्पूज्य गन्धपुष्पाद्यैर्ब्रह्माणं प्रार्थयेदिदम् ॥ २२ ॥
गोपाय यज्ञं यज्ञेश । यज्ञं पाहि बृहस्पते ।
मां च यज्ञपतिं पाहि कर्मसाक्षिन्नमोऽस्तु ते ॥ २३ ॥
गोपयामि वदेत् ब्रह्मा ब्रह्माभावे स्वयं वदेत् ।
तत्र दर्भमयं विप्रं कल्पयेत् यज्ञसिद्धये ॥ २४ ॥
ततो ब्रह्मन्निहागच्छागच्छेत्यावाह्य साधकः ।
पाद्यादिभिश्च सम्पूज्य यावद् यज्ञसमापनम् ।
तावद्भवद्भिः स्थातव्यमिति प्रार्थ्य नमेत्ततः ॥ २५ ॥

मन्त्रमुक्त्वा फट्कारादिना सह तदेव कुशपत्रमग्नेर्दक्षिणस्यां दिशि निक्षिपेत् ॥ २९ । २० ॥

सीदेति । हे यज्ञपते ! ब्रह्मन् ! इदं ते तदर्थं कल्पितासनं वर्त्तते त्वं सीदात्रोपविशेति ब्रह्माणं यज्ञकर्त्ता ब्रूयात् ततोऽहं सीदामीति वदन् ब्रह्मोत्तरामुखो भूत्वा तत्रासने विशेत् ॥ २१ ॥

सम्पूज्येत्यादि । ततो गन्धपुष्पादिभिर्ब्रह्माणं सम्पूज्य तमेवेदं प्रार्थयेत् ॥ २२ ॥

इदं किं प्रार्थयेदित्यपेक्षायामाह गोपाय यज्ञमित्यादि । गोपाय रक्ष ॥ २३ ॥

गोपयामीति । यज्ञकर्त्रैवं प्रार्थितो ब्रह्मा गोपयामीति वदेत् ब्रह्माभावे तु गोपयामीति स्वयमेव वदेत् तत्र ब्रह्माभावे सति यज्ञसिद्धये दर्भमयं विप्रं कल्पयेत् ॥ २४ ॥

तत इत्यादि । ततः परं साधको यज्ञकर्त्ता ब्रह्मन्निहागच्छागच्छेति मन्त्रेण ब्रह्माणमावाह्य पाद्यादिभिः सम्पूज्य यावद्यज्ञसमापनं भवेत्तावद्भवद्भिरिह स्थातव्यमिति प्रार्थ्य च तं ब्रह्माणं नमेत् ॥ २५ ॥

सोदकेन करेणाम्बैशानाद् ब्रह्मणोऽन्तिकम्।
त्रिधा पर्य्युक्ष्य वह्निञ्च त्रिः प्रोक्ष्य तदनन्तरम्॥ ३६॥
आगत्य वर्त्मना तेन सूपविश्य निजासने।
स्थण्डिलस्योत्तरे दर्भानुदगग्रान् परिस्तरेत्॥ ३७॥
तेषु यज्ञीयवस्तूनि सर्वाण्यासादयेत् सुधीः।
सोदकं प्रोक्षणीपात्रमाज्यस्थालीसमितकुशान्॥ ३८॥
आसाद्य स्रुक्स्रुवादीनि क्रां क्रीं क्रूमिति मन्त्रकैः।
दिव्यदृष्ट्या प्रोक्षणेन संस्कृत्य तदनन्तरम्॥ ३९॥
पृथिव्यां दक्षिणं जानु पातयित्वा स्रुवे स्रुचा।
घृतमादाय मतिमांश्चिन्तयन् हितमात्मनः।
क्रीं विष्णवे द्विठान्तेन प्रदद्यादाहुतित्रयम्॥ ४०॥

सोदकेनेति। ततः सोदकेन करेण सजलेन हस्तेनाग्नेरी-शानादीशानकोणमारभ्य ब्रह्मणोऽन्तिकं ब्रह्मसमीपपर्य्यन्तं त्रिधा वारत्रयं पर्य्युक्ष्याभिषिच्य वह्निञ्च त्रिर्वारत्रयं प्रोक्ष्य तदनन्तरं येन वर्त्मना ब्रह्मासनान्तिकं गतवानासीत्तेनैव वर्त्मनागत्य निजासने सूपविश्य च यज्ञकर्त्ता स्थण्डिलस्योत्तरे देशे उदगग्रान् दर्भान् कुशान् परिस्तरेत्॥ ३६। ३७॥

तेष्विति। सुधीर्यज्ञसाधकस्तेषु दर्भेषु सर्वाणि यज्ञीयवस्तू-न्यासादयेत् स्थापयेत् दर्भेषु यानि यज्ञीयवस्तूनि स्थापयेत्तान्याह सोदकमित्यादिना॥ ३८॥

आसाद्येति। दर्भेषु सोदकप्रोक्षणीपात्रादीनि वस्तूनि स्रुक्-स्रुवादीनि यज्ञीयानि पात्राणि चासाद्य संस्थाप्य क्रां क्रीं क्रू-मिति मन्त्रैर्दिव्यदृष्ट्या प्रोक्षणेन च तानि संस्कृत्य तदनन्तरं पृथिव्यां दक्षिणं जानु पातयित्वा स्रुचा स्रुवेण यज्ञीये पात्रे घृतमादाय गृहीत्वा मतिमान् यज्ञसाधक आत्मनो हितं चिन्तयन् सन्

तथैव घृतमादाय ध्यायन् देवं प्रजापतिम् ।
वायव्यादग्निकोणान्तं जुहुयादाज्यधारया ॥ ४१ ॥
पुनराज्यं समादाय ध्यायन्देवं पुरन्दरम् ।
नैर्ऋतादीशकोणान्तं जुहुयादाज्यधारया ॥ ४२ ॥
ततोऽग्नेरुत्तरे याम्ये मध्ये च परमेश्वरि ।
अग्निं सोमं चाग्नीषोमौ समुद्दिश्य यथाक्रमात् ॥ ४३ ॥
सचतुर्थीनमोऽन्तेन मायाद्येनाहुतित्रयम् ।
हुत्वा विधेयकर्मोक्तं होमं कुर्याद्विचक्षणः ॥ ४४ ॥
आहुतित्रयदानान्तं धाराहोमं प्रचक्षते ॥ ४५ ॥

स्विष्टान्तेन स्वाहान्तेन ह्रीं विष्णवे स्वाहा इति मन्त्रेण विष्णुमुद्दिश्याहुतित्रयं प्रदद्यात् ॥ ३९ । ४० ॥

तथैवेत्यादि । तथैव स्रुचा स्रुवे एव घृतमादाय ह्रीं बीजाद्येन सचतुर्थीस्वाहान्तेन नाममन्त्रेण प्रजापतिं देवं ध्यायन् संसमुद्दिश्य वायव्यात् वायव्यं कोणमारभ्याग्निकोणान्तं घृतधारया जुहुयात् ॥ ४१ ॥

पुनरित्यादि । पुनः स्रुचा स्रुवे आज्यं घृतं समादाय पुरन्दरं देवं ध्यायन् संसमुद्दिश्य ह्रीं बीजाद्येन सचतुर्थीस्वाहान्तेन नाममन्त्रेण नैर्ऋतान्नैर्ऋतं कोणमारभ्येशकोणान्तमीशानकोणपर्यन्तमाज्यधारया जुहुयात् ॥ ४२ ॥

तत इत्यादि । हे परमेश्वरि ! ततः परमग्नेरुत्तरे भागे याम्ये दक्षिणे भागे मध्ये च यथाक्रमात् क्रमेणैवाग्निं सोममग्नीषोमौ च समुद्दिश्य मायाद्येन ह्रीं बीजाद्येन सचतुर्थीनमोऽन्तेन नाममन्त्रेणाहुतित्रयं हुत्वा विचक्षणः सुधीर्यज्ञसाधको विधेयं [illegible] जातसंस्कारादौ कर्मण्युक्तं होमं कुर्यात् ॥ ४३ ॥ ४४ ॥

आहुतीत्यादि । विष्णुमुद्दिश्याहुतित्रय[illegible] आहुतित्रयदानान्तं धाराहोमं प्रचक्षते प्रवदन्ति ॥ ४५ ॥

यदित्यादि । यद् यत्तदुद्दिश्याहुतिं दद्यात् [illegible]

मधुरिम्बाहुतिं दद्यात् देवोद्देशोऽपि तत्क्षणे ।
समाप्य प्रकृतं कर्म स्विष्टकृद्धोममाचरेत् ॥ ४६ ॥
प्रायश्चित्तात्मको होमः कलौ नास्ति वरानने ! ।
स्विष्टकृता चाहुतिभिः प्रायश्चित्तं विधीयते ॥ ४७ ॥
पूर्ववत्स्त्रिपरुचाक ब्रह्माणं मनसा स्मरन् ।
यच्छिन् कर्मणि देवेश ! प्रमादाद्भ्रमतोऽपि वा ॥ ४८ ॥
न्यूनाधिकं कृतं यच्च सर्वं स्विष्टकृतं कुरु ।
मायाद्यं मायया देवि ! स्वाहान्तेनाहुतिं हुनेत् ॥ ४९ ॥
त्वमग्ने ! सर्वलोकानां पावनः स्विष्टकृत् प्रभुः ।
यज्ञभागी क्षेमकर्त्ता सर्वान् कामान् प्रपूरय ।

ग्रोऽपि देवस्य वहनेन उद्देश उद्देशोऽपि कर्त्तव्यः यथा ह्रीं विष्णवे स्वाहा इदमिदं विष्णवे एवमेवेति विधेयकर्म्मार्थभूतं प्रकृतं कर्म्म होमकर्म्मैवं समाप्य स्विष्टकृद्धोमं शोभनाभीष्टकारकं होममाचरेत् ॥ ४६ ॥

प्रायश्चित्तेत्यादि । कलौ युगे प्रायश्चित्तात्मकहोमाभावात् स्विष्टकृता होमेन आहुतिभिर्होमेन च प्रायश्चित्तं विधीयते ॥ ४७ ॥

अथ स्विष्टकृद्धोमाचरणविधिमाह पूर्ववदित्यादिभिः । पूर्ववत् स्रुवेण स्रुवे हविर्हृतमादाय ब्रह्माणं प्रजापतिं मनसा स्मरन् सन् तदुद्दिश्य मायाद्येन ह्रीं बीजाद्येन स्वाहान्तेन—

यच्छिन् कर्म्मणि देवेश ! प्रमादाद्भ्रमतोऽपि वा ।
न्यूनाधिकं कृतं यच्च सर्व्वं स्विष्टकृतं कुरु ॥

इत्यनेन मन्त्रेणाहुतिं हुनेत् दद्यात् ॥ ४८ । ४९ ॥

त्वमित्यादि । ततोऽग्निमुद्दिश्यादिभूतया मायया ह्रीं बीजेनान्तभूतया वह्निजायया स्वाहया च संयुक्तेन—

त्वमग्ने ! सर्व्वलोकानां पावनः स्विष्टकृत् प्रभुः ।
यज्ञभागी क्षेमकर्त्ता सर्व्वान् कामान् प्रपूरय ॥

अनेन हवनं कुर्य्यात् मायया वह्निजायया ॥ ५० ॥
इत्थं स्विष्टकृतं होमं समाप्य क्रतुसाधकः ।
कर्मणोऽस्य परब्रह्मनयुक्तं विहितञ्च यत् ॥ ५१ ॥
तच्छान्त्यै यज्ञसम्पत्त्यै व्याहृत्या हूयते विभो ।
मायादिवह्निजायान्तैर्भूर्भुवः स्वरिति त्रिभिः ॥ ५२ ॥
आहुतित्रितयं दद्यात् त्रितयेन तथैव च ।
हुत्वाग्नौ यजमानेन दद्यात् पूर्णाहुतिं बुधः ॥ ५३ ॥
स्वयं चेत् कर्मकर्त्ता स्यात् स्वयमेवाहुतिं क्षिपेत् ।
अभिषेकविधानानामेवमेव विधिः स्मृतः ॥ ५४ ॥
आदौ मायां समुच्चार्य्य ततो यज्ञपते ! वदेत् ।
पूर्णो भवतु यज्ञो मे ह्रष्यन्तु यज्ञदेवताः ।
फलानि सम्यक् यच्छन्तु वह्निकान्तावधिर्मनुः ॥ ५५ ॥

इत्यनेन मन्त्रेण हवनं कुर्य्यात् ॥ ५० ॥

इत्थमित्यादि । इत्थमनेन प्रकारेण स्विष्टकृतं होमं समाप्य क्रतुसाधको यज्ञकर्त्ता कर्मणोऽस्य परब्रह्मनयुक्तं विहितञ्च यत् तच्छान्त्यै यज्ञसम्पत्त्यै व्याहृत्या हूयते विभो इति परं ब्रह्म सम्बोध्य परं ब्रह्मैवोद्दिश्य च मायादिवह्निजायान्तैर्ह्रीं बीजादिभिः स्वाहान्तैर्भूर्भुवःस्वरिति त्रिभिर्मन्त्रैराहुतित्रितयं दद्यात् तथैव ह्रीं बीजाद्येन स्वाहान्तेन भूरादित्रितयेनैकधाहुतिं दद्यात् बुधो यज्ञसाधक एवं हुत्वा यजमानेन सह विष्णुमुद्दिश्य वक्ष्यमाणमन्त्रेणाग्नौ पूर्णाहुतिं दद्यात् ॥ ५१–५३ ॥

स्वयञ्चेदित्यादिश्लोकस्तु स्पष्टार्थः ॥ ५४ ॥

येन मन्त्रेण पूर्णाहुतिं दद्यात् तमेव मन्त्रमाह आदावित्यादिना सार्द्धेन । आदौ मायां ह्रीं बीजं समुच्चार्य्य ततो यज्ञपते इति वदेत् ततः पूर्णो भवतु यज्ञो मे ह्रष्यन्तु यज्ञदेवताः

मन्त्रेणानेन मतिमानुत्थाय सुसमाहितः ।
फलताम्बूलसहिताहुतिं दद्याद्धुताशने ॥ ५६ ॥
दत्तपूर्णाहुतिर्विद्वान् शान्तिकर्म समाचरेत् ।
प्रोक्षणीपात्रतोयेन कुशैः सम्मार्जयेच्छिरः ॥ ५७ ॥
आपः सुमित्रियाः सन्तु भवन्त्वोषधयो मम ।
आपो रक्षन्तु मां नित्यमापो नारायणः स्वयम् ॥ ५८ ॥
आपो हिष्ठामयोभुवस्तान ऊर्जे दधातनः ।
इत्याभ्यां मार्जनं कृत्वा भूमौ विन्दून् विनिक्षिपेत् ॥५९॥
ये द्विषन्ति च मां नित्यं यांश्च द्विष्मो नरान् वयम् ।
आपो दुर्मित्रियास्तेषां सन्तु भवन्तु तानपि ॥ ६० ॥
अनेनैशानदिग्भागे विन्दून् प्रक्षिप्य तान् कुशान् ।

फलानि सम्यगश्नन्तु इति मनुजीतः अयं मनुर्वह्निकान्तावधि स्वाहान्तः प्रोक्तः ॥ ५५ ॥

मन्त्रेणेत्यादि । मतिमान् यज्ञसाधको यजमानेन सहोत्थाय सुसमाहितः अतिसावधानः सन्ननेन मन्त्रेण फलताम्बूलसहिताहुतिं हुताशनेऽग्नौ दद्यात् ॥ ५६ ॥

दत्तेत्यादि । एवं दत्तपूर्णाहुतिः सन् विद्वान् यज्ञसाधकः शान्तिकर्म समाचरेत् । शान्तिकर्माचरणस्यैव विधिमाह प्रोक्षणीपात्रेत्यादिभिः ॥ ५७ ॥

शिरःसम्मार्जनार्थमाप इत्यादिकं मन्त्रद्वयमाह आप इति । हे आपो ! भवन्तो मम सुमित्रियाः सन्तु ओषधयश्च भवन्तु इत्येवमन्वयः सुमित्रा एव सुमित्रियाः स्वार्थे घः तस्येयादेशः ॥ ५८ ॥

आप इत्यादेरर्थो व्यक्तः । इत्याभ्यां मन्त्राभ्यां शिरसो मार्जनं कृत्वा भूमौ कुशैर्विन्दून् विनिःक्षिपेत् ॥ ५९ ॥

भूमौ विन्दूनां निक्षेपणस्य मन्त्रमाह ये द्विषन्तीति ॥६०॥

छित्वा कृताञ्जलिर्भूत्वा प्रार्थयेद्धव्यवाहनम् ॥ ६१ ॥
बुद्धिं विद्यां बलं मेधां प्रज्ञां श्रद्धां यशः श्रियम् ।
आरोग्यं तेज आयुष्यं देहि मे हव्यवाहन ! ॥ ६२ ॥
इति प्रार्थ्य वीतिहोत्रं विसृजेदमुना शिवे ! ॥ ६३ ॥
यज्ञ ! यज्ञपतिं गच्छ यज्ञं गच्छ हुताशन ! ।
स्वां योनिं गच्छ यज्ञेश ! पूरयास्मन्मनोरथम् ॥ ६४ ॥
अग्ने ! क्षमस्व स्वाहेति मन्त्रेणाग्नेयदिग्दिशि ।
दत्वा दध्याहुतिं वह्निं दक्षिणस्यां विचालयेत् ॥ ६५ ॥
ब्रह्मणे दक्षिणां दत्वा भक्त्या नत्वा विसर्जयेत् ।
ततस्तु तिलकं कुर्य्यात् स्रुवसंलग्नभस्मना ॥ ६६ ॥

अनेनेत्यादि । अनेन मन्त्रेणैशानदिग्भागे कुशैर्विन्दून् प्रक्षिप्य तान् कुशानपि तत्रैव छित्वा त्यक्त्वा कृताञ्जलिर्भूत्वा हव्यवाहनमग्निं प्रार्थयेत् ॥ ६१ ॥

अग्निं किं प्रार्थयेदित्यपेक्षायामाह बुद्धिमित्यादि । बुद्धिम् शास्त्रादितत्त्वज्ञानम् विद्याम् आत्मज्ञानम् मेधाम् धारणावतीं धियम् प्रज्ञाम् सारासारविवेकनैपुण्यम् ॥ ६२ ॥

इतीति । हे शिवे ! इति वीतिहोत्रमग्निं प्रार्थ्यामुना वक्ष्यमाणेन मन्त्रेण तमेव विसृजेत् ॥ ६३ ॥

अग्निविसर्जनस्यैव मन्त्रमाह यज्ञेति । हे यज्ञ ! त्वं यज्ञपतिं विष्णुं गच्छ प्राप्नुहि हे हुताशन ! त्वं यज्ञं गच्छ हे यज्ञेश ! यज्ञकर्त्तस्त्वं स्वां योनिमात्मीयस्थानं गच्छ हे यज्ञादिक ! त्वमस्मन्मनोरथमस्माकं कामं पूरय यज्ञयज्ञपतिमित्यादिनाऽग्ने ! क्षमस्व स्वाहेत्यन्तेनानेन मन्त्रेणाग्नेयदिग्दिशि दध्याहुतिं दत्वा दक्षिणस्यां दिशि वह्निमनेनैव मन्त्रेण विचालयेत् ॥ ६४ ॥ ६५ ॥

ब्रह्मणे इत्यादिस्तु स्पष्टार्थः ॥ ६६ ॥

मायां कामं समुच्चार्य सर्वशान्तिकरी भवम् ।
ललाटे तिलकं कुर्य्यात् मन्त्रेणानेन याज्ञिकः ॥ ६७ ॥
शान्तिरस्तु शिवं चास्तु वासवाग्निप्रसादतः ।
मरुतां ब्रह्मणश्चैव वसुरुद्रप्रजापतेः ॥ ६८ ॥
अनेन मनुनापुष्पं धारयन्मस्तकोपरि ।
स्वशक्त्या दक्षिणां दद्यात् होमप्रकृतकर्मणोः ॥ ६९ ॥
इति ते कथिता देवि ! सर्वकर्मकुशण्डिका ।
प्रयोज्या शुभकर्मादौ यत्नतः कुलसाधकैः ॥ ७० ॥
प्रकृते कर्मणि शिवे ! चरुयैषां कुलागमः ।
सिद्धर्थं कर्मणात्तेषां चरुकर्म निगद्यते ॥ ७१ ॥
चरुस्थाली प्रकर्त्तव्या ताम्री वा मृत्तिकोद्भवा ॥ ७२ ॥
कुशण्डिकोक्तविधिना द्रव्यसंस्करणावधि ।
कृत्वा कर्म चरुस्थालीमानयेदात्मसम्मुखे ॥ ७३ ॥

ननु केन मन्त्रेण ललाटे तिलकं कर्त्तव्यं तत्राह मायामित्यादि । मायां ह्रीं बीजं कामं क्लीं बीजं समुच्चार्य्य सर्वशान्तिकरो भवेति वदेत् योजनया ह्रीं क्लीं सर्वशान्तिकरो भवेति मन्त्रो जातः याज्ञिको यज्ञकर्त्तानेन मन्त्रेण ललाटे तिलकं कुर्य्यात् ॥ ६७ ॥

शान्तिरित्यादि । शिवम् कल्याणम् मरुतामित्यादावपि प्रसादत इत्यस्य योजना कर्त्तव्या ॥ ६८ ॥

अनेनेति । अनेन शान्तिरस्त्वित्यादिना प्रजापतेरित्यन्तेन मनुना मस्तकोपरि पुष्पं धारयेत् ततो होमप्रकृतकर्मणोः स्वशक्त्या दक्षिणां ब्रह्मसाधकाय ब्राह्मणाय दद्यात् ॥ ६९ ॥ ७० ॥

प्रकृत इत्यादि । प्रकृते कर्मणि ऋतुसंस्कारादौ चरुः देवतार्थं यस्मात् कुले आगमनं यस्य चरोः स कुलागमः ॥ ७१ ॥

चरुकर्मैवाह चरुस्थालीत्यादिभिः ॥ ७२ ॥

अक्षतामव्रणां दृष्ट्वा प्रादेशपरिमाणकम् ।
पवित्रकुशमेकञ्च स्थालीमध्ये नियोजयेत् ॥ ७४ ॥
आनीय तण्डुलांस्तत्र संस्थाप्य स्थण्डिलान्तिके ।
यस्मिन् कर्म्मणि ये देवाः पूजनीयाः कुलार्चिते ! ॥ ७५ ॥
तत्तन्नाम चतुर्थ्यन्तमुक्त्वा त्वाजुष्टमीरयन् ।
गृह्णामि निर्वपामीति प्रोक्षामीति क्रमाद्वदन् ॥ ७६ ॥
गृहीत्वा निर्वपेत् स्थाल्यां प्रोक्षयेज्जलबिन्दुना ।
प्रत्येकञ्चतुरो मुष्टीन् देवमुद्दिश्य तण्डुलान् ॥ ७७ ॥
ततो दुग्धं सिताञ्चैव दत्त्वा प्राकविधानतः ।
सुपचेत् संस्कृते वह्नौ सावधानेन सुमते ! ॥ ७८ ॥

कुशण्डिकेत्यादि । कुशण्डिकोक्तविधिना द्रव्यसंस्कारणावधि द्रव्यसंस्कारपर्य्यन्तं सर्वं कर्म कृत्वा चरुस्थालीमानयन् स्वे देशे आनयेत् ॥ ७३ ॥

अक्षतामिति । ततोऽक्षतामभग्नामव्रणामच्छिद्रां चरुस्थालीं दृष्ट्वा प्रादेशपरिमाणकमेकं पवित्रकुशं स्थालीमध्ये नियोजयेत् ॥ ७४ ॥

आनीयेत्यादि । ततस्तत्र यज्ञस्थाने तण्डुलानानीय स्थण्डिलान्तिके संस्थाप्य च यस्मिन् ऋतुसंस्कारादौ कर्मणि ये देवाः पूजनीयास्तत्तन्नाम चतुर्थ्यन्तमुक्त्वा ततः परं त्वाजुष्टमितीरयन् वदन् ततः परं क्रमादेव गृह्णामीति निर्वपामीति प्रोक्षामीति च वदन् सन् प्रत्येकं देवमुद्दिश्य चतुरो मुष्टीन् चतुर्मुष्टिपरिमितांस्तण्डुलान् गृहीत्वा स्थाल्यां निर्वपेत् जलबिन्दुना प्रोक्षयेच्च अमुकदेवाय त्वा जुष्टं गृह्णामीति मन्त्रेण तण्डुलानादायामुकदेवाय त्वाजुष्टं निर्वपामीति मन्त्रेण स्थाल्यां निःक्षिपेत् अमुकदेवाय त्वाजुष्टं प्रोक्षामीति मन्त्रेण जलबिन्दुना तानभिषिञ्चेदित्यर्थः तु आजुष्टमिति च्छेदः आजुष्टम् प्रीतिः आजुष्टमिति क्रियाविशेषणम् ॥ ७५—७७ ॥

तत इति । हे सुमते ! ततः परं क्रमेण दुग्धं सिताञ्च

सुपक्वं कोमलं ज्ञात्वा दद्यात् तत्र घृतस्रुवम् ॥ ७९ ॥
अग्नेः समरतः पात्रं विनिधाय कुशोपरि।
पुनस्त्रिधा घृतं दत्त्वा स्थालीमाच्छादयेत् कुशैः ॥ ८० ॥
ततः स्रुवे चरुस्थाल्या घृताधारणपूर्वकम्।
किञ्चिच्चरुं समादाय जानुहोमं समाचरेत् ॥ ८१ ॥
धाराहोमं ततः कृत्वा प्रधानीभूतकर्म्मणि।
यत्र ये विहिता देवास्तन्मन्त्रैराहुतिर्हुनेत् ॥ ८२ ॥
समाप्य प्रकृतं होमं स्विष्टकृद्धोमपूर्वकम्।
प्रायश्चित्तात्मकं हुत्वा कुर्य्यात् कर्म्मसमापनम् ॥ ८३ ॥
संस्कारेषु प्रतिष्ठासु विधिरेषः प्रकीर्त्तितः।
विधेयः शुभकर्म्मादौ कर्म्मसंसिद्धिहेतवे ॥ ८४ ॥

स्थाल्यां दत्त्वा सावधानेन मनसा संस्कृते वह्नौ पावकविधानतश्चरुं सुपचेत् ॥ ७८ ॥

सुपक्वमिति। ततः सुपक्वं कोमलं चरुं ज्ञात्वा तत्र घृतस्रुवं घृतपूर्णस्रुवं दद्यात् ॥ ७९ ॥

अग्नेरिति। ततश्चरुपात्रमग्नेः दक्षिणस्यामग्नेः सम्मुखे देशे कुशोपरि विनिधाय संस्थाप्य च पुनस्त्रिधा त्रिवारं तत्र घृतं दत्त्वा कुशैः स्थालीमाच्छादयेत् ॥ ८० ॥

तत इति। ततः परं घृताधारणपूर्वकं घृतसेचनपूर्वकं चरुस्थाल्याः सकाशात् किञ्चिच्चरुं स्रुवे समादाय गृहीत्वा जानुहोमं समाचरेत् कुर्य्यात् पृथिव्यां दक्षिणं जानु पातयित्वा यो होमो विधीयते स एव जानुहोमो ज्ञातव्यः ॥ ८१ ॥

धाराहोमादि। ततो धाराहोमं कृत्वा यत्र यस्मिन् प्रधानीभूतकर्म्मणि ये देवाः पूज्या विहितास्तन्मन्त्रैस्तेषां देवानां मन्त्रैराहुतीर्हुनेद्दद्यात् ॥ ८२ ॥

समाप्येति। एवं प्रकृतं होमं समाप्य स्विष्टकृद्धोमपूर्वकं प्राय-

अथोच्यते महामाये ! गर्भाधानादिकाः क्रियाः ।
तत्रादावृतुसंस्कारः कथ्यते शृणु कालिके ॥ ८५ ॥
कृतनित्यक्रियः शुद्धः पञ्चदेवान् समर्च्चयेत् ।
ब्रह्मा दुर्गा गणेशश्च ग्रहा दिक्पालकास्तथा ॥ ८६ ॥
स्थण्डिलस्योर्द्ध्वदिग्भागे घटेष्वेतान् प्रपूजयेत् ।
ततस्तु मातृकाः पूज्या गौर्य्याद्याः षोड़श क्रमात् ॥ ८७
गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा शान्तिः पुष्टिर्धृतिः क्षमा ।
आत्मनो देवता चैव तथैव कुलदेवता ॥ ८८ ॥
आयान्तु मातरः सर्वाश्चिदानन्दकारिकाः ।
विवाहव्रतयज्ञानां सर्वाभीष्टं प्रकल्पताम् ॥ ८९ ॥
यानशक्तिसमारूढ़ाः सौम्यमूर्त्तिधराः सदा ।
आयान्तु मातरः सर्वा यज्ञोत्सवसमृद्धये ॥ ९० ॥
इत्यावाह्य मातृगणान् स्वशक्त्या परिपूज्य च ।

स्विष्टाख्यं हुत्वा होमं कृत्वा कर्मसमापकं होमकर्मणः समाप्तिं कुर्या- ॥ ८१—८५ ॥

ऋतुसंस्कारविधिमेवाह कृतनित्यक्रिय इत्यादिभिः । ब्रह्म का- पञ्चदेवान् समर्च्चयेदित्यनेनाभिमतानाह ब्रह्मेत्यादि ॥ ८६ ॥

स्थण्डिलस्येत्यादि । स्थण्डिलस्य चत्वरस्योर्द्ध्वदिग्भागे पूर्वभागे व- स्थापितेषु पञ्चसु घटेष्वेतान् ब्रह्मादीन् देवान् यथाक्रमं पूजये- ॥ ८७ ॥

पूज्या गौर्य्याद्याः षोड़शमातृका एव दर्शयति गौरीत्यादि- सार्द्धेन ॥ ८८ ॥

अथ गौर्य्यादिषोड़शमातृकावाहनार्थं मन्त्रद्वयमाह आयान्तु मातरः सर्वा इत्यादि ॥ ८९ ॥ ९० ॥

देहल्यां नाभिमात्रायां प्रादेशपरिमाणतः ।
सप्त वा पञ्च वा बिन्दून् दद्यात् सिन्दूरचन्दनैः ॥ ९१ ॥
प्रत्येकबिन्दून् मतिमान् कामं मायां रमां स्मरन् ।
घृतधारामविच्छिन्नां कृत्वा तत्र वसुं यजेत् ॥ ९२ ॥
वसुधारां प्रकल्प्यैवं मयोक्तेनैव वर्त्मना ।
विरच्य चरुकं धीरो वह्निस्थापनपूर्व्वकम् ।
होमद्रव्याणि संस्कृत्य पचेच्चरुमनुत्तमम् ॥ ९३ ॥
प्राजापत्यचरौ पाके वायुनामा हुताशनः ।
समाप्य पाकहोमान्तं कल्पमार्त्तवमारभेत् ॥ ९४ ॥
ह्रीं प्रजापतये स्वाहा मन्त्रेणाहुतित्रयम् ।

इतीत्यादि । इत्याभ्यां मन्त्राभ्यां मातृगणानावाह्य स्वशक्त्या गन्धपुष्पादिभिः परिपूज्य च नाभिमात्रायां नाभिपरिमितायां देहल्यां प्रादेशपरिमाणपरिमिते देशे सप्त वा पञ्च वा बिन्दून् सिन्दूरचन्दने-र्दद्यात् ॥ ९१ ॥

प्रत्येकेत्यादि । मतिमान् कर्मसाधकः कामं क्लीमिति मायां ह्रीमिति रमां श्रीमिति च बीजं स्मरन् सन् प्रत्येकबिन्दुमविच्छिन्नां घृतधारां कृत्वा तत्रैव वसुं देवं गन्धपुष्पादिभिर्यजेत् ॥ ९२ ॥

वसुधारामित्यादि । मयोक्तेनैव वर्त्मनैवमनेन प्रकारेण वसुधारां प्रकल्प्य समाप्य धीरो विचक्षणः कर्मसाधकः स्थालीचरुकं चरुं विरच्य तत्र वह्निस्थापनपूर्व्वकं होमद्रव्याणि संस्कृत्य अनुत्तमं न विद्यते उत्तमो यस्मादेवंभूतं चरुं पचेत् ॥ ९३ ॥

प्राजापत्येत्यादि । अत्र ऋतुसंस्कारकर्म्मणि यश्चरुः पच्यते स प्राजापत्यः प्रजापतिदेवताको भवति हुताशनोऽग्निश्च वायुनामा भवति तत्र पूर्व्वोक्तेन विधिना पाकहोमान्तं कर्म्म समाप्य कल्पं कर्त्तव्यं आर्त्तवसंस्कारकर्म्मारभेत् ॥ ९४ ॥

प्रदायैकाहुतिं दद्यादिमं मन्त्रमुदीरयन् ॥ ९५ ॥
विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ ९६ ॥
आज्येन चरुणा वापि साज्येन चरुणापि वा ।
सूर्यं प्रजापतिं विष्णुं ध्यायेदाहुतिमुत्सृजेत् ॥ ९७ ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ९८ ॥
ध्यात्वा देवीं सिनीवालीं सरस्वत्यश्विनौ तथा ।
स्वाहान्तमनुनानेन दद्यादाहुतिमुत्तमाम् ॥ ९९ ॥
ततः कामं वधूं मायां रमां कूर्चं समुच्चरन् ।
अमुष्यै पुत्रकामायै गर्भमाधेहि सहितम् ।
उक्त्वा ध्यात्वा रविं विष्णुं जुहुयात् संस्कृतेऽनले ॥

ह्रीमित्यादि । ह्रीं प्रजापतये स्वाहेति मन्त्रेण प्रजापतिम् चरुणैवाहुतित्रयं प्रदायेमं वक्ष्यमाणं मन्त्रमुदीरयन् वदन् सन् एक दद्यात् ॥ ९५ ॥

एकाहुतिदानार्थं मन्त्रमेवाह विष्णुर्योनिमिति । दीपयत ॥ ९६ ॥

आज्येनेत्यादि । विष्णुर्योनिमित्यादिना मन्त्रेणाज्येन चरुणैव वा साज्येन सघृतेन चरुणा वा सूर्यं प्रजापतिं ध्यायन् संतानेच्छोर्द्दिष्टैकामाहुतिमुत्सृजेद्दद्यात् ॥ ९७ । ९८ ॥

ध्यात्वेत्यादि । अनेन गर्भं धेहि सिनीवालीत्यादिना स्वा मनुना सिनीवालीं देवीं तथा सरस्वत्यश्विनौ सरस्वतीयश्विना देवौ च ध्यात्वा उत्तमामाहुतिं दद्यात् ॥ ९९ ॥

तत इत्यादि । ततः परं कामं क्लीमिति वधूं स्त्रीमिति मायां ह्रीं रमां श्रीमिति कूर्चं हूमिति च बीजं समुच्चरन् सहितं स्वाहासहित

यथेयं पृथिवी देवी ध्रुवा नाम गर्भमादधे ।
तथा त्वं गर्भमाधेहि दशमे मासि सूतये ।
स्वाहान्तेनामुना विष्णुं ध्यायन्नाहुतिमाचरेत् ॥ १०१॥
पुनराज्यं समादाय ध्यात्वा विष्णुं परात्परम् ।
विष्णो ! ज्येष्ठेन रूपेण नार्य्यामस्यां वरीयसम् ।
सुतमाधेहि च इत्युक्त्वा वह्नौ हविस्त्यजेत् ॥ १०२ ॥
कामेन पुटितां मायां मायया पुटितां वधूम् ।
पुनः कामञ्च मायाञ्च पठित्वास्याः शिरः स्पृशेत्॥१०३॥
पतिपुत्रवतीभिश्च नारीभिः परिवेष्टितः ।
शिरश्चालभ्य हस्ताभ्यां वध्वाः क्रोड़ाञ्चले पतिः ॥१०४॥

पुत्रकामायै गर्भमाधेहीत्युक्त्वा क्लीं स्त्रीं ह्रीं श्रीं ह्रूममुष्यै पुत्रकामायै गर्भमाधेहि स्वाहेति मन्त्रमुच्चार्य्य रतिं विष्णुञ्च ध्यात्वा संस्कृतेऽनले जुहुयात् ॥ १०० ॥

यथेयमिति । सूतये प्रसवाय स्वाहान्तेनामुना यथेयं पृथिवीत्यादिना मन्त्रेण विष्णुं ध्यायंस्तमेवोद्दिश्याहुतिमाहरेद्वह्नौ दद्यात् ॥१०१॥

पुनरित्यादि । पुनराज्यं घृतं समादाय गृहीत्वा परादपि परं श्रेष्ठं विष्णुं ध्यात्वा तमेवोद्दिश्य विष्णो ! ज्येष्ठेन रूपेण नार्य्यामस्यां वरीयसं सुतमाधेहि स्वाहेति मन्त्रमुक्त्वा वह्नौ हविर्घृतं त्यजेदित्यन्वयः ज्येष्ठेन श्रेष्ठेन रूपेण विशिष्टम् वरीयसमतिवरमतिश्रेष्ठमित्यर्थः इदयं स्वाहा ॥ १०२ ॥

कामेनेति । ततः कामेन क्लीमिति वीजेन पुटितामाद्यन्ते च संयुक्तां मायां ह्रीं वीजं तथैव मायया ह्रीं वीजेन पुटितां वधूं स्त्रीं वीजं पुनः कामं क्लीं वीजं च मायां ह्रीं वीजं च पठित्वा क्लीं ह्रीं क्लीं ह्रीं स्त्रीं ह्रीं क्लीं ह्रीमिति मन्त्रं पठित्वास्या भार्य्याया शिरः स्पृशेत् ॥१०३॥

पतीत्यादि । पतिपुत्रवतीभिर्नारीभिः परिवेष्टितः पतिर्हस्ताभ्यां वध्वाः शिरश्चालभ्य स्पृष्ट्वा तस्या एव क्रोड़ाञ्चले हस्ताभ्यां विष्णुं

विष्णुं दुर्गां विधिं सूर्य्यं ध्यात्वा दद्यात् फलत्रयम् ।
ततः स्विष्टकृतं हुत्वा प्रायश्चित्तं समापयेत् ॥ १०५ ॥
यद्वा प्रदोषसमये गौरीशङ्करपूजनात् ।
भास्कराર્ઘ્યप्रदानाच्च दम्पत्योः शोधनं भवेत् ॥ १०६ ॥
आर्त्तवं कथितं कर्म्म गर्भाधानमथ शृणु ॥ १०७ ॥
तद्रात्रावन्यरात्रौ वा युग्मायां निशि भार्य्यया ।
सद्मनाभ्यन्तरं गत्वा ध्यात्वा देवं प्रजापतिम् ॥ १०८ ॥
स्पृशन् पत्नीं पठेद्भर्त्ता मायाबीजपुरःसरम् ।
आवयोः सुप्रजायै त्वं शय्ये ! शुभकरी भव ॥ १०९ ॥
आरुह्य भार्य्यया शय्यां प्राङ्मुखो वाप्युदङ्मुखः ।
उपविश्य स्त्रियं पश्यन् हस्तमाधाय मस्तके ।
वामेन पाणिनालिङ्ग्य स्थाने स्थाने मनुं जपेत् ॥ ११० ॥

दुर्गां विधिं प्रजापतिं सूर्य्यञ्च ध्यात्वा फलत्रयं दद्यात् समापयेत् आर्त्तवं कर्म्मेति शेषः ॥ १०४ । १०५ ॥

अथान्यदृतुसंस्कारस्य विधानमाह यद्वेत्याद्युक्तेन । प्रदोषसमये रात्र्यारम्भसमये ॥ १०६ । १०७ ॥

अथ गर्भाधानक्रियाविधिमेवाह तद्रात्रावित्यादिभिः । तद्रात्रावृतु-संस्काररात्रावन्यरात्रौ वा युग्मायामेव निशि भार्य्यया सह सद्मनाभ्य-न्तरं गत्वा प्रजापतिं देवं ध्यात्वा च पत्नीं स्पृशन् भर्त्ता मायाबीजपुरः-सरं मायाबीजं ह्रीमिति पुरःसरमग्रेसरं यत्र वक्ष्यमाणं तं आवयोः सुप्रजायै त्वं शय्ये शुभकरी भवेति मन्त्रं पठेत् ॥ १०८ । १०९ ॥

आरुह्येति । ततो भार्य्यया सह शय्यामारुह्य प्राङ्मुख उदङ्मुखो वा भूत्वा तत्रोपविश्य च स्त्रियं पश्यन् भर्त्ता तस्या मस्तके दक्षिणं हस्तमाधाय वामेन पाणिना तामालिङ्ग्य च स्थाने स्थाने मनुं जपेत् ॥ ११० ॥

शीर्षे कामं शतं जप्त्वा चिबुके वाग्भवं शतम् ।
कण्ठे रमां विंशतिधा स्तनद्वन्द्वे शतं शतम् ॥ १११ ॥
हृदये दशधा मायां नाभौ तां पञ्चविंशतिम् ।
जप्त्वा योनौ करं दत्वा कामेन सह वाग्भवम् ॥ ११२॥
शतमष्टोत्तरं जप्त्वा लिङ्गेऽप्येवं समाचरन् ।
विकाश्य मायया योनिं स्त्रियं गच्छेत् सुताप्तये ॥११३॥
रेतःसम्पातसमये ध्यात्वा विश्वसृजं पतिः ।
नाभेरधस्तात् चित्कुण्डे रक्तिमायां प्रपातयेत् ॥११४॥
शुक्रसेकान्तरे विद्वानिमं मन्त्रमुदीरयेत् ॥ ११५ ॥
यथाग्निना सगर्भाभूद्द्यौर्यथा वज्रधारिणा ।
वायुना दिग्गर्भवती तथा गर्भवती भव ॥ ११६ ॥

ननु कस्मिन् कस्मिन् स्थाने कं कं मन्त्रं जपेदित्यपेक्षायामाह शीर्षे काममित्यादि । शीर्षे मस्तके कामं क्लीमिति मन्त्रं शतवारं जप्त्वा चिबुके ओष्ठाधराधोभागे च वाग्भवम् ऐमिति मन्त्रं शतवारं जप्त्वा कण्ठे च रमां श्रीमिति मन्त्रं विंशतिधा विंशतिवारं जप्त्वा स्तनद्वन्द्वे च श्रीमिति मन्त्रं शतं जपेत् ॥ १११ ॥

हृदये इत्यादि । ततो भार्याया हृदये मायां ह्रीमिति मन्त्रं दशधा जप्त्वा नाभौ च तां मायां ह्रीमिति मन्त्रं पञ्चविंशतिवारं जप्त्वा योनौ च करं दत्वा कामेन क्लीमिति वीजेन सह वाग्भवं ऐमिति मन्त्रमष्टोत्तरं शतं जप्त्वा लिङ्गेऽप्येवं क्लीम् ऐमिति मन्त्रस्य जपं समाचरन् पतिर्मायया ह्रीमिति मन्त्रेण योनिं विकाश्य व्यादाय सुताप्तये पुत्रप्राप्तये स्त्रियं गच्छेत् ॥ ११२ ॥ ११३ ॥

रेतःसम्पातेत्यादि । रेतःसम्पातसमये वीजसम्पातनकाले पतिर्विश्वसृजं प्रजापतिं ध्यात्वा नाभेरधस्ताच्चित्कुण्डे रक्तिकायां नार्य्या वीजं प्रपातयेत् ॥ ११४ । ११५ ॥

जाते गर्भे ऋतौ तस्मिन्नन्यस्मिन् वा महेश्वरि !।
तृतीये गर्भमासे तु चरेत् पुंसवनं गृही ॥ ११७ ॥
कृतनित्यक्रियो भर्त्ता पञ्चदेवान् समर्च्चयेत् ।
गौर्य्यादिमातृकाश्चैव वसोर्धारां प्रकल्पयेत् ॥ ११८ ॥
वृद्धिश्राद्धं ततः कृत्वा पूर्व्वोक्तविधिना सुधीः ।
धाराहोमान्तमापाद्य कुर्य्यात् पुंसवनक्रियां ॥ ११९ ॥
प्राजापत्यश्चरुस्तत्र चन्द्रनामा हुताशनः ॥ १२० ॥
गव्ये दध्नि यवञ्चैकं द्वौ माषावपि निक्षिपेत् ।
पतिः पृच्छेत् स्त्रियं भद्रे ! किं त्वं पिबसि त्रिः कृतम् ॥ १२१
ततः सीमन्तिनी ब्रूयात् मायापुंसवनं त्रिधा ।
प्रसृतींस्त्रीन् पिबेन्नारी यवमाषयुतं दधि ॥ १२२ ॥
जीवत्सुताभिर्वनितां यागस्थानं समानयेत् ।
संस्थाप्य वामभागे तां चरुहोमं समाचरेत् ॥ १२३ ॥

वीजसेकान्तरे यं मन्त्रं भर्त्ता पठेत्तमेव मन्त्रमाह यथाग्निर्मेति ।
भूः पृथ्वी द्यौः स्वर्गः वज्रधारिणा इन्द्रेण ॥ ११६ । ११७ ॥

पुंसवनक्रियाविधिमेवाह कृतनित्यक्रिय इत्यादिभिः । कृतनित्यक्रियो भर्त्ता पूर्व्वोक्तान् ब्रह्मादीन् पञ्च देवान् समर्च्चयेत् ॥ ११८।११९ ॥

तत्र पुंसवनक्रियायाम् ॥ १२० ॥

गव्ये इत्यादि । गव्ये गोसम्बन्धिनि दध्नि एकं यवं द्वौ माषावपि निःक्षिपेत् ततो हे भद्रे ! पत्नि ! त्वं किं पिबसीति पतिस्त्रिःकृतं त्रिवारं स्त्रियं पृच्छेत् ॥ १२१ ॥

ततइति । ततः परं मायापुंसवनं ह्रीं पुंसवनमिति सीमन्तिनी स्त्री त्रिधा त्रिवारं ब्रूयात् ततो नारी यागस्थानादन्यत्र गत्वा त्रीन् प्रसृतीन् यवमाषयुतं दधि पिबेत् ॥ १२२ ॥

जीवदित्यादि । ततो जीवन्तः सुताः पुत्रा यासान्ता जीवत्सुता-

पूर्व्ववत्स्रुवे चरुमादाय मायां कूर्च्चं समुच्चरन् ।
ये गर्भविघ्नकर्त्तारो ये च गर्भविनाशकाः ॥ १२४ ॥
भूताः प्रेताः पिशाचाश्च वेताला बालघातकाः ।
तान् सर्वान् नाशय द्वन्द्वं गर्भरक्षां कुरु द्विठः ॥ १२५॥
मन्त्रेणानेन रक्षोघ्नं चिन्तयित्वा हुताशनम् ।
रुद्रं प्रजापतिं ध्यायन् प्रदद्यात् द्वादशाहुतीः १२६॥
ततो मायाचन्द्रमसे स्वाहेत्याहुतिपञ्चकम् ।
दत्वा भार्य्याहृदि स्पृष्ट्वा मायालक्ष्मीं शतं जपेत्॥१२७॥
ततः स्विष्टकृतं हुत्वा प्रायश्चित्त्या समापयेत् ।
ततस्तु पञ्चमे मासि दद्यात् पञ्चामृतं स्त्रियै ॥ १२८ ॥
शर्करा मधु दुग्धञ्च घृतं दधि समांशकम् ।
पञ्चामृतमिदं प्रोक्तं देहशुद्धौ विधीयते ॥ १२९ ॥

स्ताभिःस्त्रीभिः सह वनितां स्त्रियं यागस्थानं समानयेत् तां वनितां वामभागे संस्थाप्य चरुहोमं समाचरेत् ॥ १२३ ॥

पूर्व्ववदिति । पूर्व्ववत् स्रुवे चरुमादाय गृहीत्वा मायां ह्रीमिति कूर्च्चं हूमिति च वीजं समुच्चरन् ये गर्भेत्यादि तान् सर्व्वानित्यन्तं वाक्य-मुच्चरेत् ततो नाशय द्वन्द्वमुच्चरेत् ततो गर्भरक्षां कुर्व्विति वदेत् ततो द्विठः स्वाहेति वदेत् सकलपदयोजनया ह्रीं हूं ये गर्भविघ्नकर्त्तारो ये च गर्भविनाशका भूताः प्रेताः पिशाचाश्च वेताला बालघातकास्तान् सर्व्वान्नाशय नाशय गर्भरक्षां कुरु स्वाहेति मन्त्रो जातः अनेन मन्त्रेण रक्षोघ्नं रक्षोघ्ननामानं हुताशनमग्निं चिन्तयित्वा रुद्रं प्रजापतिञ्च ध्यायन् द्वादशाहुतीः दद्यात् ॥ १२४—१२६ ॥

तत इत्यादि । ततः परं ह्रीं चन्द्रमसे स्वाहेति मन्त्रेणाहुतिपञ्चकं दत्वा भार्य्याहृदि स्पृष्ट्वा मायां लक्ष्मीं ह्रीं श्रीमिति मन्त्रं शतवारं जपेत् ॥ १२७ ॥

समापयेत् पुंसवनं कर्म्मेति शेषः ॥ १२८ ॥

वाग्भवं मदनं लक्ष्मीं मायां कूर्च्चं पुरन्दरम्
पञ्चद्रव्योपरि शिवे! प्रजप्य पञ्चपञ्चधा।
एकीकृत्यामृतान्यत्र प्राशयेदपि तां पतिः॥ १३०॥
सीमन्तोन्नयनं कुर्य्यान्मासि षष्ठेऽष्टमेऽपि वा।
यावन्न जायतेऽपत्यं तावत् सीमन्तनक्रिया॥ १३१॥
पूर्व्वोक्तधाराहोमान्तं कर्म्म कृत्वा स्त्रिया सह।
उपविश्यासने प्राज्ञः प्रदद्यादाहुतित्रयम्।
विष्णवे भास्वते धात्रे वह्निजायां समुच्चरन्॥ १३२॥
ततश्चन्द्रमसं ध्यात्वा शिवनाम्नि हुताशने।
सप्तधा हवनं कुर्य्यात् सोममुद्दिश्य मानवः॥ १३३॥
अश्विनौ वासवं विष्णुं शिवं दुर्गां प्रजापतिम्।
ध्यात्वा प्रत्येकतो दद्यादाहुतीः पञ्चधा शिवे!॥ १३४॥

ननु किन्नाम पञ्चामृतमत आह शर्करेत्यादि। समांशकम् तुल्यभागम्॥ १२९॥

वाग्भवमित्यादि। वाग्भवं ऐमिति मदनं क्लीमिति लक्ष्मीं श्रीमिति मायां ह्रीमिति कूर्च्चं हूमिति पुरन्दरं लमिति च बीजं शर्करादिपञ्चद्रव्योपरि पञ्च पञ्चधा पञ्च पञ्चवारान् प्रजप्य शर्करादीन्यमृतान्येकीकृत्य पतिर्द्दयितां भार्य्यामत्र पञ्चमे मासि प्राशयेत्॥ १३०। १३१॥

सीमन्तोन्नयनक्रियाविधिमेवाह पूर्व्वोक्तेत्यादिभिः। प्राज्ञो विद्वान् पुरुषः स्त्रिया सहासने उपविश्य पूर्व्वोक्तधाराहोमान्तं कर्म्म कृत्वा पूर्व्वं विष्णवे इति भास्वते इति धात्रे इति समुच्चरन् ततो वह्निजायां स्वाहां समुच्चरन् विष्णवे स्वाहा सूर्य्याय स्वाहा प्रजापतये स्वाहेति च मन्त्रं प्रकीर्त्तयन् सन् विष्णुं सूर्य्यं प्रजापतिं चोद्दिश्याहुतित्रयं प्रदद्यात्॥ १३२। १३३। १३४॥

स्वर्णकङ्कतिकां भर्त्ता गृहीत्वा दक्षिणे करे ।
सीमन्ताद्बद्धकेशान्तः केशपाशे निवेशयेत् ॥ १३५ ॥
शिवं विष्णुं विधिं ध्यायन् मायाबीजं समुच्चरन् ॥ १३६ ॥
भार्य्ये ! कल्याणि ! सुभगे ! दशमे मासि सुव्रते ! ।
सुप्रसूता भव प्रीता प्रसादाद्विश्वकर्म्मणः ॥ १३७ ॥
आयुष्मती कङ्कतिका वर्चस्वी ते शुभं कुरु ।
ततः समापयेत् कर्म्म स्विष्टकृद्धवनादिभिः ॥ १३८ ॥
जातमात्रं सुतं दृष्ट्वा दत्वा स्वर्णं गृहान्तरे ।
पूर्वोक्तविधिना धीरो धाराहोमं समापयेत् ॥ १३९ ॥
ततः पञ्चाहुतिर्दद्यात् अग्निमिन्द्रं प्रजापतिम् ।
विश्वान् देवांश्च ब्रह्माणमुद्दिश्य तदनन्तरम् ॥ १४० ॥
मधुसर्पिः कांस्यपात्रे समानीय समांशकम् ।
वाग्भवं शतधा जप्त्वा प्राशयेत्तनयं पिता ॥ १४१ ॥

स्वर्णेत्यादि । ततो भर्त्ता दक्षिणे करे स्वर्णकङ्कतिकां सुवर्णमयीं [प्र]साधनीं गृहीत्वा पूर्व्वं मायाबीजं ह्रीमिति बीजं समुच्चरन् ततो [भा]र्य्ये ! कल्याणि ! सुभगे ! दशमे मासि सुव्रते ! सुप्रसूता भव प्रीता [प्र]सादाद्विश्वकर्म्मणः आयुष्मती कङ्कतिका वर्चस्वी ते शुभं कुर्व्विति मन्त्रं [स]मुच्चरन् शिवं विष्णुं विधिं प्रजापतिञ्च ध्यायन् सन् सीमन्तात् मस्त[क]ात् बद्धकेशान्तः केशपाशे बद्धकेशाभ्यन्तरकेशसमूहे निवेशयेत् आयुष्म[त]ीत्यस्य भवेत्यनेनान्वयो विधेयः ते इत्यस्य कङ्कतिकेत्यनेनान्वयः ॥ १३५—१३८ ॥

अथ जातकर्म्मविधिमाह जातमात्रमित्यादिभिः । दत्वा सुतायै[व]त शेषः गृहान्तरे सूतिकागृहादन्यस्मिन् गृहे ॥ १३९ ॥

तत इत्यादिस्तु स्पष्टार्थः ॥ १४० ॥

मध्विति तदनन्तरं पञ्चाहुतिदानानन्तरं कांस्यपात्रे समांशकं

दक्षहस्तानामिकया मन्त्रमेनं समुच्चरन् ।
आयुर्वर्च्चो बलं मेधा वर्द्धतां ते सदा शिशोः ॥ १४२ ॥
इत्यायुर्जननं कृत्वा गुप्तं नाम प्रकल्पयेत् ।
कृतोपनयने पुत्रे तेन नाम्ना समाह्वयेत् ॥ १४३ ॥
प्रायश्चित्तादिकं कृत्वा जातकर्म्म समापयेत् ।
नालच्छेदं ततो धात्री कुर्य्यादुत्साहपूर्व्वकम् ॥ १४४ ॥
यावन्न छिद्यते नालं तावच्छौचं न बाधते ।
प्रागेव नाड़िकाच्छेदाद्दैवीं पैत्रीं क्रियाञ्चरेत् ॥ १४५ ॥
कुमार्य्याश्चापि कर्त्तव्यमेवमेवममन्त्रकम् ।
षष्ठे वा चाष्टमे मासि नाम कुर्य्यात् प्रकाशतः ॥ १४६ ॥
स्नापयित्वा शिशुं माता परिधाप्याम्बरे शुभे ।
भर्त्तुः पार्श्वं समागत्य प्राङ्मुखं स्थापयेत् सुतम् ॥ १४७ ॥
अभिषिञ्चेत् शिशोर्म्मूर्ध्नि सहिरण्यकुशोदकैः ।
जाह्नवी यमुना रेवा सुपवित्रा सरस्वती ॥ १४८ ॥
नर्म्मदा वरदा कुन्ती सागराश्च सरांसि च ।
एते त्वामभिषिञ्चन्तु धर्म्मकामार्थसिद्धये ॥ १४९ ॥

मधुसर्पिश्च समानीय तदुपरि वाग्भवम् ऐमिति मन्त्रं सप्तधा जप्त्वा आयुर्व्वर्च्चो बलं मेधा वर्द्धतां ते सदा शिशोः इत्येनं मन्त्रं समुच्चरन् पिता दक्षहस्तानामिकयाङ्गुल्या मधुसर्पिस्तनयं प्राशयेत् ॥ १४१ । १४२ ॥

इत्यायुर्ज्जननमित्यादयस्तु स्पष्टार्थाः ॥ १४३—१४५ ॥

कुमार्य्या इत्यादि । कुमार्य्याश्चाप्यमन्त्रकं मन्त्रहीनमेव जातकर्म्मैवमेव कर्त्तव्यम् ॥ १४६ ॥

अथ नामकरणस्यैव विधिमाह स्नापयित्वेत्यादिभिः । माता शिशुं स्नापयित्वा शुभे अम्बरे वस्त्रे परिधाप्य भर्त्तुः पार्श्वं समागत्य सुतं प्राङ्मुखं स्थापयेत् ॥ १४७ ॥

ओं आपोहिष्ठा मयोभुवस्ता न ऊर्ज्जे ।
दधातन महेरणाय चक्षुषे ॥ १५० ॥
ओं यो वः शिवतमो रसस्तस्य भाजयतेह नः
उशतीरिव मातरः । ओं तस्मा अरङ्गमामवो-
यस्य क्षयाय जिन्वथ आपो जनयथा च नः ॥ १५१ ॥

अभिषिञ्चेदित्यादि । ततः पिता आङ्गिरसीत्यादिभिर्मन्त्रैः सर्व्व-रत्नकुशोदकैः शिशोः मूर्द्धन्यभिषिञ्चेत् ॥ १४८ । १४९ ॥

आप इत्यादि । हे आपो ! हि यस्मात् यूयं मयोभुवः स्था मयः सुखं तस्य भावयितारः प्रापयितारो भवत ता तस्मात् नोऽस्मान् ऊर्ज्जेऽन्नाय दधातन स्थापयत किञ्च महे महते रणाय रमणीयाय चक्षुषे दर्शनो-याय दधातन, अयमर्थः हे आपो ! यस्माद्यूयं सुखं प्रापयथ तस्मादस्मा-नैहिकेनान्नादिनामुष्मिकेन च महारमणीयदर्शनीयेन ब्रह्मणा संयोज-यतेति, हि स्थ इति अस्तेर्लोट् मध्यमपुरुषबहुवचनं दधातनेत्यपि दधा-तेर्लोट् मध्यमपुरुषबहुवचनं छन्दसि बहुलमित्यनेन सिद्धं मह इति महते इति पदस्य छान्दसत्वादकारतकारयोर्लोपे सति महे इति भवति रणायेति रमणीयशब्दस्य छन्दसि रणादेशः चक्षुषे इति उस् प्रत्ययान्ताच्चतुर्थी ॥ १५० ॥

यो व इत्यादि । हे आपो ! वो युष्माकं शिवतमोऽत्यन्तकल्याण-रूपो यो रसो निर्यासो मधुरस्तस्य रसस्येह नोऽस्मान् भाजयत भागिनः कुरुत तेन रसेन सम्बद्धानस्मान् कुरुतेत्यर्थः किम्भूता यूयम् उशतीरिच्छावत्यः स्नेहेन मातर इव, अयमर्थः यथा स्नेहेन मातरः पुत्रान् तत्स्वरसभागिनः कुर्वन्ति तथा यूयमप्यस्मान् कल्याणकारिरस-सम्बन्धान् कुरुतेति, उशतीरिति वश कान्तौ शतृप्रत्ययः तदन्तान्ङीप् प्रत्ययः ततो जसि कृते निपातनात् पूर्व्वसवर्णदीर्घः । हे आपो ! वो युष्माकं तस्मै तस्मिन् रसेऽरमलं पर्य्याप्तं गमाम गच्छामेत्यर्थः किञ्च यस्मात रसे नोऽस्माकं भोगं यूयं जनयथ यस्य रसस्य क्षयाय क्षये स्थाने जिन्वथ प्रीणयथ आब्रह्मस्तम्बपर्य्यन्तं जगदिति शेषः, अयमर्थः । हे

अभिषिच्य त्रिभिर्मन्त्रैः पूर्ववद्वह्निसंस्क्रियाम् ।
कृत्वा समाप्य धारान्तं दद्यात् पञ्चाहुतीः सुधीः ॥१५२॥
अग्नये प्रथमां दत्त्वा वासवाय ततः परम् ।
ततः प्रजानाम्पतये विश्वदेवेभ्य एव च ।
ब्रह्मणे चाहुतिं दद्याद्वह्नौ पार्थिवसंज्ञके ॥ १५३ ॥
ततोऽङ्के पुत्रमादाय श्रावयेत् दक्षिणश्रुतौ ।
सत्याक्षरं सुखोच्चार्य्यं शुभं नाम विचक्षणः ॥ १५४॥
श्रावयित्वा त्रिधा नाम ब्राह्मणेभ्यो निवेद्य च ।
ततः समापयेत् कर्म्म कृत्वा स्विष्टकृदादिकम् ॥१५५ ॥
कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धं न विद्यते ।
नामान्नप्राशनं चूड़ां कुर्य्याद्धीमानमन्त्रकम् ॥ १५६ ॥
चतुर्थे मासि षष्ठे वा कुर्य्यान्निष्क्रमणं शिशोः ॥ १५७॥
कृतनित्यक्रियः स्नातः सम्पूज्य गणनायकम् ।

आपो ! युष्माकं यस्य रसस्य स्थाने जगद्वयूयं प्रीणयथ तस्य विषये वयं तृप्तिं गच्छाम यूयञ्च नस्तत्र सम्भोगं जनयथेति तत्र क्षयायेत्युभयत्रापि सप्तम्यर्थे चतुर्थी गमाम इति लोट्उत्तमपुरुषबहुवचनं गच्छादेशाभावश्छान्दसः जनयथा इति छन्दसि दीर्घः जिन्वथ इति छन्दसि सिद्धम् ॥ १५१ ॥

अभिषिच्येत्यादि । एतैस्त्रिभिर्मन्त्रैः शिशोर्मूर्द्धाभिषिच्य पूर्ववत् वह्निसंस्क्रियां कृत्वा धारान्तं धाराहोमान्तं कर्म्म च समाप्य सुधीः पिता पञ्चाहुतीर्दद्यात् ॥ १५२ ॥

ननु कान्देवानुद्दिश्य पञ्चाहुतीर्दद्यादित्यपेक्षायामाह अग्नये इत्यादि ॥ १५३ ॥

तत इत्यादि । ततोऽङ्के क्रोड़े पुत्रमादाय धृत्वा विचक्षण पिता पुत्रस्य दक्षिणश्रुतौ दक्षिणे कर्णे सत्याक्षरं सुखोच्चार्य्यं शुभं मङ्गलसाधकं नाम श्रावयेत् ॥ १५४—१५७ ॥

स्नापयित्वा तु तनयं वस्त्रालङ्कारभूषितम् ।
संस्थाप्य पुरतो विद्वानिमं मन्त्रमुदीरयेत् ॥ १५८ ॥
ब्रह्मा विष्णुः शिवो दुर्गा गणेशो भास्करस्तथा ।
इन्द्रो वायुः कुबेरश्च वरुणोऽग्निर्बृहस्पतिः ।
शिशोः शुभं प्रकुर्वन्तु रक्षन्तु पथि सर्वदा ॥ १५९ ॥
इत्युक्त्वा तं समादाय गीतवाद्यपुरःसरम् ।
बहिर्निष्क्रामयेद्बालं सानन्दैः स्वजनैः सह ॥ १६० ॥
गत्वाध्वनि कियद्दूरं शिशुं सूर्यं निरीक्षयेत् ॥ १६१ ॥
ह्रीं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरेत् ।
पश्येम शरदः शतं जीवेम शरदः शतम् ॥ १६२ ॥
इत्यादित्यं दर्शयित्वा समागत्य निजालयम् ।
अर्घ्यं दत्त्वा दिनेशाय स्वजनान् भोजयेत् पिता ॥ १६३
षष्ठे मासि कुमारस्य मासि वाप्यष्टमे शिवे ! ।
पितृभ्राता पिता वापि कुर्य्यादन्नाशनक्रियाम् ॥ १६४ ॥

अथ शिशुनिष्क्रमणक्रियाविधिमाह कृतनित्यक्रिय इत्यादिभिः ॥ १५८ ॥

यं मन्त्रमुदीरयेत्तमेव मन्त्रमाह ब्रह्मा विष्णुरिति ॥ १५९ ॥

इतीत्यादि । इतीमं मन्त्रमुक्त्वाङ्के क्रोडे बालं समादाय गृहीत्वा सानन्दैः स्वजनैः सह गीतवाद्यपुरःसरं बालं बहिर्निष्क्रामयेत् ॥ १६० ॥

गत्वेत्यादि । अध्वनि मार्गे कियद्दूरं गत्वा पिता शिशुं बालं सूर्यं निरीक्षयेद्दर्शयेत् ॥ १६१ ॥

येन मन्त्रेण शिशुं सूर्यं दर्शयेत्तं मन्त्रमाह ह्रीं तच्चक्षुरिति । पुरस्तात्पूर्वतः शुक्रमुच्चरत् शुक्लमुच्चरद् गच्छेत् तत्सूर्यरूपं देवहितं चक्षुर्वर्त्तते अहं शतं शरदो वर्षाणि पश्येम यच्च पश्यन्तो वयं शतं शरदो जीवेम ॥ १६२—१६४ ॥

पूर्ववद्देवपूजादि वह्निसंस्करणं तथा ।
एवं धारात्मकर्माणि सम्पाद्य विधिवत् पिता ॥१६५॥
दद्यात् पञ्चाहुतिस्तत्र शुचिनाम्नि हुताशने ।
अग्निमुद्दिश्य प्रथमां द्वितीयां वासवं स्मरन् ॥ १६६ ॥
ततः प्रजापतिं देवं विश्वान् देवान् ततः परम् ।
ब्रह्माणञ्च समुद्दिश्य पञ्चमीमाहुतीं त्यजेत् ॥ १६७ ॥
ततोऽग्नावन्नदां ध्यात्वा दत्तपञ्चाहुतिः पिता ।
तत्राथवा गृहेऽन्यस्मिन् वस्त्रालङ्कारशोभितम् ।
क्रोड़े निधाय तनयं प्राशयेत् पायसामृतम् ॥१६८॥
पञ्चप्राणाहुतेर्मन्त्रैर्भोजयित्वा तु पञ्चधा ।
ततोऽन्नव्यञ्जनादीनां दत्वा किञ्चित् शिशोर्मुखे ॥१६९॥
शङ्खतूर्य्यादिर्घोषेण प्रायश्चित्त्या समापयेत् ।
इत्यन्नप्राशनं प्रोक्तं चूड़ाविधिमतः शृणु ॥ १७० ॥
तृतीये पञ्चमे वर्षे कुलाचारानुसारतः ।
चूड़ाकर्म शिशोः कुर्य्याद्बालसंस्कारसिद्धये ॥ १७१ ॥

अन्नप्राशनक्रियाविधिमाह पूर्ववदित्यादिभिः ॥ १६५ ॥

तत्र अन्नप्राशनक्रियायाम् । ननु कान्देवानुद्दिश्य पञ्चाहुतीर्दद्या-
दित्यपेक्षायामाह अग्निमित्यादि ॥ १६६ ॥ १६७ ॥

तत इत्यादि । ततः परमन्नदां देवीं ध्यात्वा तामुद्दिश्याग्नौ
दत्ता पञ्चाहुतिर्येन स दत्तपञ्चाहुतिः पिता तत्राथवान्यस्मिन् गृहे
वस्त्रालङ्कारशोभितं तनयं क्रोड़े निधाय संस्थाप्य पायसामृतं परमान्न-
रूपममृतं प्राशयेत् भोजयेत् ॥ १६८ ॥

पञ्चेत्यादि । प्राणाय स्वाहा अपानाय स्वाहा समानाय स्वाहा
उदानाय स्वाहा व्यानाय स्वाहेत्यात्मकैः पञ्चप्राणाहुतेर्मन्त्रैः पुनः
पायसं पञ्चधा भोजयित्वा ततोऽन्नव्यञ्जनादीनां किञ्चित् शिशोर्मुखे

देवपूजादिधारान्तं कर्म निष्पाद्य साधकः।
सत्याग्नेरुत्तरे देशे हयगोमयपूरितम् ॥ १७२ ॥
तिलगोधूमसंयुक्तं शरावं स्थापयेद् बुधः।
कवोष्णं सलिलञ्चापि क्षुरमेकं सुशाणितम् ॥ १७३ ॥
आसाद्य तनयं तत्र जनकः स्वीयवामतः।
संस्थाप्य जननीक्रोड़े कवोष्णसलिलैश्च तैः ॥ १७४ ॥
वारुणं दशधा जप्त्वा सम्मार्ज्य शिशुमूर्द्धजान्।
मायया कुशपत्राभ्यां जुष्टिमेकां प्रकल्पयेत्॥ ७५ ॥
मायां लक्ष्मीं त्रिधा जप्त्वा गृहीत्वा लौहजं क्षुरम्।
छित्वा तु जुष्टिकामूलं मातृहस्ते निवेशयेत् ॥ १७६ ॥

दत्वा यज्ञतूर्य्यादिघोषेण प्रायश्चित्या चान्नप्राशनक्रियां समापयेत् ॥ १६९—१७१ ॥

अथ चूड़ाकर्मविधिमाह देवपूजादीत्यादिभिः। बुधो विचक्षणः साधकः कर्मनिष्पादकः पिता पूर्ववद्देवपूजादिधारान्तं कर्म निष्पाद्य सत्याग्नेः सत्यनाम्नो वह्नेरुत्तरे देशे हयगोमयपूरितं तिलगोधूमसंयुक्तं शरावं कवोष्णमीषदुष्णं सलिलं जलं सुशाणितमेकं क्षुरञ्चापि स्थापयेत् ॥ १७२ ॥ १७३ ॥

आसाद्येत्यादि। ततो जनकः पिता तनयं पुत्रं सत्यनाम्नो वह्नेः समीपे आसाद्यानीय स्वीयवामतः आत्मनो वामे देशे जननीक्रोड़े संस्थाप्य तैर्वह्नेरुत्तरे देशे स्थापितैः कवोष्णसलिलैर्वारुणं वरुणसम्बन्धि वमिति वीजं दशधा जप्त्वा शिशुमूर्द्धजान् बालशकेशान् सम्मार्ज्य मायया ह्रीं वीजेन कुशपत्राभ्यामेकां जुष्टिं प्रकल्पयेत् ॥ ॥ १७४ ॥ १७५ ॥

मायामित्यादि। ततो मायां ह्रीं वीजं लक्ष्मीं श्रीं वीजञ्च त्रिधा जप्त्वा लौहजं क्षुरं गृहीत्वा जुष्टिकामूलं छित्वा मातृहस्ते जुष्टिकां निवेशयेत् स्थापयेत् ॥ १७६ ॥

कुमारमाता हस्ताभ्यामादाय गोमयान्विते ।
शरावे स्थापयेत् जुष्टिं नापिताय पिता वदेत् ॥१७७॥
क्षुरमुण्डिन् ! शिशोः क्षौरं सुखं साधय ठद्वयम् ।
पठित्वा नापितं पश्यन् सत्यनामनि पावके ।
प्रजापतिं समुद्दिश्य प्रदद्यादाहुतित्रयम् ॥ १७८ ॥
नापितेन कृतक्षौरं स्नापयित्वा शिशुं ततः ।
वस्त्रालङ्कारमाल्येन भूषयित्वाग्निसन्निधौ ॥ १७९ ॥
स्ववामभागे संस्थाप्य स्विष्टकृद्धोममाचरेत् ।
प्रायश्चित्तं ततः कृत्वा दद्यात् पूर्णाहुतिं पिता ॥१८०॥
मायया शिशो ! ते कुशलं कुरुतां विश्वकृद्विभुः ।
पठित्वैनं शिशोः कर्णौ स्वर्णमय्या शलाकया ।
राजत्या लौहमय्या वा कर्णवेधं प्रकल्पयेत् ॥ १८१ ॥
आपोहिष्ठेति मन्त्रेण अभिषिच्य सुतं ततः ।
शान्त्यादिदक्षिणां कृत्वा चूड़ाकर्म्म समापयेत् ॥१८२॥

कुमारेत्यादि । कुमारमाता हस्ताभ्यां जुष्टिकामादाय गृहीत्वा गोमयान्विते शरावे स्थापयेत् ततो नापिताय पिता शिशुजनको वदेत् ॥ १७७ ॥

शिशोः पिता नापिताय किं वदेदित्यपेक्षायामाह क्षुरमुण्डिन्नित्यादि । हे क्षुरमुण्डिन्नापित ! शिशोः क्षौरं सुखं यथा स्यात्तथा त्वं साधय ठद्वयं स्वाहा क्षुरमुण्डिन्नित्याद्यं साधय स्वाहेत्यन्तं मनुं पठित्वा नापितं पश्यन् शिशुजनकः प्रजापतिं समुद्दिश्य सत्यनामनि पावकेऽग्नावाहुतित्रयं प्रदद्यात् ॥ १७८ ॥

नापितेनेति । ततो नापितेन कृतं क्षौरं यस्य तथाभूतं शिशुं स्नापयित्वा ततो वस्त्रालङ्कारमाल्येन भूषयित्वाग्निसन्निधौ स्ववामभागे संस्थाप्य च स्विष्टकृतं होममाचरेत् कुर्य्यात् ॥ १७९ ॥ १८० ॥

गर्भाधानादिचूड़ान्तं समानं सर्व्वजातिषु।
शूद्रसामान्यजातीनां सर्व्वमेतदमन्त्रकम्॥ १८३॥
जातकर्म्मादिचूड़ान्तं कुमार्य्याश्चाप्यमन्त्रकम्।
कर्त्तव्यं पञ्चभिर्व्वर्णैरेकं निष्क्रमणं विना॥ १८४॥
अथोच्यते द्विजातीनामुपवीतक्रियाविधिः।
यस्मिन् कृते द्विजन्मानो दैवपैत्राधिकारिणः॥ १८५॥
गर्भाष्टमेऽष्टमे वाब्दे कुर्य्यादुपनयं शिशोः।
षोड़शाब्दाधिको नोपनेतव्यो निष्क्रियोऽपि सः॥ १८६॥
कृतनित्यक्रियो विद्वान् पञ्चदेवान् समर्च्चयेत्।
गौर्य्यादिमातृकाश्चैव वसुधारां प्रकल्पयेत्॥ १८७॥
वृद्धिश्राद्धं ततः कुर्य्यात् देवतापितृतृप्तये।
कुशण्डिकोक्तविधिना धाराहोमान्समाचरेत्॥ १८८॥
प्रातः कृताशनं बालं सुस्नातं समलङ्कृतम्।
शिखां विना कृतक्षौरं क्षौमाम्बरविभूषितम्॥ १८९॥

मायेत्यादि। मायां ह्रीं बीजम् एवं ह्रीं शिशो इत्याद्यं विश्व-कृद्विभुरित्यन्तं मन्त्रं शिशोः कर्णे पठित्वा स्वर्णमय्या सुवर्णविकार-भूतया राजत्या रजतोद्भूतया लौहमय्या वा शलाकया शिशोः कर्ण-वेधं प्रकल्पयेत् कुर्य्यात्॥ १८१—१८४॥

अथेत्यादि। द्विजातीनाम् ब्राह्मणक्षत्रियवैश्यानाम्॥ १८५॥

गर्भेत्यादि। गर्भाष्टमे जन्मतोऽष्टमेऽब्दे वर्षे शिशोर्बालस्यो-पनयमुपनयनं कुर्य्यात् षोड़शाब्दाधिको लङ्घितषोड़शवर्षो बालो नो-पनेतव्यः स बालो निष्क्रियोऽपि दैवपित्र्यक्रियाविहीनोऽपि भवति॥ १८६॥

अथोपवीतक्रियाविधिमेवाह कृतनित्यक्रिय इत्यादिभिः। पञ्च-देवान् ब्रह्मादीन्॥ १८७॥ १८८॥

छायामण्डपमानीय समुद्भवकृताग्नितः ।
समीपे चात्मनो वामे संस्थाप्य विमलासने ॥ १९० ॥
शिष्यं वदेद् ब्रह्मचर्य्यं कुरु वत्स ! ततः शिशुः ।
ब्रह्मचर्य्यं करोमीति गुरवे विनिवेदयेत् ॥ १९१ ॥
ततो गुरुः प्रसन्नात्मा शिष्यवे शान्तचेतसे ।
काषायवाससी दद्यात् दीर्घायुष्टाय वर्च्चसे ॥ १९२ ॥
मौञ्जीं कुशमयीं वापि त्रिवृतां ग्रन्थिसंयुताम् ।
तूष्णीं च मेखलां दद्यात् काषायाम्बरधारिणे ॥ १९३॥
मायामुच्चार्य्य सुभगा मेखला स्यात् शुभप्रदा ।
इत्युक्त्वा मेखलां बद्ध्वा मौनी तिष्ठेत् गुरोः पुरः ॥१९४॥

यज्ञोपवीतं परमं पवित्रं
बृहस्पतिर्यत् सहजं पुरस्तात् ।

प्रातरित्यादि । ततः प्रातः कृताशनं कृतमशनं भोजनं येन तथाभूतं शिखां विना कृतं क्षौरं यस्य तथाभूतं सुस्नातं सुष्ठु कृतस्नानं भूषणादिभिः समलङ्कृतं क्षौमाम्बरविभूषितं दुकूलवस्त्राभ्यामलङ्कृतं बालं छायामण्डपमानीय समुद्भवकृताग्नितः समुद्भवनाम्नो वह्नेः समीपे आत्मनो वामे देशे विमलासने संस्थाप्य च ब्रह्मचर्य्यं कुरु वत्सेति गुरुः शिष्यं वदेत् ततः परं शिशुः ब्रह्मचर्य्यं करोमीति गुरवे विनिवेदयेत् ॥ १८९—१९१ ॥

ततः परं प्रसन्नात्मा प्रसन्नमना गुरुः शान्तचेतसे शिशवे दीर्घायुष्टाय दीर्घमायुर्यस्य स दीर्घायुस्तस्य भावो दीर्घायुष्टं तस्मै वर्च्चसे तेजसे च काषायवाससी कषायेण रक्ते वस्त्रे दद्यात् ॥ १९२ ॥

मौञ्जीमिति । मौञ्जीं मुञ्जमयीं कुशमयीं वा त्रिवृतां ग्रन्थिसंयुतां मेखलामपि काषायाम्बरधारिणे शिशवे तूष्णीमेव दद्यात् ॥ १९३ ॥

मायामिति । पूर्वं मायां ह्रीमिति बीजमुच्चार्य्य ततः सुभगा

आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥ १९५ ॥
मन्त्रेणानेन शिशवे दद्यात् कृष्णाजिनान्वितम्।
यज्ञोपवीतं दण्डञ्च वैणवं खादिरञ्च वा।
पालाशमथवा दद्यात् चीरवृक्षसमुद्भवम् ॥ १९६ ॥
आपोहिष्ठेति मन्त्रेण मायया पुटितेन च।
त्रिराहृत्या कुशाम्भोभिष्टं तद्दण्डोपवीतिनम्।
अभिषिच्य ततस्तोयैः पूरयेत्तज्जलाञ्जलिम् ॥ १९७ ॥
तदञ्जलिं दिनेशाय दातारं ब्रह्मचारिणम्।
तच्चक्षुरिति मन्त्रेण दर्शयेद्भास्करं गुरुः ॥ १९८ ॥
दृष्टभास्करमाचार्य्यो वदेन्माणवकं ततः।

मेखला स्वाच्छुभप्रदेति मन्त्रमुक्त्वा कच्यां मेखलां वद्ध्वा मौनी सन् गुरोः पुरस्तिष्ठेत् ॥ १९४ ॥ १९५ ॥

मन्त्रेणेत्यादि। अनेन यज्ञोपवीतमित्यादिना बलमस्तु तेज इत्यन्तेन मन्त्रेण कृष्णाजिनान्वितं कृष्णवर्णमृगचर्मसंयुक्तं यज्ञोपवीतं शिशवे दद्यात् वैणवं वेणुसमुद्भवं खादिरं खदिरसमुद्भवं पालाशं पलाशसमुद्भवं चीरवृक्षसमुद्भवं वा दण्डमपि शिशवे दद्यात् ॥ १९६ ॥

आपोहिष्ठेत्यादि। ततो मायया ह्रीं वीजेनाद्यावन्ते च पुटितेन संयुक्तेनापो हिष्ठेति मन्त्रेण कुशाम्भोभिष्टं तद्दण्डोपवीतिनं धृतदण्डोपवीतवन्तं शिशुं त्रिराहृत्याभिषिच्य ततः परं तोयैर्जलैर्बालकाञ्जलिं पूरयेत् ॥ १९७ ॥

तदञ्जलिमित्यादि। दिनेशाय सूर्य्याय तदञ्जलिं दातारं ब्रह्मचारिणं बालकं तच्चक्षुरिति मन्त्रेण भास्करं गुरुर्दर्शयेत्। दातारमित्यत्र शीले तृन्प्रत्ययः अतएव तदञ्जलिमित्यत्र कर्तृकर्मणोः कृतीत्यनेन कर्मणि प्राप्तायाः षष्ठ्या न लोकाव्ययनिष्ठा खलर्थतृनामित्यनेन प्रतिषेधो जातः ॥ १९८ ॥

मम व्रते मनो धेहि मम चित्तं ददामि ते ।
जुषस्वैकमना वत्स ! मम वाचोऽस्तु ते शिवम् ॥१९९॥
हृदि स्पृष्ट्वा पठित्वैनं किन्नामासीति तं वदेत् ।
शिष्यस्त्वमुकशर्म्माहं भवन्तमभिवादये ॥ २०० ॥
कस्य त्वं ब्रह्मचारीति गुरौ पृच्छति पार्व्वति ! ।
शिष्यः सावहितो ब्रूयाद्भवतः ब्रह्मचार्य्यहम् ॥२०१॥
इन्द्रस्य ब्रह्मचारी त्वमाचार्य्यस्ते हुताशनः ।
इत्युक्त्वा सद्गुरुः पश्चाद्देवेभ्यस्तं समर्पयेत् ॥ २०२ ॥
त्वां प्रजापतये वत्स ! सवित्रे वरुणाय च ।
पृथिव्यै विश्वदेवेभ्यः सर्व्वदेवेभ्य एव च ।
समर्पयामि ते सर्व्वे रक्षन्तु त्वां निरन्तरम् ॥ २०३ ॥

दृष्टभास्करमित्यादि । ततः परमाचार्य्यो गुरुः दृष्टभास्करं दृष्टो भास्करो येन तथाभूतं माणवकं शिशुं वदेत् । आचार्य्यो बालकं किं वदेदित्यपेक्षायामाह मम व्रते इत्यादि । जुषस्व मम व्रतं सेवस्व शिवं कल्याणम् ॥ १९९ ॥

हृदीति । गुरुरेनं ममेत्यादिकं शिवमित्यन्तं मन्त्रं पठित्वा शिशोर्हृदि स्पृष्ट्वा वत्स ! त्वं किं नामासीति तं शिष्यं वदेत् गुरुणैवमुक्तः शिष्यः अमुकशर्म्माहं भवन्तमभिवादये इति ब्रूयात् ॥ २०० ॥

कस्येत्यादि । हे वत्स ! त्वं कस्य ब्रह्मचार्य्यसीति गुरौ पृच्छति सति शिष्यः सावहितः सावधानः सन् भवतो ब्रह्मचार्य्यहमिति ब्रूयात् ॥ २०१ ॥

इन्द्रस्येत्यादि । वत्स ! त्वमिन्द्रस्य ब्रह्मचार्य्यसि ते तव हुताशनोऽग्निराचार्य्यो गुरुर्भवति इति शिष्यमुक्त्वा स गुरुः पश्चात्तं शिष्यं देवेभ्यः समर्पयेत् ॥ २०२ ॥

ननु केभ्यो देवेभ्यो गुरुः शिष्यं समर्पयेदित्याकाङ्क्षायामाह त्वां प्रजापतये वत्सेत्यादि ॥ २०३ ॥

ततो माणवको वह्निं दक्षिणावर्त्तयोगतः ।
गुरुं प्रदक्षिणीकृत्य स्वासने पुनराविशेत् ॥ २०४ ॥
गुरुः शिष्येण संस्पृष्टः समुद्भवहुताशने ।
पञ्चदेवान् समुद्दिश्य दद्यात् पञ्चाहुतीः प्रिये ! ॥२०५॥
प्रजापतिस्तथा शक्रो विष्णुर्ब्रह्मा शिवस्तथा ॥ २०६ ॥
मायादिवह्निजायान्तैर्जुहुयात् स्वस्वनामभिः ।
अनुक्तमन्त्रे सर्व्वत्र विधिरेषः प्रकीर्त्तितः ॥ २०७ ॥
ततो दुर्गां महालक्ष्मीः सुन्दरीं भुवनेश्वरीं ।
इन्द्रादिदशदिक्पाला भास्करादिनवग्रहाः ॥ २०८ ॥
प्रत्येकनाम्ना हुत्वैतान् वाससाच्छाद्य बालकम् ।
पृच्छेन्माणवकं प्राज्ञो ब्रह्मचर्य्याभिमानिनम् ।
को वाश्रमस्ते तनय ! ब्रूहि किन्ते मनोगतम् ॥२०९॥

तत इत्यादि । ततः परं माणवको बालको दक्षिणावर्त्तयोगतो वह्निं गुरुञ्च प्रदक्षिणीकृत्य पुनः स्वासने आविशेत् ॥ २०४ ॥

गुरुरिति । गुरुः शिष्येण संस्पृष्टः सन् समुद्भवहुताशने समुद्भवसंज्ञके अग्नौ पञ्चदेवान् समुद्दिश्य पञ्चाहुतीर्दद्यात् ॥ २०५ ॥

ननु कान् पञ्चदेवान् समुद्दिश्य पञ्चाहुतीर्दद्यादित्यपेक्षायां तान् पञ्च देवान् दर्शयति प्रजापतिरित्यर्द्धेन ॥ २०६ ॥

ननु कैर्मन्त्रैः पञ्चदेवानुद्दिश्याहुतीर्दद्यात्तत्राह मायादीत्यादि । मायादिवह्निजायान्तैः ह्रींबीजादिभिः स्वाहान्तैः स्वस्वनामभिः प्रजापत्यादीन् पञ्चदेवानुद्दिश्य जुहुयात् । ननु प्रजापत्यादिपञ्चदेवोद्देशक होमो मायादिवह्निजायान्तैः स्वस्वनामभिर्विधातव्यस्तदन्यदेवोद्देशकोऽपि वा तत्राह अनुक्तमन्त्रे इत्यादि । ततो ह्रीं बीजाद्येन स्वाहान्तेन प्रत्येकनाम्ना एतान् दुर्गालक्ष्म्यादीनुद्दिश्य हुत्वा वाससा वस्त्रेण बालकमाच्छाद्य हे तनय ! ते तवाश्रमः कस्ते मनोगतं

ततः शिष्यः सावहितो धृत्वा गुरुपदद्वयम् ।
करोतु मामाश्रमिणं ब्रह्मविद्योपदेशतः ॥ २१० ॥
एवं प्रार्थयमानस्य दक्षकर्णे शिष्योस्तदा ।
श्रावयित्वा त्रिधा तारं सर्व्वमन्त्रमयं शिवे ! ।
व्याहृतित्रयमुच्चार्य्य सावित्रीं श्रावयेद्गुरुः ॥ २११ ॥
ऋषिः सदाशिवः प्रोक्तः छन्दस्त्रिष्टुबुदाहृतम् ।
अधिष्ठात्री तु सावित्री मोक्षार्थे विनियोगिता ॥२१२॥
आदौ तत्सवितुः पश्चाद्वरेण्यं पदमुच्चरेत् ।
भर्गः पदान्ते देवस्य धीमहीति पदं वदेत् ॥ २१३ ॥
ततस्तु परमेशानि ! धियो यो नः प्रचोदयात् ।
पुनः प्रणवमुच्चार्य्य सावित्र्यर्थं गुरुर्व्वदेत् ॥ २१४ ॥

वा किं वर्त्तते त्वं ब्रूहि इति प्राज्ञो धीमान् गुरुर्ब्रह्मचार्य्यभिमानिनं कामावकं बालकं पृच्छेत् ॥ २०७ ॥ २०८ ॥ २०९ ॥

तत इत्यादि । ततः परं शिष्यः सावहितः सावधानः सन् गुरुपदद्वयं धृत्वा हे गुरो ! ब्रह्मविद्योपदेशतः सावित्र्या उपदेशेन मामाश्रमिणं भवान् करोत्विति प्रार्थयेत् ॥ २१० ॥

एवमित्यादि । तदा तस्मिन् काले एवं प्रार्थयमानस्य शिष्योर्दक्षकर्णे सर्व्वमन्त्रमयं सकलमन्त्रस्वरूपं सकलमन्त्रप्रधानं वा तारं प्रणवं त्रिधा त्रिवारं श्रावयित्वा ततो भूरादिव्याहृतित्रयमुच्चार्य्य गुरुः सावित्रीं गायत्रीं श्रावयेत् ॥ २११ ॥

अथ गायत्र्या ऋष्यादिकमाह ऋषिरित्यादिना । अस्या गायत्र्याः सदाशिव ऋषिस्त्रिष्टुप्छन्दः सावित्र्यधिष्ठात्री देवता मोक्षार्थे विनियोगः शिरसि सदाशिवाय ऋषये नमः मुखे त्रिष्टुप्छन्दसे नमः हृदये सावित्र्यै अधिष्ठात्र्यै देवतायै नमः इत्यृष्यादिन्यासं विधाय सावित्र्या जपो विधेयः ॥ २१२ ॥

सावित्रीमेवाह आदावित्यादिना सार्द्धेन । आदौ तत्सवितुः

अत्ररात्मकतारेण परेशः प्रतिपाद्यते ।
पाता हर्त्ता च संस्रष्टा यो देवः प्रकृतेः परः ॥ २१५ ॥
असौ देवस्त्रिलोकात्मा त्रिगुणं व्याप्य तिष्ठति ।
अतो विश्वमयं ब्रह्म वाच्यं व्याहृतिभिस्त्रिभिः ॥ २१६ ॥
तारव्याहृतिवाच्यो यः सावित्र्या ज्ञेय एव सः ।
जगद्रूपस्य सवितुः संस्रष्टुर्दीव्यतो विभोः ॥ २१७ ॥
अन्तर्गतं महद्भर्गो वरणीयं यतात्मभिः ।
ध्यायेम तत् परं सत्यं सर्व्वव्यापि सनातनम् ॥२१८॥

पश्चात् वरेण्यं पदमुच्चरेत् ततो भर्ग इति पदं वदेत् तत् पदान्ते देवस्येति पदं वदेत् तदन्ते धीमहीति पदं वदेत् ततस्तु धियो यो नः प्रचोदयादिति वदेत् सकलपदयोजनया तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इत्याकारिका सावित्री जाता सावित्र्यन्ते पुनः प्रणवमोङ्कारमुच्चार्य्य गुरुः सावित्र्यर्थं वदेत् सावित्र्यर्थमिति प्रणवार्थस्य व्याहृत्यर्थस्य चाप्युपलक्षणम् ॥ २१३ । २१४ ॥

प्रथमतः प्रणवार्थं व्याहृत्यर्थं चाभिदधाति द्वाभ्यां त्र्यक्षरात्मकेत्यादि । पाता जगतः पालको हर्त्ता तस्य संहारकः संस्रष्टा तस्यैवोत्पादकश्च प्रकृतेः परो दूर उत्तमो वा यः परेशः परमात्मा देवो दीप्त्यादिक्रियाश्रयोऽस्ति असौ परेशो देवः त्र्यक्षरात्मकतारेणाकारादित्रिवर्णात्मकेन प्रणवेन प्रतिपाद्यते बोध्यते । प्रणवप्रतिपाद्यो यो देवोऽसौ देवो यतस्त्रिलोकात्मा त्रिलोकस्वरूपो भवति त्रिगुणं सत्त्वादिकं व्याप्य तिष्ठति च अतो हेतोर्व्विश्वमयं विश्वस्वरूपं ब्रह्मलोकमयाभिधायिभिर्भूरादिभिस्त्रिभिर्व्याहृतिभिर्व्वाच्यं भवति ॥ २१५ । २१६ ॥

एवं प्रणवार्थं व्याहृत्यर्थं च द्वाभ्यामभिधायेदानीं तार इत्यादिभिस्त्रिभिः सावित्र्यर्थमभिधत्ते तारेत्यादि । तारव्याहृतिवाच्यो यः परमात्मा स एव सावित्र्या अपि वाच्यो ज्ञेयः परमात्मन एव यथा सावित्रीवाच्यत्वं भवेत्तथैव व्याख्याति: जगद्रूपस्येत्यादि । सवितुरित्यस्य

यो भर्गः सर्वसाक्षीशो मनोबुद्धीन्द्रियाणि नः ।
धर्मार्थकाममोक्षेषु प्रेरयेद्विनियोजयेत् ॥ २१९ ॥
इत्यमर्थयुतां ब्रह्मविद्यामादिश्य सद्गुरुः ।
शिष्यं नियोजयेद्देवि ! गृहस्थाश्रमकर्म्मसु ॥ २२० ॥
ब्रह्मचर्य्योचितं वेशं वत्सेदानीं परित्यज ।
शाम्भवोदितमार्गेण देवान् पितॄन् समर्च्चय ॥ २२१ ॥

विवरणं जगद्रूपस्य संस्रष्टुरिति । देवस्येत्यस्य विवरणं दीव्यतो विभोरिति भर्गपदार्थमाह अन्तर्गतं महद्ब्रह्म इति वरेण्यमित्यस्यार्थमाह यतात्मभिर्व्वरणीयमिति धीमहीत्यस्य विवरणं ध्यायेमेति तत्पदार्थमाह परं सत्यं सर्व्वव्यापि सनातनमिति य इत्यस्य विवरणं सर्व्वसाक्षीश इति धिय इत्यस्य विवरणं मनोबुद्धीन्द्रियाणीति प्रचोदयादित्यस्य विवरणं धर्म्मार्थकाममोक्षेषु प्रेरयेदिति प्रेरयेदित्यस्य च विवरणं विनियोजयेदिति तदेवं वाक्यार्थः सवितुर्जगद्रूपस्य वस्तुनः संस्रष्टुर्देवस्य दीव्यतो विभोर्व्वरेण्यं यतात्मभिः संयतान्तःकरणैर्व्वरणीयमुपासनीयं तत् परमुत्तमं सत्यं यथार्थभूतं सर्व्वव्यापि सकलपदार्थव्यापनशील सनातनमाद्यन्तशून्यमन्तर्गतं महद्ब्रह्म तेजो वयं धीमहि ध्यायेम यः सर्व्वसाक्षीशः सर्व्वेषां शुभाशुभकर्म्मणां द्रष्टा नियन्ता च भर्गो नोऽस्माकं धियो मनोबुद्धीन्द्रियाणि प्रचोदयात् धर्म्मार्थकाममोक्षेषु प्रेरयेत् विनियोजयेदिति अत्र यद्यपि सवितुर्भर्ग इति सवितृभर्गयोर्भेदः प्रतीयते तथापि परमार्थचिन्तायामभेद एवेति बोद्धव्यम् ॥ २१७—२१९ ॥

इत्थमित्यादि । हे देवि ! इत्थमनेन प्रकारेणार्थयुतां ब्रह्मविद्यां गायत्रीमादिश्याभिज्ञार्थमितस्ततो गमयित्वा सद्गुरुः शिष्यं गृहस्थाश्रमकर्म्मसु नियोजयेत् प्रवर्त्तयेत् ॥ २२० ॥

गृहस्थाश्रमकर्म्मसु शिष्यस्य प्रवर्त्तनमेवाह ब्रह्मचर्य्यत्यादिभिः । हे वत्स ! त्वमिदानीं ब्रह्मचर्य्योचितं वेशं परित्यज शाम्भवोदितमार्गेण शम्भुप्रोक्तेन वर्त्मना देवान् पितॄंश्च समर्च्चय सम्यक् पूजय ॥ २२१ ॥

ब्रह्मविद्योपदेशेन पवित्रं ते कलेवरम् ।
प्राप्ता गृहस्थाश्रमिता तदुक्तं कर्म कल्पय ॥ २२२ ॥
उपवीतद्वयं दिव्यवस्त्रालङ्करणानि च ।
गृहाण पादुकाच्छत्रं गन्धमाल्यानुलेपनम् ॥ २२३ ॥
ततः काषायवसनं कृष्णाजिनसमन्वितम् ।
यज्ञसूत्रं मेखलाञ्च दण्डं भिक्षाकरण्डकम् ॥ २२४ ॥
आचारादर्ज्जितां भिक्षां समर्प्य गुरवे शिवे ! ।
शुद्धोपवीतयुगलं परिधायाम्बरे शुभे ॥ २२५ ॥
गन्धमाल्यधरस्तूष्णीं तिष्ठेदाचार्य्यसन्निधौ ।
ततो गृहस्थाश्रमिणं शिष्यमेतद्वदेद्गुरुः ॥ २२६ ॥
जितेन्द्रियः सत्यवादी ब्रह्मज्ञानपरो भव ।
स्वाध्यायाश्रमकर्म्माणि यथाधर्म्मेण साधय ॥ २२७ ॥

ब्रह्मेत्यादि । हे वत्स ! ब्रह्मविद्योपदेशेन ते तव कलेवरं शरीरं पवित्रमासीत् इदानीं प्राप्ता या गृहस्थाश्रमिता तदुक्तं कर्म्म कल्पय कुरु ॥ २२२ ॥

उपवीतेत्यादि । हे वत्स ! त्वमिदानीमुपवीतद्वयं द्वे उपवीते दिव्यानि वस्त्रालङ्करणानि च पादुकाच्छत्रमुपानहं छत्रं च गन्धमाल्यानुलेपनमपि गृहाण ॥ २२३ ॥

तत इत्यादि । गुरुणैवमाज्ञापितः शिष्यः ततः परं काषायवसनं कषायेण रक्तं वस्त्रं कृष्णाजिनसमन्वितं यज्ञसूत्रं मेखलां दण्डं भिक्षाकरण्डकं भिक्षापात्रमाचारादर्ज्जितां भिक्षाञ्च गुरवे समर्प्य दत्वा शुद्धोपवीतयुगलं शुभे अम्बरे वस्त्रे च परिधाय गन्धमाल्यधरः सन् तूष्णीमाचार्य्यसन्निधौ गुरुसमीपे तिष्ठेत् ततो गृहस्थाश्रमिणं शिष्यं गुरुरेतद्वदेत् ॥ २२४—२२६ ॥



इत्यादिश्य द्विजं पश्चात् समुद्भववहुताशने ।
मायादिप्रणवान्तेन भूर्भुवःस्वस्त्रयेण च ॥ २२८ ॥
हावयित्वा त्रिधाचार्य्यः स्विष्टकृद्धोममाचरन् ।
दत्वा पूर्णाहुतिं भद्रे ! व्रतकर्म्म समापयेत् ॥ २२९ ॥
जीवसेकादिसंस्कारा नैतान्तः पितृतो नव ।
उद्वाहः पितृतो वापि स्वतोऽपि सिध्यति प्रिये ! ॥२३०॥
विवाहाह्नि कृतस्नानः कृतनित्यक्रियः कृती ।
पञ्चदेवान् समभ्यर्च्य गौर्य्यादिमातृकास्तथा ।
वसोर्धारां कल्पयित्वा वृद्धिश्राद्धं समाचरेत् ॥ २३१ ॥
रात्रौ प्रतिश्रुतं पात्रं गीतवाद्यपुरःसरम् ।
छायामण्डपमानीय उपवेश्य वरासने ॥ २३२ ॥
वासवाभिमुखं दाता पश्चिमाभिमुखो विशेत् ।
आचम्य स्वस्तिमृद्धिञ्च कथयेद्ब्राह्मणैः सह ॥ २३३ ॥

ननु गृहस्थाश्रमिणं शिष्यं गुरुः किं वदेदित्यपेक्षायामाह जितेन्द्रिय इत्यादि ॥ २२७ ॥

इतीत्यादि । द्विजं द्विजत्वशालिनं शिष्यमित्यादिश्याज्ञाप्य पश्चात् समुद्भववहुताशने समुद्भवाख्ये वह्नौ मायादिप्रणवान्तेन ह्रीं बीजादिना ओंकारान्तेन भूर्भुवः स्वस्त्रयेण मन्त्रेण त्रिधा त्रिवारं शिष्येण हाव-यित्वा च स्विष्टकृतं होममाचरन्नाचार्य्यः पूर्णाहुतिं दत्वा व्रतकर्म्म यज्ञोपवीतक्रियां समापयेत् ॥ २२८--२३० ॥

अथोद्वाहक्रियाविधिमाह विवाहाह्नीत्यादिभिः ॥ २३१ ॥

रात्राविल्यादि । ततः प्रतिश्रुतमङ्गीकृतं पात्रं वरं गीतवाद्यपुरः-सरं यथा स्यात्तथा रात्रौ छायामण्डपमानीय वरासने श्रेष्ठे पीठे वासवाभिमुखं पूर्व्वाभिमुखमुपवेश्य च कन्याया दाता पश्चिमाभिमुखो भूत्वा विशेत् पश्चिमाभिमुख उपविष्टो दाता आचम्याचमनं कृत्वा

साधुप्रश्नं वरं पृच्छेदर्चना प्रश्नमेव च ।
वरात् प्रश्नोत्तरं नीत्वा पाद्याद्यैर्वरमर्चयेत् ॥२३४॥
समर्पयामि वाक्येन देयद्रव्यं समर्पयेत् ।
पादयोरर्पयेत् पाद्यं शिरस्यर्घ्यं निवेदयेत् ॥ २३५ ॥
आचम्यं वदने दद्यात् गन्धं माल्यं सुवाससी ।
दिव्याभरणरत्नानि यज्ञसूत्रं समर्पयेत् ॥ २३६ ॥
ततस्तु भाजने कांस्ये कृत्वा दधि घृतं मधु ।
समर्पयामि वाक्येन मधुपर्कं करेऽर्पयेत ॥ २३७ ॥
वरोऽपि पात्रमादाय वामे पाणौ निधाय च ।
दक्षाङ्गुष्ठानामिकाभ्यां प्राणाहुत्युक्तमन्त्रकैः ॥ २३८ ॥
पञ्चधाघ्राय तत्पात्रमुदीच्यां दिशि धारयेत् ।

कर्त्तव्येऽस्मिन् शुभविवाहकर्म्मणि स्वस्ति भवन्तो ब्रुवन्त्वित्युक्त्वा ब्राह्मणैः सह स्वस्तिन इन्द्रो वृद्धश्रवा इत्यादि स्वस्तिं कथयेत् ततः कर्त्तव्येऽस्मिन् शुभविवाहकर्म्मणि ऋद्धिं भवन्तोऽधिब्रुयन्त्वित्युक्त्वा तैरेव सह ऋध्यतां २ इत्यृद्धिञ्च कथयेत् ॥ २३२ । २३३ ॥

साध्वित्यादि । ततो दाता साधु भवानास्तामिति साधुप्रश्नं भवन्तमर्च्चयिष्याम इत्यर्च्चनाप्रश्नञ्च वरं पृच्छेत् ततो वरात् साध्वहमासे इति ओमर्च्चयेति च प्रश्नोत्तरं नीत्वा समादाय पाद्याद्यैर्वरमर्च्चयेत् पूजयेत् पाद्यादीनि वराय समर्पयेदित्यर्थः ॥ २३४ ॥

ननु केन वाक्येन कुत्र कुत्र वा अङ्गे पाद्यादिकं समर्पयेदित्याकाङ्क्षायामाह समर्पयामीत्यादि । तुभ्यमिदं समर्पयामीति वाक्येन पाद्यादिदेयद्रव्यं वराय समर्पयेत् ॥ २३५ । २३६ ॥

ततस्त्वित्यादि । ततस्तु कांस्ये भाजने दधि घृतं मधु च कृत्वा तुभ्यं समर्पयामीति वाक्येन मधुपर्कं वरस्य करे दक्षिणे हस्ते समर्पयेत् ॥ २३७ ॥

मधुपर्कं समर्प्यैवं पुनराचामयेद्वरम् ॥ २३९ ॥
दूर्वाक्षताभ्यां जामातुर्विधृत्य जानु दक्षिणम् ।
स्मृत्वा विष्णुं तत्सदिति मासपक्षतिथीस्ततः ॥२४०॥
समुल्लिख्य निमित्तानि ब्रूयादवरमुत्तमम् ।
गोत्रप्रवरनामानि प्रत्येकं प्रपितामहात् ॥ २४१ ॥
षष्ठ्यन्तानि समुच्चार्य्य वरस्य जनकावधि ।
द्वितीयान्तं वरं ब्रूयात् गोत्रप्रवरनामभिः ॥ २४२ ॥
तथैव कन्यामुल्लिख्य ब्राह्मोद्वाहेन पण्डितः ।
दातुं भवन्तमित्युक्त्वा वृणेऽहमिति कीर्त्तयेत् ॥ २४३ ॥

वरोऽपीत्यादि । वरोऽपि मधुपर्कपात्रमादाय गृहीत्वा वामे पाणौ निधाय संस्थाप्य च दक्षाङ्गुष्ठानामिकाभ्यामङ्गुलिभ्यां प्राणाय स्वाहेत्यादिकैः प्राणाद्युत्क्रमन्त्रकैः पञ्चधा पञ्चवारं मधुपर्कमाघ्राय तत्पात्रं मधुपर्कपात्रमुदीच्यामुत्तरस्यां दिशि धारयेत् एवं वराय मधुपर्कं समर्प्य पुनर्व्वरमाचामयेत् ॥ २३८ । २३९ ॥

दूर्व्वेत्यादि । ततो जामातुर्व्वरस्य दक्षिणं जानु विधृत्य प्रथमतो विष्णुं स्मृत्वा ततस्तत्सदिति समुल्लिख्योच्चार्य्य ततो मासप्रभृतीनि निमित्तानि समुल्लिख्य ततो वरस्य प्रपितामहात् प्रपितामहमारभ्य जनकावधेर्जनकपर्य्यन्तस्य त्रिपुरुषस्य प्रत्येकं षष्ठ्यन्तानि गोत्रप्रवरनामानि समुच्चार्य्य ततो गोत्रप्रवरनामभिर्व्विशिष्टं द्वितीयान्तं वरं ब्रूयात् ततस्तथैव कन्यायाः प्रपितामहादेर्जनकपर्य्यन्तस्य त्रिपुरुषस्य षष्ठ्यन्तानि गोत्रप्रवरनामान्युल्लिख्य ततो गोत्रप्रवरनामभिर्व्विशिष्टां द्वितीयान्तां कन्यामुल्लिख्य ततो ब्राह्मोद्वाहेन दातुं भवन्तमित्युक्त्वा पण्डितः सम्प्रदाता वृणोऽहमिति कीर्त्तयेत् योजनया विष्णुरों तत्सत् ओं अद्यामुकमास्यमुकपक्षेऽमुकतिथावमुकराशिस्थिते भास्करेऽमुकगोत्रः श्रीमदमुक देवशर्म्मामुकगोत्रस्यामुकप्रवरस्य श्रीमतो अमुकदेवशर्म्मणः प्रपौत्रममुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पौत्रममु-

वृतोऽस्मीति वरो ब्रूयात् ततो दाता वदेद्वरम्।
यथाविहितमित्युक्त्वा विवाहकर्म्म कुर्व्विति।
वरो ब्रूयात् यथाज्ञानं करवाणि तदुत्तरम्॥ २४४॥
ततः कन्यां समानीय वस्त्रालङ्कारभूषिताम्।
वस्त्रान्तरेण संच्छाद्य स्थापयेद्वरसम्मुखम्॥ २४५॥
पुनर्व्वरं समभ्यर्च्य वासोऽलङ्करणादिभिः।
वरस्य दक्षिणे पाणौ कन्यापाणिं नियोजयेत्॥२४६॥
तन्मध्ये पञ्चरत्नानि फलताम्बूलमेव वा।
दत्वार्च्चयित्वा तनयां वराय विदुषेऽर्पयेत्॥ २४७॥

कगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पुत्रममुकगोत्रममुकप्रवरं श्रीमन्तममुकदेवशर्म्माणं वरममुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः प्रपौत्रीममुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पौत्रीममुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पुत्रीममुकगोत्राममुकप्रवराममुकीं देवीं कन्यां ब्राह्मोद्वाहेन दातुं भवन्तमहं वृणे इति वाक्यं जातं अनेन वाक्येन दूर्व्वाक्षताभ्यामुत्तमं वरं वृणुयात्॥ २४०—२४३॥

वृत इत्यादि। ततो वृतोऽस्मीति वरो ब्रूयात् ततो दाता यथाविहितमित्युक्त्वा विवाहकर्म कुरु इति वरं वदेत् यथाविहितं विवाहकर्म कुर्विति जामातरं ब्रूयादित्यर्थः ततो यथाज्ञानं विवाहकर्म करवाणीति तदुत्तरं वरो ब्रूयात्॥ २४४॥

तत इत्यादि। ततः परं वस्त्रालङ्कारभूषितां कन्यां वस्त्रान्तरेण संच्छाद्य गृहात् समानीय वरसम्मुखं स्थापयेत्॥ २४५॥

पुनरित्यादि। ततो दाता वासोऽलङ्करणादिभिर्वरं पुनः समभ्यर्च्य वरस्य दक्षिणे पाणौ कन्यापाणिं कन्याया दक्षिणं हस्तं नियोजयेत् स्थापयेत्॥ २४६॥

तन्मध्ये इत्यादि। ततस्तन्मध्ये पाणिमध्ये पञ्चरत्नानि फल-

प्राग्वत्त्रिपुरुषाख्यानं निमित्ताख्यानमेव च ।
आत्मनः काममुद्दिश्य चतुर्थ्यन्तं वरं वदेत् ॥ २४८ ॥
कन्याभिधां द्वितीयान्तामर्च्चितां समलङ्कृताम् ।
साच्छादनां प्रजापतिदेवताकामुदीरयन् ॥ २४९ ॥
तुभ्यमहमिति प्रोच्य दद्यात् सम्प्रददे वदन् ।
वरः स्वस्तीति स्वीकुर्य्यात् सम्प्रदाता वरं वदेत् ॥२५०॥
धर्म्मे चार्थे च कामे च भवता भार्य्यया सह ।
वर्त्तितव्यं वरो वाढ़मुक्त्वा कामस्तुतिं पठेत् ॥ २५१ ॥

ताम्बूलमेव वा दत्वा तनयां पुत्रीमर्च्चयित्वा विदुषे धीमते वरायार्पयेत् दद्यात् ॥ २४७ ॥

ननु केन वाक्येन वराय कन्या समर्पयितव्येत्याकाङ्क्षायामाह प्राग्वदित्यादि । प्राग्वत् पूर्ववत् त्रिपुरुषाख्यानं निमित्ताख्यानञ्च कृत्वात्मनः काममुद्दिश्य तत्चतुर्थ्यन्तं वरं वदेत् ततो द्वितीयान्तामर्च्चितां समलङ्कृतां साच्छादनां प्रजापतिदेवताकां कन्याभिधामुदीरयंस्तुभ्यमहमिति प्रोच्य ततः सम्प्रददे इति वदंस्तनयां दद्यात् योजनया विष्णुरों तत्सत् अद्य अमुके मास्यमुकपक्षेऽमुकतिथावमुकराशिस्थिते भास्करेऽमुककामोऽर्थसिद्धिकामोऽमुकगोत्रः श्रीमदमुकशर्म्माऽमुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पौत्रायामुकगोत्रायामुकप्रवराय श्रीमतेऽमुकदेवशर्म्मणे वरायामुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः प्रपौत्रीममुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पौत्रीममुकगोत्रस्यामुकप्रवरस्य श्रीमदमुकदेवशर्म्मणः पुत्रीममुकगोत्राममुकप्रवरामर्च्चितां समलङ्कृतां साच्छादनां प्रजापतिदेवताकाममुकीं देवीमेनां कन्यां तुभ्यमहं सम्प्रददे इति वाक्येन विदुषे वराय तनयां समर्पयेदित्यर्थः वरः स्वस्तीत्युक्त्वा भार्य्यां स्वीकुर्य्यात् ततः सम्प्रदाता वरं वदेत् ॥ २४८—२५० ॥

सम्प्रदाता वरं प्रति किं वदेदित्यपेक्षायामाह धर्म्मे चेत्यादि । हे

दाता कामो गृहीतापि कामायादाच्च कामिनीम् ।
कामेन त्वां प्रगृह्णामि कामः पूर्णोऽस्तु चावयोः ॥२५२॥
ततो वदेत् सम्प्रदाता कन्यां जामातरं प्रति ।
प्रजापतिप्रसादेन युवयोरभिवाञ्छितम् ।
पूर्णमस्तु शिवश्चास्तु धर्म्मं पालयतं युवाम् ॥ २५३ ॥
तत आच्छाद्य वस्त्रेण सम्प्रदाता सुमङ्गलैः ।
परस्परशुभालोकं कारयेद्वरकन्ययोः ॥ २५४ ॥
ततो हिरण्यरत्नानि यथाशक्त्यनुसारतः ।
जामात्रे दक्षिणां दद्यादच्छिद्रमवधारयेत् ॥ २५५ ॥

जामातर्धर्मे चार्थे च कामे च भार्य्यया सह भवता वर्त्तितव्यं ततो वरो वाढमुक्त्वा कामस्तुतिं पठेत् वाढमङ्गीकरणं स्वयप्रतिज्ञयोर्वाढमित्यमरः । ॥ २५१ ॥

कामस्तुतिमेवाह दाता काम इति । कामो दाता भवति काम एव गृहीता भवति कामः कामाय कामिनीमदात् हे भार्य्ये ! कामेन त्वामहं प्रतिगृह्णामि आवयोः कामः पूर्णोऽस्तु ॥ २५२ ॥

तत इत्यादि । ततः कामस्तुतिपाठादनन्तरं सम्प्रदाता कन्यां जामातरं वरञ्च प्रति वदेत् किं वदेदित्यपेक्षायामाह प्रजापतिप्रसादेनेत्यादि ॥ २५३ ॥

तत इत्यादि । ततः सम्प्रदाता वस्त्रेण वरकन्ये आच्छाद्य सुमङ्गलैर्गीतवाद्यादिभिर्वरकन्ययोः परस्परशुभालोकं कारयेत् ॥ २५४ ॥

तत इत्यादि । ओं अद्येत्यादि कृतस्यास्य शुभविवाहकर्म्मणः साङ्गतार्थं हिरण्यादिदक्षिणाममुकगोत्रायामुकदेवशर्म्मणे वराय तुभ्यमहं सम्प्रददे इति वाक्येन सम्प्रदाता जामात्रे यथाशक्त्यनुसारतो हिरण्यरत्नानि दक्षिणां दद्यात् ततः कृतमिदं शुभविवाहकर्म्माच्छिद्रमस्तु इत्यवधारयेत् ॥ २५५ ॥

वरस्तु भार्य्यया सार्द्धं तद्रात्रौ दिवसेऽपि वा ।
कुशण्डिकोक्तविधिना वह्निस्थापनमाचरेत् ॥ २५६ ॥
योजकाख्यः पावकोऽत्र प्राजापत्यश्चरुः स्मृतः ।
धारान्तं कर्म्म सम्पाद्य दद्यात् पञ्चाहुतीर्व्वरः ॥२५७॥
शिवं दुर्गां तथा विष्णुं ब्रह्माणं वज्रधारिणम् ।
ध्यात्वैकैकं समुद्दिश्य जुहुयात् संस्कृतेऽनले ॥ २५८ ॥
भार्य्यायाः पाणियुगलं गृह्णीयादित्युदीरयन् ।
पाणिं गृह्णामि सुभगे ! गुरुदेवरता भव ।
गार्हस्थ्यं कर्म्म धर्म्मेण यथावदनुशीलय ॥ २५९ ॥
घृतेन स्वामिदत्तेन लाजैर्भ्रातापहृतैः शिवे ! ।
प्रजापतिं समुद्दिश्य दद्यात् वेदाहुतीर्व्वधूः ॥ २६० ॥
प्रदक्षिणीकृत्य वह्निमुत्थाय भार्य्यया सह ।
दुर्गां शिवं रमां विष्णुं ब्राह्मीं ब्रह्माणमेव च ।
युग्मं युग्मं समुद्दिश्य त्रिस्त्रिधा हवनं चरेत् ॥२६१॥

वरस्त्वित्यादि । तदनन्तरमिति शेषः दिवसेऽपि वा तस्या एव रात्रेः परस्मिन् दिने वा ॥ २५६ ॥

अत्र विवाहकर्मणि ॥ २५७ ॥

ननु कान्देवानुद्दिश्य सभार्य्यो वरः पञ्चाहुतीर्दद्यादित्यपेक्षायामाह शिवमित्यादि ॥ २५८ ॥

भार्य्याया इति । ततो वर इति वक्ष्यमाणं मन्त्रमुदीरयन् कीर्त्तयन् भार्य्यायाः पाणियुगलं गृह्णीयात् तमेव मन्त्रमाह पाणिं गृह्णामि सुभगे इति ॥ २५९ ॥

घृतेनेत्यादि । हे शिवे ! ततो वधूर्भार्य्यास्वामिदत्तेन घृतेन भ्रात्राहृतैर्दत्तैर्लाजैश्च प्रजापतिं समुद्दिश्य वेदाहुतीश्चतस्र आहुतीर्दद्यात् ॥ २६० ॥

सप्तमण्डलिकासमारोहौ कुर्य्यादमन्त्रकम् ।
निशायाञ्चेत् तदा स्त्रीभिः पश्येद्ध्रुवमरुन्धतीम् ॥ २६२
प्रत्यागत्यासने सम्यगुपविश्य वरस्तदा ।
स्विष्टकृद्धोमतः पूर्णाहुत्यन्तेन समापयेत् ॥ २६३ ॥
ब्राह्मो विवाहो विहितो दोषहीनः सवर्णया ।
कुलधर्म्मानुसारेण गोत्रभिन्नासपिण्डया ॥ २६४ ॥
ब्राह्मोद्वाहेन या ग्राह्या सैव पत्नी गृहेश्वरी ।
तदनुज्ञां विना ब्राह्मविवाहं नाचरेत् पुनः ॥ २६५ ॥
तस्या अपत्ये तद्वंशे विद्यमाने कुलेश्वरि ! ।
शैवोद्भवान्यपत्यानि दायार्हाणि भवन्ति न ॥ २६६ ॥
शैवा तदन्वयाश्चैव लभेरन् धनभाजिनः ।
यथाविभवमाच्छादं ग्रासञ्च परमेश्वरि ! ॥ २६७ ॥
शैवो विवाहो द्विविधः कुलचक्रे विधीयते ।
चक्रस्य नियमेनैको द्वितीयो जीवनावधि ॥ २६८ ॥

प्रदक्षिणीकृत्येत्यादि । ततो वरो भार्य्यया सहोत्थाय वह्निं प्रदक्षिणीकृत्य दुर्गां शिवञ्च रमां विष्णुञ्च ब्राह्मीं ब्रह्माणमेव च युग्मं युग्मं समुद्दिश्य त्रिस्त्रिधा त्रिवारं त्रिवारं हवनं चरेत् कुर्य्यात् ॥ २६१ ॥

सप्तमण्डलिकेत्यादि । ततः सभार्य्यो वरोऽमन्त्रकं मन्त्रवर्जितम् सप्तमण्डलिकासमारोहौ पाषाणारोहणं सप्तमण्डलिकारोहणञ्च कुर्य्यात् चेत् यदि निशायां तदारोहौ कुर्य्यात्तदा स्त्रीभिः परिवृतः सभार्य्यो वरो ध्रुवमरुन्धतीञ्च पश्येत् ॥ २६२ ॥

समापयेत् विवाहकर्मेति शेषः ॥ २६३—२६५ ॥

तस्या इत्यादि । तस्या ब्राह्मोद्वाहेन गृहीतायाः पत्न्याः अपत्ये आत्मजे आत्मजायां वा ॥ २६६ ॥

धनभाजिनो जनाः ॥ २६७ ॥ २६८ ॥

चक्रानुष्ठानसमये स्वगणैः शक्तिसाधकैः ।
परस्परेच्छयोद्वाहं कुर्य्याद्वीरः समाहितः ॥ २६९ ॥
भैरवीवीरवृन्देषु स्वाभिप्रायं निवेदयेत् ।
आवयोः शाम्भवोद्वाहे भवद्भिरनुमन्यताम् ॥ २७० ॥
तेषामनुज्ञामादाय जप्त्वा सप्ताक्षरं मनुम् ।
अष्टोत्तरशतावृत्त्या प्रणमेत् कालिकां पराम् ॥ २७१ ॥
ततो वदेत् तां रमणीं कौलानां सन्निधौ शिवे ! ।
अकैतवेन चित्तेन पतिभावेन मां वृणु ॥ २७२ ॥
गन्धपुष्पाक्षतैर्दत्त्वा सा कौलादपि तं ततः ।
सुश्रद्दधाना देवेशि ! करौ दद्यात् करोपरि ॥ २७३ ॥
ततोऽभिषिञ्चेत् चक्रेशो मन्त्रेणानेन दम्पती ।
तदा चक्रस्थिताः कौला ब्रूयुः स्वस्तीति सादरम् ॥२७

अथ शाम्भवोद्वाहविधिमाह चक्रानुष्ठानेत्यादिभिः । स्वगणैः शक्तिसाधकैः सह चक्रानुष्ठानसमये परस्परेच्छया परस्परस्य भैरव्या वीरस्य चाकाङ्क्षया समाहितः सावधानः सन् वीर उद्वाह कुर्य्यात् ॥ २६९ ॥ २७० ॥

तेषामित्यादि । तेषां भैरवीवीरवृन्दानामनुज्ञामनुमतिमादाय गृहीत्वा सप्ताक्षरं परमेश्वरि स्वाहेति मनुमष्टोत्तरशतावृत्त्या जप्त्वा वीर परमात्तमां कालिकां प्रणमेत् ॥ २७१ ॥

तत इत्यादि । हे शिवे ! पार्व्वति ! ततो वीरः कौलान सन्निधौ समीपे हे रमणि ! त्वमकैतवेन व्याजशून्येन चित्तेन पतिभा वेन मां वृणुष्वेति तां रमणीं वदेत् ॥ २७२ ॥

गन्धेत्यादि । हे देवेशि ! ततः सा कौला सुश्रद्दधाना सती गन्ध पुष्पाक्षतैर्दयितं प्रियं दत्त्वा तस्य करोपरि स्वकीयौ करौ दद्यात् ॥२७

तत इत्यादि । ततःपरं चक्रेशोऽनेन वक्ष्यमाणेन मन्त्रेण तं

राजराजेश्वरी काली तारिणी भुवनेश्वरी ।
बगला कमला नित्या युवां रक्षन्तु भैरवी ॥ २७५ ॥
अभिषिञ्चेत् द्वादशधा मधुना वार्य्ययाथ सा ।
ततस्तौ प्रणतौ विद्वान् श्रावयेद्वाग्भवं रमाम् ॥२७६ ॥
यद्यदङ्गीकृतं तत्र ताभ्यां पाल्यं प्रयत्नतः ।
शाम्भवोक्तविधानेन कुलीनाभ्यां कुलेश्वरि ! ॥२७७॥
वयोवर्णविचारोऽत्र शैवोद्वाहे न विद्यते ।
असपिण्डां भर्त्तृहीनामुद्वहेच्छम्भुशासनात् ॥ २७८ ॥
परिणीता शैवधर्मे चक्रनिर्धारणेन या ।
अपत्यार्थी ऋतुं दृष्ट्वा चक्रातीते तु तां त्यजेत् ॥२७९॥
शैवभार्य्योद्भवापत्यमनुलोमेन मातृवत् ।
समाचरेद्विलोमेन तत्तु सामान्यजातिवत् ॥ २८० ॥
एषां सङ्करजातीनां सर्वत्र पितृकर्म्मसु ।

दम्पती जायापती अभिषिञ्चेत् तदा अस्मिन् काले चक्रस्थिताः कौलाः सादरं यथा स्यात्तथा स्वस्तीति ब्रूयुर्व्वदेयुः ॥ २७४ ॥

ननु केन मन्त्रेण चक्रेशो दम्पती अभिषिञ्चेदित्यपेक्षायामाह राजराजेश्वरीत्यादि ॥ २७५ ॥

अभिषिञ्चेदित्यादि । चक्रेशोऽनेनैव मन्त्रेण मधुना मद्येन वार्य्ययाथवार्घ्यजलेन वा द्वादशधा द्वादशवारं दम्पती अभिषिञ्चेत् ततः प्रणतौ दम्पती प्रति विद्वांश्चक्रेशो वाग्भवं ऐमिति रमां श्रीमिति च बीजं श्रावयेत् ॥ २७६ ॥

तत्र शाम्भवोद्वाहकर्म्मणि ताभ्यां जायापतिभ्यां ॥ २७७।२७८ ॥

परिणीतेत्यादि । चक्रनिर्द्धारणेन चक्रनियमेन शैवधर्म्मे या स्त्री परिणीता तदा आसीत्तां स्त्रियं चक्रातीते सत्यपत्यार्थी वीरः स्त्रियऋतुं दृष्ट्वा त्यजेत् ॥ २७९ ॥

भोज्यप्रदानं कौलानां भोजनं विहितं भवेत् ॥ २८१ ॥
नृणां स्वभावजं देवि ! प्रियं भोजनमैथुनम् ।
सङ्क्षेपाय हितार्थाय शैवधर्मे निरूपितम् ॥ २८२ ॥
अतएव महेशानि ! शैवधर्म्मनिषेवणात् ।
धर्म्मार्थकाममोक्षाणां प्रभुर्भवति नान्यथा ॥ २८७ ॥

इति श्रीमहानिर्व्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्व्वधर्म्म-
निर्णयसारे श्रीमदाद्यासदाशिवसंवादे
कुशण्डिकादशविधसंस्कारविधि-
र्नाम नवमोल्लासः ।

शैवभार्य्येत्यादि । अनुलोमेन वर्णेन शैवभार्य्योद्भवापत्यं मातृवत् कर्म्म समाचरेत् कुर्य्यात् यथा ब्राह्मणात् क्षत्रियायां शैव्याभार्य्यायां जातमपत्यं क्षत्रियावत् कर्म्म समाचरेदित्येवं विलोमेन वर्णेन यत् शैवभार्य्योद्भवापत्यं तत् सामान्यजातिवत् पञ्चमवर्णवत् कर्म्म समाचरेत् ॥ २८०—२८३ ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां नवमोल्लासः ।

---

## दशमोल्लासः ।

श्रीदेव्युवाच ।

कुशण्डिकाविधिर्नाथ ! संस्काराश्च दश श्रुताः ।
वृद्धिश्राद्धविधिं देव ! कृपया मे प्रकाशय ॥ १ ॥

कुशण्डिकाया जीवसेकादिविवाहान्तानां दशविधसंस्काराणाञ्च विधिं श्रुत्वेदानीं वृद्धिश्राद्धविधिं कुशण्डिकाया वृद्धिश्राद्धस्य च

कस्मिन् कस्मिंश्च संस्कारे प्रतिष्ठासु च कास्वपि।
कुशण्डिकाविधानञ्च वृद्धिश्राद्धञ्च शङ्कर!॥ २॥
कर्त्तव्यं वा न कर्त्तव्यं तन्ममाचक्ष्व तत्त्वतः।
मत्प्रीतये महेशान! जीवानां मङ्गलाय च॥ ३॥

श्रीसदाशिव उवाच।

जीवसेकाद्विवाहान्तदशसंस्कारकर्म्मसु।
यत्र यद्विहितं भद्रे! सविशेषं प्रकीर्त्तितम्॥ ४॥
तदेव कार्य्यं मनुजैस्तत्त्वशो हितमिच्छुभिः।
अन्यत्र यद्विधातव्यं तत् शृणुष्व वरानने!॥ ५॥
वापीकूपतड़ागानां देवप्रतिकृतेस्तथा।
गृहारामव्रतादीनां प्रतिष्ठाकर्म्मसु प्रिये!॥ ६॥
सर्वत्र पञ्चदेवानां मातॄणामपि पूजनम्।
वसोर्धारा च कर्त्तव्या वृद्धिश्राद्धकुशण्डिके॥ ७॥
स्त्रीणां विधेयकृत्येषु वृद्धिश्राद्धं न विद्यते।
देवतापितृतृप्त्यर्थं भोज्यमेकं समुत्सृजेत्॥ ८॥

कस्मिन् कस्मिन् कर्म्मणि कार्य्यत्वमकार्य्यत्वं वा वर्त्तते तदपि श्रोतुमिच्छन्ती श्रीदेव्युवाच कुशण्डिकाविधिरित्यादि॥ १।२॥

आचक्ष्व ब्रूहि॥ ३॥

श्रीदेव्यैवं प्रार्थितः सन् श्रीसदाशिव उवाच जीवसेकादित्यादि। जीवसेकाज्जीवसेकमारभ्य॥ ४।५॥

वापीत्यादि। देवप्रतिकृतेः देवताप्रतिमायाः॥ ६॥

पञ्चदेवानां ब्रह्मादीनां मातॄणां गौर्य्यादीनाम्॥ ७॥

स्त्रीणामित्यादि। स्त्रीणामिति कृत्यानां कर्त्तरि षष्ठी समुत्सृजेत् स्त्रीति शेषः॥ ८॥

देवमात्रार्च्चनं तत्र वसुधारा कुशण्डिका ।
भक्त्या स्त्रिया विधातव्या ऋत्विजा कमलानने ! ॥ ९ ॥
पुत्रश्च पौत्रो दौहित्रो भ्रातरौ भगिनीसुतः ।
जामातर्त्विग्‌ दैवपित्र्ये शस्ताः प्रतिनिधौ शिवे ! ॥ १० ॥
वृद्धिश्राद्धं प्रवक्ष्यामि तत्त्वतः शृणु कालिके ! ॥ ११ ॥
कृत्वा नित्योदितं कर्म्म मानवः सुसमाहितः ।
गङ्गां यज्ञेश्वरं विष्णुं वास्तोशं भूपतिं यजेत् ॥ १२ ॥
ततो दर्भमयान् विप्रान् कल्पयेत् प्रणवं स्मरन् ।
पञ्चभिर्नवभिर्वापि सप्तभिस्त्रिभिरेव वा ॥ १३ ॥
निर्गर्भैश्च कुशैः साग्रैर्द्दक्षिणावर्त्तयोगतः ।
सार्द्धद्वयावर्त्तनेन जङ्घाग्रे रचयेद्द्विजान् ॥ १४ ॥
वृद्धिश्राद्धे पार्वणादौ षड्‌विप्राः परिकीर्त्तिताः ।

तत्र स्त्रीभिर्विधेयेषु कर्मसु ऋत्विजा आत्मप्रतिनिधिना पुरोहितेन ॥ ९ ॥

ननु पुरोहित एव प्रतिनिधिः प्रशस्तो भवति तदन्योऽपि वा कश्चित् तत्राह पुत्र इत्यादि ॥ १० । ११ ॥

अथ वृद्धिश्राद्धविधिमाह कृत्येत्यादिभिः । नित्योदितं कर्म कृत्वा पूर्वाभिमुखो मानवः सुसमाहितोऽतिसावधानः सन् प्रणवादि नमोऽन्तेन नाममन्त्रेण गन्धपुष्पादिभिर्गङ्गां यज्ञेश्वरं विष्णुं वास्तोशं भूपतिं भूमिस्वामिनं पुरुषञ्च क्रमतो यजेत् पूजयेत् ॥ १२ ॥

तत इत्यादि । ततः परं प्रणवमोङ्कारं स्मरन् सन् मानवो दर्भमयान् विप्रान् कल्पयेत् रचयेत् । दर्भमयब्राह्मणनिर्म्माणमाह पञ्चभिरित्यादिना सार्द्धेन । निर्गर्भैर्गर्भशून्यैः साग्रैरग्रभागसहितैः कुशैर्नवभिः सप्तभिः पञ्चभिस्त्रिभिरेव वा कुशैर्द्दक्षिणावर्त्तयोगतः सार्द्धद्वयावर्त्तनेन द्विजान् विप्रान् रचयेत् ॥ १३ । १४ ॥

एकोद्दिष्टे तु कथित एक एव द्विजः शिवे । ॥ १५ ॥
ततो विप्रान् कुशमयानेकस्मिन्नेव भाजने ।
कौवेराभिमुखान् कृत्वा स्नापयेदमुना सुधीः ॥ १६ ॥
ह्रीं शन्नो देवीरभीष्टये शन्नो भवन्तु ।
पीतये शंयो रभिस्रवन्तु नः ॥ १७ ॥
ततस्तु गन्धपुष्पाभ्यां पूजयेत् कुशभूसुरान् ॥ १८ ॥
पश्चिमे दक्षिणे चैव कुम्भयुग्मक्रमात् सुधीः ।
षट् पात्राणि सदर्भाणि स्थापयेत्तुलसीतिलैः ॥ १९ ॥
पात्रद्वये पश्चिमायां याम्ये पात्रचतुष्टयम् ।
पूर्वास्यानुत्तरमुखान् षड् विप्रानुपवेशयेत् ॥ २० ॥
दैवपक्षं पश्चिमायां दक्षिणे वामयाम्ययोः ।

ननु कति दर्भमया ब्राह्मणाः कल्पयितव्या इत्याकाङ्क्षायामाह वृद्धिश्राद्धे इत्यादि ॥ १५ ॥

तत इत्यादि । ततः परं सुधीः श्राद्धकर्त्ता एकस्मिन्नेव भाजने कुशमयान् विप्रान् कौवेरमुखानुत्तरमुखान् कृत्वामुना वक्ष्यमाणेन मन्त्रेण स्नापयेत् ॥ १६ ॥

कुशमयब्राह्मणस्नापनार्थं मन्त्रमेवाह । ह्रींशन्न इत्याद्यम् ॥ १७ ॥

ततस्त्वित्यादि । ततस्तु प्रणवादिनमोऽन्तेन नाममन्त्रेण गन्धपुष्पाभ्यां कुशभूसुरान् कुशमयब्राह्मणान् पूजयेत् ॥ १८ ॥

पश्चिमे इत्यादि । ततः सुधीः कर्म्मसाधकः पश्चिमे दक्षिणे चैव कुम्भ कुम्भ क्रमात् सदर्भाणि कुशसहितानि तुलसीतिलैश्च युक्तानि षट् पात्राणि स्थापयेत् ॥ १९ ॥

पात्रद्वये इत्यादि । ततः पश्चिमायां दिशि स्थापिते पात्रद्वये याम्ये दक्षिणे स्थापिते पात्रचतुष्टये च क्रमतः पूर्व्वास्यौ पूर्व्वमुखौ उत्तरास्यांश्च कुशमयान् षड् विप्रानुपवेशयेत् ॥ २० ॥

पितुर्मातामहस्यापि पद्मौ द्वौ विद्धि पार्वति ! ॥ २१ ॥
नान्दीमुखाश्च पितरो नान्दीमुख्यश्च मातरः ।
मातामहादयोऽप्येवं मातामह्यादयोऽपि च ।
श्राद्धे नान्न्याभ्युदयिके समुल्लेख्या वरानने ! ॥ २२ ॥
दक्षावर्त्तेनोत्तरास्यो दैवं कर्म्म समाचरेत् ।
वामावर्त्तेन दक्षास्यः पितृकर्म्माणि साधयेत् ॥ २३ ॥
सर्वकर्म्म प्रकुर्वीत दैवादिक्रमतः शिवे ! ।
लघुर्नाम्नात्मातॄणां श्राद्धं तद्विफलं भवेत् ॥ २४ ॥
कौवेराभिमुखोऽनुज्ञावाक्यं दैवे प्रकल्पयेत् ।
याम्यास्यः कल्पयेद्वाक्यं पित्रे मातामहेऽपि च ।

दैवपद्ममित्यादि । हे पार्व्वति ! पश्चिमायां दिशि दैवं पद्मं च विद्धि जानीहि । दक्षिणे तु वामयाम्ययोर्वामभागे दक्षिणभागे च क्रमतः पितुर्मातामहस्यापि द्वौ पद्मौ विद्धि ॥ २१ ॥

नान्दीमुखाश्चेत्यादि । हे वरानने ! देवि ! आभ्युदयिके नान्दीश्राद्धे पितरः पित्रादयो नान्दीमुखा मातरो मात्रादयश्च नान्दीमुख्यः समुल्लेख्याः सम्बोध्याः एवं मातामहादयोऽपि नान्दीमुखाः मातामह्यादयोऽपि नान्दीमुख्यः समुल्लेख्याः ॥ २२ ॥

दक्षावर्त्तेनेत्यादि । दक्षिणावर्त्तेनोत्तरास्य उत्तरमुखः सन् दैवं कर्म्म समाचरेत् कुर्य्यात् । वामावर्त्तेन दक्षास्यो दक्षिणमुखः सन् पितृकर्म्माणि साधयेत् ॥ २३ ॥

सर्व्वमित्यादि । हे शिवे ! दैवादिक्रमत एव सर्व्वं कर्म्म प्रकुर्व्वीत । ननु पितृकर्म्मसाधनाय दक्षिणावर्त्तेनैव दक्षिणामुखभवने को दोषस्तत्राह लघुनेत्यादि । मातृमातॄणां मातृश्रीमातादीनां लघुना तच्छ्राद्धं विफलं भवेत् । मातृमातॄणामिति मातुः पित्रादीनामप्यु-लक्षणम् ॥ २४ ॥

भूत्वा दैवपक्षे तु वाक्यं शृणु शुचिस्मिते ! ॥ २५ ॥
कालादीनि निमित्तानि समुल्लिख्य ततः परम्।
तत्तत्कर्माभ्युदयार्थमुक्त्वा साधकसत्तमः ॥ २६ ॥
पित्रादीनां त्रयाणां तु मात्रादीनां तथैव च।
मातामहानां च मातामह्यादीनामपि प्रिये ! ॥ २७ ॥
षष्ठ्यन्तं कीर्त्तयेन्नाम गोत्रोच्चारणपूर्वकम्।
विश्वेषाञ्चैव देवानां श्राद्धं पदमुदीरयेत् ॥ २८ ॥
कुशनिर्मितयोः पश्चात् विप्रयोरहमित्यपि।
करिष्ये पदमेवानीत्यनुज्ञावाक्यमीरितम् ॥ २९ ॥

कौबेरेत्यादि। कौबेराभिमुखो उत्तराभिमुखो भूत्वा दैवे पक्षेऽनुज्ञावाक्यं कथयेत् ॥ २५ ॥

दैवपक्षे प्रकल्पनीयं यदनुज्ञावाक्यं तदेवाह कालादीनीत्यादिभिः। प्रथमतः कालादीनि निमित्तानि समुल्लिख्य ततः परं तत्तत्कर्माभ्युदयार्थमुक्त्वा साधकसत्तमो गोत्रोच्चारणपूर्व्वकं पित्रादीनां त्रयाणां मात्रादीनामपि तिसृणां तथैव मातामहादीनां त्रयाणां मातामह्यादीनामपि तिसृणां षष्ठ्यन्तं नाम कीर्त्तयेत्। ततो विश्वेषां देवानां चेति पदमुदीरयेदुच्चारयेत्। ततः श्राद्धपदमुदीरयेत्। पश्चात् कुशनिर्मितयोर्विप्रयोरहमित्यप्युदीरयेत्। ततः करिष्ये इत्युदीरयेत्। सकलपदयोजनया यथा विष्णुरोन्तत्सत् अद्यामुकमास्यमुकपक्षेऽमुकतिथावमुककर्माभ्युदयार्थममुकगोत्राणां नान्दीमुखानां पितृपितामहप्रपितामहानाममुकामुकदेवशर्म्मणाममुकगोत्राणां नान्दीमुखीनां मातृपितामहीप्रपितामहीनाममुक्यमुक्यमुकीनां देवीनां चामुकगोत्राणां नान्दीमुखानां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकदेवशर्म्मणां चामुकगोत्राणां नान्दीमुखीनां मातामहीप्रमातामहीवृद्धप्रमातामहीनाममुक्यमुक्यमुकीनां देवीनां च विश्वेषां देवानामाभ्युदयिकं श्राद्धं कुशनिर्मितयो-

विश्वान् देवान् परित्यज्य पितृपक्षे तु पार्वति ।
तथा मातामहस्यापि पक्षेऽनुज्ञा प्रकीर्त्तिता ॥ २० ॥
ततो जपेद्ब्रह्मविद्यां गायत्रीं दशधा शिवे ॥ २१ ॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमोऽस्तु पुष्ट्यै स्वाहायै नित्यमेव भवन्त्विति ॥ २२ ॥
पठित्वैनं त्रिधा हस्ते जलमादाय यत्नतः ।
वं हुम्फडिति मन्त्रेण श्राद्धद्रव्याणि प्रोक्षयेत् ॥ २३ ॥
आग्नेय्यां पात्रमेकन्तु संस्थाप्य कुलनायिके ।
रक्षोघ्नमन्त्रं प्रोच्य यज्ञरक्षां कुरुष्व मे
इत्युक्त्वा भाजने तस्मिं स्तुलसीदलसंयुतम् ॥ २४ ॥

र्विप्रयोरहं करिष्ये इति वाक्यं जातम् । हे परमेशानि ! दैवपक्षे इत्थं तदेवानुज्ञावाक्यमीरितं कथितम् ॥ २६—२९ ॥

पितृपक्षे मातामहपक्षे च यदनुज्ञावाक्यं प्रकल्पनीयं तदाह विश्वानित्यादिना । हे पार्वति ! पितृपक्षे तथा मातामहस्यापि पक्षे विश्वान् देवान् परित्यज्यानुज्ञा प्रकीर्त्तिताऽनुज्ञावाक्यं कथितम् । पितृपक्षेऽनुज्ञावाक्यं यथा ओम् अद्यामुकमास्यमुकपक्षेऽमुकतिथावमुककर्माभ्युदयार्थममुकगोत्राणां नान्दीमुखानां पितृपितामहप्रपितामहानाममुकामुकामुकदेवशर्मणां अमुकगोत्राणां नान्दीमुखीनां मातृपितामहीप्रपितामहीनाममुक्यमुक्यमुकीनां देवीनां चाभ्युदयिकं श्राद्धं कुशनिर्मितयोर्विप्रयोरहं करिष्ये इति । मातामहपक्षेऽप्येवमेवानुज्ञावाक्यं प्रकल्पनीयम् ॥ २० ॥

ततः अनुज्ञावाक्यकल्पनादनन्तरम् ॥ २१ ॥ २२ ॥

पठित्वैनमित्यादि । एनं देवताभ्य इत्याद्यं भवन्त्वित्यन्तं मन्त्रं त्रिधा त्रिवारं पठित्वा ततः यत्नतः श्राद्धकर्त्ता हस्ते जलमादाय वं हुम्फडिति मन्त्रेण श्राद्धद्रव्याणि प्रोक्षयेत् ॥ २३ ॥

आग्नेय्यामित्यादि । तत आग्नेय्यां दिश्येकं पात्रं संस्थाप्य प्र-

[illegible] देवि। देवादिक्रमतः सुधीः
[illegible] दत्त्वा दद्यात् कुशासनम् ॥ २५ ॥
तत [illegible] विद्वान् विश्वान् देवान् पितृंस्तथा।
मातृ [illegible] चापि तथा मातामहीं शिवे ! ॥२६ ॥

यतो [illegible] ततो मे यज्ञरक्षां कुरुष्वेति पठेत् योजनया रक्षो [illegible] मम यज्ञरक्षां कुरुष्वेति मन्त्रो जातः इतीमं मन्त्रं [illegible] क्षितिं संस्थापिते भाजने तुलसीयवसंयुतं सलिलं जलं [illegible] ततः सुधीः श्राद्धकर्त्ता देवादिक्रमतः कुशमयेभ्यो विप्रेभ्यो [illegible] दत्त्वा विश्वे देवा ! इदमासनं वो नम इति वाक्येन विश्वेभ्यो देवेभ्योऽमुकगोत्र नान्दीमुख पितरमुकदेवशर्मन् अमुकगोत्र नान्दीमुख पितामहामुकदेवशर्मन्नमुकगोत्र नान्दीमुख प्रपितामहामुकदेवशर्मन्निदमासनं वः स्वधेति वाक्येन पित्रादिभ्योऽमुकगोत्रे नान्दीमुखि मातरमुकि देवि ! अमुकगोत्रे नान्दीमुखि पितामहि अमुकि देवि ! अमुकगोत्रे नान्दीमुखि प्रपितामहि अमुकि देवि ! इदमासनं वः स्वधेति वाक्येन मात्रादिभ्योऽमुकगोत्र नान्दीमुख मातामहामुकदेवशर्मन् [illegible] नान्दीमुख प्रमातामहामुकदेवशर्मन्नमुकगोत्र नान्दीमुख वृद्धप्रमातामहामुकदेवशर्मन्निदमासनं वः स्वधेति वाक्येन मातामहादिभ्योऽमुकगोत्रे नान्दीमुखि मातामह्यमुकि देवि ! अमुकगोत्रे नान्दीमुखि प्रमातामह्यमुकि देवि ! अमुकगोत्रे नान्दीमुखि वृद्धप्रमातामह्यमुकि देवि इदमासनं वः स्वधेति वाक्येन मातामह्यादिभ्योऽपि कुशासनं दद्यात् ॥ २४ । २५ ॥

[illegible] इत्यादि । ततो विद्वान् श्राद्धकर्त्ता विश्वे देवा इहागच्छतेह तिष्ठतेह [illegible] मम पूजां गृह्णीतेति वाक्येन विश्वान् देवान् अमुकगोत्रा [illegible] पितृपितामहप्रपितामहा अमुकामुकामुकदेवशर्माण [illegible] तिष्ठतेह [illegible] मम पूजां गृह्णीतेति वाक्येन पितृन् [illegible] अमुकगोत्रा नान्दीमुख्यो मातृपितामहीप्रपि-

आवाह्य पूजयेदादौ विश्वान् देवांस्ततो [illegible] ।
पितृत्रयं तथा मातृत्रयं मातामहत्रयम् ॥
मातामहीत्रयं चापि पाद्यार्घ्याचमनादिभिः ।
धूपैर्दीपैश्च वासोभिः पूजयित्वा वरानने ।
पात्राणां पातनप्रश्नं कुर्य्याद्दैवक्रमात् प्रिये ! ॥२८॥
मण्डलं रचयेदेकं मायया चतुरस्रकम् ।
द्वे द्वे च मण्डले कुर्य्यात् तद्वत्पक्षद्वयोरपि ॥ २९ ॥

तामह्योऽमुक्यमुक्यमुक्यो देव्य इहागच्छतेह तिष्ठतेह सन्निधत्त मम पूजां गृह्णीतेति वाक्येन मातॄर्मातामहादीरपि अमुकगोत्रा नान्दीमुखा माता-महप्रमातामहवृद्धप्रमातामहा अमुकामुकामुकदेवशर्म्माण इहागच्छतेह तिष्ठतेह सन्निधत्त मम पूजां गृह्णीतेति वाक्येन, मातामहान् माता-महादीनपि अमुकगोत्रा नान्दीमुख्यो मातामहीप्रमातामहीवृद्धप्रमा-तामह्योऽमुक्यमुक्यमुक्यो देव्य इहागच्छतेह तिष्ठतेह सन्निधत्त मम पूजां गृह्णीतेति वाक्येन मातामहीप्रमातामह्यादींश्चापि कुशासने आवाहयेत् ॥ २६ ॥

आवाह्येत्यादि । एवं विश्वदेवादीनावाह्य विश्वे देवा एतानि पाद्यार्घ्याचमनादीनि वो नम इति वाक्येन पाद्यार्घ्याचमनादिभिर्धूपै-र्दीपैर्वासोभिश्चाप्यादौ विश्वान् देवान् पूजयेत् । ततः ओं अद्यामुक-गोत्रा नान्दीमुखाः पितृपितामहप्रपितामहा अमुकामुकामुकदेव-शर्म्माण एतानि गन्धपुष्पधूपदीपादीनि वः स्वधेति वाक्येन पितृत्रयं त-थैवामुकगोत्रा नान्दीमुख्यो मातृपितामहीप्रपितामह्योऽमुक्यमुक्यमुक्यो देव्य एतानि पाद्यादीनि वः स्वधेति वाक्येन मातृत्रयं तथैव प्रकल्पितेन वाक्येन मातामहत्रयं तथैव कल्पितवाक्येन मातामहीत्रयं चापि क्रमतः पाद्यादिभिरर्च्चयेत् पूजयेत् । हे वरानने ! प्रिये ! एवं विश्वदे-वादीन् पूजयित्वा ततो दैवक्रमात् देवपक्षादिक्रमतः पात्राणि पात-यिष्ये इति पात्राणां पातनप्रश्नं ब्राह्मणं प्रति कुर्य्यात् ॥ २७ । २८ ॥

उच्छिष्टपात्रपुरतः पूर्वोक्तविधिना बुधः ।
द्वे द्वे च मण्डले देवि ! रचयेत् पितृतः क्रमात् ॥ ४९ ॥
पूर्वमन्त्रेण संप्रोक्ष्य कुशांस्तेष्वास्तरेत् कृती ।
अभ्युक्ष्य वायुना दर्भान् पितृदर्भक्रमात् शिवे ! ।
ऊर्द्ध्वे मूले च मध्ये च त्रींस्त्रीन् पिण्डान्निवेदयेत् ॥ ५० ॥
आमन्त्रणेन प्रत्येकं नामोच्चार्य महेश्वरि ! ।
स्वधया वितरेत् पिण्डं यवमाध्वीकसंयुतम् ॥ ५१ ॥

इत्यादि । हे सुरवन्दिते ! ये मे कुले इत्यादिभ्यां ते यान्तु इत्यभिमतयाभिन्नाभ्यां द्वाभ्यां मन्त्राभ्यामपिण्डेभ्यः पिण्डविहीनेभ्यो नैर्ऋतकोणे कल्पिते चतुष्कोणे मण्डले आच्छादितेषु दर्भेषु पूर्व्वरचित-श्राद्धपिण्डातिरिक्तं पश्चाद्रचितं तयोर्द्वयं पिण्डं दत्त्वा हस्तौ प्रक्षाल्य तत आचान्तः कृताचमनः सन् सावित्रीं गायत्रीं दशधा प्रजपन् देवताभ्य इति मन्त्रं त्रिधा जप्त्वा मण्डलानि प्रकल्पयेत् ॥ ४८ ॥

ननु केन विधिना कुत्र स्थाने कियन्ति वा मण्डलानि प्रकल्पयितव्यानीत्याकाङ्क्षायामाह उच्छिष्टेत्यादि । हे देवि ! बुधः प्राज्ञः श्राद्धकर्त्ता पूर्व्वोक्तेन विधिना पितृतः क्रमादुच्छिष्टपात्राणां पुरतो द्वे द्वे चतुष्कोणे मण्डले रचयेत् ॥ ४९ ॥

पूर्व्वमन्त्रेणेत्यादि । हे शिवे ! ततो वमिति बीजरूपेण पूर्व्वमन्त्रेण मण्डलानि सम्प्रोक्ष्याभिषिच्य कृती विचक्षणः श्राद्धकर्त्ता तेषु मण्डलेषु कुशानास्तरेत् । ततो वायुना यमिति बीजेन दर्भानभ्युक्ष्याभिषिच्य पितृदर्भक्रमात् दर्भाणां मूले मध्ये चोर्द्ध्वे च पित्रादिभ्यो मात्रादिभ्यो मातामहादिभ्यो मातामह्यादिभ्यश्च क्रमेणैव त्रींस्त्रीन् पिण्डान्निवेदयेत् दद्यात् ॥ ५० ॥

ननु केन केन वाक्येन पित्रादिभ्यः पिण्डा निवेदयितव्या इत्यपेक्षायामाह आमन्त्रणेनेत्यादि । हे महेश्वरि ! आमन्त्रणेन सम्बोधनविभक्त्या निर्दिष्टं पित्रादीनां प्रत्येकं नामोच्चार्य स्वधया यव-

पिण्डान्ते पिण्डशेषञ्च विकीर्य्य लेपभागिनः ।
प्रीणयेत् करलेपेन नैकोद्दिष्टेष्वयं विधिः ॥ ५२ ॥

माध्वीकसंयुतं मधुयवाभ्यां संयुक्तं पिण्डं निर्वपेत् । अमुकगोत्र
नान्दीमुख पितरमुकदेवशर्म्मन्नेष मधुयवयुतः पिण्डस्ते स्वधेति वाक्येन
दर्भमूले पितामुकगोत्र नान्दीमुख पितामहामुकदेवशर्म्मन्नेष मधुयव-
युतः पिण्डस्ते स्वधेति वाक्येन दर्भमध्ये प्रपितामहामुकगोत्र नान्दी-
मुख प्रपितामहामुकदेवशर्म्मन्नेष मधुयवयुतः पिण्डस्ते स्वधेति वाक्येन
दर्भाग्रे भागे प्रपितामहायाऽमुकगोत्रे नान्दीमुखि मातरमुकि देवि
मधुयवयुत एष पिण्डस्ते स्वधेति दर्भमूले मातरमुकगोत्रे नान्दी-
मुखि पितामह्यमुकि देवि मधुयवयुत एष पिण्डस्ते स्वधेति दर्भमध्ये
पितामह्यै अमुकगोत्रे नान्दीमुखि प्रपितामह्यमुकि देवि मधुयवयु-
त एष पिण्डस्ते स्वधेत्यनेन दर्भाग्रे प्रपितामह्यै अमुकगोत्र नान्दीमु-
ख मातामहामुकदेवशर्म्मन्नेष मधुयवयुतः पिण्डस्ते स्वधेत्यनेन दर्भमू-
ले मातामहायामुकगोत्र नान्दीमुख प्रमातामहामुकदेवशर्म्मन्नेष मधुयव-
युतः पिण्डस्ते स्वधेत्यनेन दर्भमध्ये प्रमातामहायामुकगोत्र नान्दीमु-
ख वृद्धप्रमातामहामुकदेवशर्म्मन्नेष मधुयवयुतः पिण्डस्ते स्वधेत्यने-
न दर्भाग्रे वृद्धप्रमातामहायामुकगोत्रे नान्दीमुखि मातामह्यमुकि दे-
वि मधुयवयुत एष पिण्डस्ते स्वधेत्यनेन दर्भमूले मातामह्यै अमुकगो-
त्रे नान्दीमुखि प्रमातामह्यमुकि देवि मधुयवयुत एष पिण्डस्ते स्वधेत्यने-
न दर्भमध्ये प्रमातामह्यै अमुकगोत्रे नान्दीमुखि वृद्धप्रमातामह्यमुकि
देवि मधुयवयुत एष पिण्डस्ते स्वधेति वाक्येन दर्भाग्रे वृद्धप्रमातामह्यै
च पिण्डं दद्यादित्यर्थः ॥ ५१ ॥

पिण्डान्ते इत्यादि । पिण्डान्ते पिण्डप्रदानान्ते पिण्डस-
न्निधौ पिण्डशेषं विकीर्य्य ये लेपभुजः पितरः प्रीयन्ता-
मिति वाक्येन करलेपेन हस्तलग्नेनान्नेन लेपभागिनस्तृतीयादि-
पितॄन् प्रीणयेत् । एकोद्दिष्टेष्वयं विधिर्न प्रवर्त्तते इति
नार्थः ॥ ५२ ॥

देवतापितृत्रयार्थं सावित्रीं दशधा जपेत्।
देवताभ्यस्त्रिधा जप्त्वा पिण्डान् सम्पूजयेत्ततः ॥ ५३ ॥
प्रज्वाल्य धूपं दीपं च निमील्य नयनद्वयम्।
दिव्यदेहधरान् पितॄन् स्मरतः कव्यमध्वरे।
विभाव्य प्रणमेद्धीमानिमं मन्त्रमुदीरयेत् ॥ ५४ ॥
पिता मे परमो धर्मः पिता मे परमं तपः।
स्वर्गः पिता मे तत्तुष्टौ तुष्टमस्त्यखिलं जगत् ॥ ५५ ॥
ततो निर्माल्यमादाय प्रार्थयेदाशिषः पितॄन् ॥ ५६ ॥
आशिषो मे प्रदीयन्तां पितरः करुणामयाः।
वेदाः सन्ततयो नित्यं वर्धन्तां बान्धवा मम ॥ ५७ ॥
दातारो मे विवर्धन्तां बह्वन्नानि सन्तु मे।
याचितारः सदा सन्तु मा च याचामि कञ्चन ॥ ५८ ॥
दैवादितो द्विजान् पिण्डान् विसृजेत्तदनन्तरम्।

देवतेत्यादि। ततो देवतापितृत्रयार्थं सावित्रीं गायत्रीं दशधा जपेत् ततो देवताभ्य इति मन्त्रं त्रिधा जप्त्वा ततो गन्धपुष्पाभ्यां पिण्डान् सम्पूजयेत् ॥ ५३ ॥

प्रज्वाल्येत्यादि। ततो धूपं दीपं च प्रज्वाल्य नयनद्वयं निमील्य दिव्यदेहधरानध्वरे यज्ञे कव्यं पितृमन्त्रं स्मरतः आदृतः पितॄन् विभाव्य विचिन्त्य इमं वक्ष्यमाणं मन्त्रमुदीरयन् कीर्तयन् धीमान् जनस्तान् प्रणमेत् ॥ ५४ ॥

तमेव मन्त्रमाह पिता मे इत्याद्यम् ॥ ५५ ॥

तत इत्यादि। ततः परं निर्माल्यं पुष्पाद्यादाय गृहीत्वा आशिषो मे प्रदीयन्तामित्याद्यं मा च याचामि कञ्चनेत्यन्तं मन्त्रमुदीरयन् कर्मसाधकः पितॄनाशिषः कामान् प्रार्थयेत् याचेत् ॥ ५६–५८ ॥

तथैव दक्षिणां कुर्य्यात् पक्षेषु त्रिषु तत्त्ववित् ॥ ५९ ॥
गायत्रीं दशधा जप्त्वा देवताख्योऽपि पञ्चधा ।
दृष्ट्वा वह्निं रविं विप्रमिदं पृच्छेत् कृताञ्जलिः ॥ ६० ॥
इदं श्राद्धं समुच्चार्य्य साङ्गं जातमुदीरयेत् ।
द्विजो वदेत् सम्यगेव साङ्गं जातं विधानतः ॥ ६१ ॥
अङ्गवैगुण्यशान्त्यर्थं प्रणवं दशधा जपन् ।
अच्छिद्राभिविधानेन कुर्य्यात् सर्वं समापनम् ।
पानीयान्नानि पिण्डांश्च ब्राह्मणाय निवेदयेत् ॥ ६२ ॥
विप्राभावे गवाजेभ्यः सलिले वा विनिःक्षिपेत् ।
वृद्धिश्राद्धमिदं प्रोक्तं नित्यसंस्कारकर्म्मणि ॥ ६३ ॥

दैवादित इत्यादि । तदनन्तरं दैवादितो देवपक्षादिक्रमतो अग्ने नमस्वेति पितृ गयां गच्छेति च वाक्यमुच्चरन् तत्त्ववित् साधको दर्भमयान् द्विजान् पिण्डांश्च विसृजेत् तथैव दैवादिक्रमेणैव त्रिष्वपि पक्षेषु ओं तत्सद् अद्येत्यादि अमुकगोत्रस्यामुकविकश्राद्धप्रतिष्ठार्थं हिरण्यादिकमवकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति वाक्येन यथाशक्ति हिरण्यादिकं दक्षिणां कुर्य्यात् ॥ ५९ ॥

गायत्रीमित्यादि । ततो गायत्रीं दशधा जप्त्वा देवताख्य इति मन्त्रमपि पञ्चधा जप्त्वा वह्निं रविं च दृष्ट्वा कृताञ्जलिः सन् विप्रमिदं पृच्छेत् ॥ ६० ॥

विप्रं प्रति किं पृच्छेदित्यपेक्षायामाह इदमित्यादि । इदं श्राद्धं समुच्चार्य्य साङ्गं जातमित्युदीरयेत् । ओं अमुकश्राद्धं साङ्गं जातमित्येव विप्रं पृच्छेत् । ततो विधानतः सम्यगेव साङ्गं जातमिति द्विजो वदेत् ॥ ६१ ॥

अच्छिद्राभिविधानेन कृतमेतच्छ्राद्धकर्म्माच्छिद्रमस्त्विति वचनेन ॥६२।६३॥

श्राद्धे पर्व्वणि कर्त्तव्ये पार्व्वणत्वेन कीर्त्तयेत् ॥६४॥
देवतादिप्रतिष्ठासु तीर्थयात्राप्रवेशयोः ।
पार्व्वणेन विधानेन श्राद्धमेतदुदीरयेत् ॥ ६५ ॥
नैतेषु श्राद्धकल्पेषु पितृनान्दीमुखान् वदेत् ।
नमोऽस्तु पुष्ट्यायित्यत्र स्वधायै पदमुच्चरेत् ॥ ६६ ॥
पित्रादित्रयमध्ये तु यो जीवति वरानने ! ।
तस्योर्द्धतनमुद्दिश्य श्राद्धं कुर्य्याद्विचक्षणः ॥ ६७ ॥
जनकादिषु जीवत्सु त्रिषु श्राद्धं विवर्ज्जयेत् ।
तेषु प्रीतेषु देवेशि ! श्राद्धयज्ञफलं लभेत् ॥ ६८ ॥
जीवत्पितरि कल्याणि ! नान्यश्राद्धाधिकारिता ।
मातुः श्राद्धं विना पत्न्यास्तथा नान्दीमुखं विना ॥६९॥

एवमाभ्युदयिकश्राद्धविधिमुक्त्वेदानीं सविशेषेण तेनैव विधिना पार्व्वणादिकमपि श्राद्धं विधातव्यमित्याह श्राद्धे इत्यादिभिः । पर्व्वणामावास्यादौ कर्त्तव्ये श्राद्धे कल्पनीयेष्वनुष्ठानवाक्येषु पार्व्वणत्वेन श्राद्धं कीर्त्तयेदुच्चारयेत् ॥ ६४ ॥

देवतादीत्यादि । देवतादिप्रतिष्ठासु तीर्थयात्राप्रवेशयोश्च कर्त्तव्ये श्राद्धे कल्पनीयेष्वनुष्ठानवाक्येषु पार्व्वणेन विधानेनैतच्छ्राद्धमित्युदीरयेत् ॥ ६५ ॥

नैतेष्वित्यादि । एतेषु श्राद्धकल्पेषु पितृनान्दीमुखान् वदेत् किं च देवताभ्यः पितृभ्यश्चेति मन्त्रेण नमोऽस्तु पुष्ट्यै इत्यत्र स्वधायै इति पदमुच्चरेत् । अन्यत् सर्व्वं पूर्व्ववदेव विधेयम् ॥ ६६ ॥

[illegible]तरम् [illegible]भवम् ॥ ६७ । ६८ ॥

जीवदित्यादि । हे कल्याणि ! पितरि जीवति सति पुत्रस्य मातुः पत्न्याश्च श्राद्धं विना तथा नान्दीमुखमाभ्युदयिकमपि श्राद्धं विना अन्यश्राद्धाधिकारिता नास्तीत्यन्वयः ॥ ६९ ॥

एकोद्दिष्टे तु कौलेशि ! विश्वदेवान् पूजयेत् ।
एकमेव समुद्दिश्यानुज्ञावाक्यं प्रकाशयेत् ॥ ७० ॥
दक्षिणाभिमुखो दद्यादन्नं पिण्डं च मानवः ।
यवस्थाने तिला देयाः सर्व्वं मन्यच्च पूर्व्ववत् ॥ ७१ ॥
प्रेतश्राद्धे विशेषोऽयं गङ्गाद्यर्चां विवर्ज्जयेत् ।
मृतं समुल्लिखेत् प्रेतं वाक्ये दानेऽन्नपिण्डयोः ॥ ७२ ॥
एकमुद्दिश्य यत् श्राद्धमेकोद्दिष्टं तदुच्यते ।
प्रेतश्राद्धे च पिण्डे च मत्स्यं मांसं नियोजयेत् ॥ ७३ ॥
अशौचान्तात् द्वितीयेऽह्नि श्राद्धं यत् कुरुते नरः ।
प्रेतश्राद्धं विजानीहि तदेव कुलनायिके ! ॥ ७४ ॥
गर्भस्रावाज्जातमृतादन्यत्र मृतजातयोः ।
कुलाचारानुसारेण मानवोऽशौचमाचरेत् ॥ ७५ ॥
द्विजातीनां दशाहेन द्वादशाहेन पञ्चतः ।

एकोद्दिष्टे श्राद्धे ॥ ७० । ७१ ॥

प्रेतश्राद्धे इत्यादि । प्रेतश्राद्धे गङ्गाद्यर्चां विवर्ज्जयेत् न कुर्य्यात् । अनुज्ञावाक्येऽन्नपिण्डयोर्दाने च मृतं जनं प्रेतं समुल्लिखेदुच्चारयेत् । प्रेतश्राद्धे विशेषोऽयं ज्ञेयः ॥ ७२ ॥
ननु किन्नाम एकोद्दिष्टं श्राद्धं तत्राह एकमुद्दिश्येत्यादि । नियोजयेत् समर्पयेत् ॥ ७३ ॥

ननु प्रेतश्राद्धं किन्नाम तत्राह अशौचान्तादित्यादि । अशौचान्तात् अशौचस्यान्तो यत्रास्ति तदशौचान्तं तस्मात् ॥ ७४ ॥
अथ प्रसङ्गादशौचादिव्यवस्थामाह गर्भस्रावादित्यादिभिः । गर्भस्रावात् गर्भपातात् जातमृतात् जातः सन्नेव मृतो जातमृतस्तस्माच्चान्यत्रान्ययोर्मृतजातयोः सतोर्मानवः स्वस्वकुलाचारानुसारेणाशौचस्य क्रिया-माचरेत् कुर्य्यात् ॥ ७५ ॥

शूद्रसामान्ययोर्देवि ! मासेनाशौचकल्पना ॥ ७६ ॥
असपिण्डमृते ज्ञातौ त्रिरात्राशौचमिष्यते ।
शृण्वतोऽपि गताशौचे सपिण्डस्य मृतिं शिवे ! ॥७७॥
अशुचिर्नाधिकारी स्याद्दैवे पित्र्ये च कर्म्मणि ।
ऋते कुलार्च्चनादाद्ये ! तथा प्रारब्धकर्म्मणः ॥ ७८ ॥
पञ्चवर्षाधिकान् मर्त्यान् दाहयेत् पितृकानने ।
भर्त्रा सह कुलेशानि ! न दहेत् कुलकामिनीम् ॥७९॥
तव स्वरूपा रमणी जगत्याच्छन्नविग्रहा ।
मोहाद्भर्त्तुश्चितारोहात् भवेन्नरकगामिनी ॥ ८० ॥
ब्रह्ममन्त्रोपासकांस्तु तेषामाज्ञानुसारतः ।
प्रवाहयेद्वा निखनेद्दाहयेद्वापि कालिके ! ॥ ८१ ॥
पुण्यक्षेत्रे च तीर्थे वा देव्याः पार्श्वे विशेषतः ।
कुलीनानां समीपे वा मरणं शस्तमम्बिके ! ॥ ८२ ॥
विभावयन् सत्यमेकं विस्मरन् जगतां त्रयम् ।

द्विजातीनामित्यादि । उपनीतसपिण्डमरणे शिशुजनने च द्विजातीनां ब्राह्मणक्षत्रियवैश्यानां क्रमतो दशाहेन द्वादशाहेन पक्षतः पक्षेणाशौचकल्पना विज्ञेया शूद्रसामान्ययोस्तु मासेनाशौचकल्पना ज्ञेया शूद्रसामान्यवर्णयोरुपनयनस्थाने विवाहो ज्ञेयः ॥ ७६ ॥

असपिण्डेत्यादि । असपिण्डमृतज्ञातौ सपिण्डभिन्ने गोत्रजे मृते सति त्रिरात्रमशौचमिष्यते । गते शौचेऽशौचे गते सपिण्डस्य मृतिं मरणं शृण्वतोऽपि जनस्य त्रिरात्राशौचमिष्यते ॥ ७७ ॥

अशुचिरित्यादि । हे आद्ये ! कुलार्च्चनात्तथा प्रारब्धकर्म्मणश्च ऋते कुलार्च्चनं प्रारब्धकर्म्म चाभ्यामन्यस्मिन् दैवे पित्र्ये च कर्म्मण्यशुचिर्जनोऽधिकारी न स्यात् ॥ ७८ ॥

पितृकानने श्मशाने ॥ ७९—८२ ॥

परित्यजति यः प्राणान् स स्वरूपे प्रतिष्ठति ॥ ८३ ॥
प्रेतभूमौ शवं नीत्वा स्नापयित्वा घृतोक्षितम् ।
उत्तराभिमुखं कृत्वा शाययेत् चितोपरि ॥ ८४ ॥
सम्बोधनान्तं तद्गोत्रं प्रेताख्यानं समुच्चरन् ।
दत्वा पिण्डं प्रेतमुखे दहेद्वह्निमनुं स्मरन् ॥ ८५ ॥
पिण्डन्तु रचयेत्तत्र सिद्धान्नैः सक्तुनैव वा ।
यवगोधूमचूर्णैर्वा धात्रीफलसमं प्रिये ! ॥ ८६ ॥
स्थितेषु प्रेतपुत्रेषु ज्येष्ठे श्राद्धाधिकारिता ।
तदभावेऽन्यपुत्रादौ ज्येष्ठानुक्रमतो भवेत् ॥ ८७ ॥
अशौचान्तात्त्दिवसे कृतस्नानो नरः शुचिः ।
मृतप्रेतत्वमुक्त्यर्थमुत्सृजेत्तिलकाञ्चनम् ॥ ८८ ॥
गां भूमिं वसनं यानं पात्रं धातुविनिर्मितम् ।

विभावयन् विचिन्तयन् स्वरूपे परमात्मनि ॥ ८३ ॥

प्रेतभूमावित्यादि । प्रेतभूमौ शवं नीत्वा घृतोक्षितं घृताभ्यक्तं तं स्नापयित्वोत्तराभिमुखं कृत्वा चितोपरि तं शाययेत् ॥ ८४ ॥

सम्बोधनान्तमित्यादि । सम्बोधनान्तं सम्बोधनविभक्त्यन्तं प्रेताख्यानं प्रेतनाम तद्गोत्रञ्च समुच्चरन् ओं अद्यामुकगोत्र प्रेत पितरमुकदेवशर्म्मन्नेष पिण्डस्ते स्वधेति वाक्यमुदीरयन् प्रेतमुखे पिण्डं दत्वा वह्निमनुं रमिति मन्त्रं स्मरन् सन् शवं दहेत् ॥ ८५—८६ ॥

ज्येष्ठे पुत्रे ॥ ८७ ॥

अशौचान्तेत्यादि । अशौचान्तात्त्दिवसे अशौचान्तात् परस्मिन् वासरे कृतस्नानः शुचिश्च सन्नरः ओं अद्येत्यादि अमुकगोत्रस्य प्रेतस्य पितुरमुकदेवशर्म्मणः प्रेतत्वविमुक्त्यर्थममुकगोत्राय अमुकदेवशर्म्मणे ब्राह्मणाय दातुं काञ्चनसहितांस्तिलानहमुत्सृजे इति वाक्येन मृतप्रेतत्वमुक्त्यर्थं तिलकाञ्चनमुत्सृजेत् ॥ ८८ ॥

भोज्यं बहुविधं दद्यात् प्रेतस्वर्गाय सत्सुतः ॥ ८९ ॥
गन्धं माल्यं फलं तोयं शय्यां प्रियकरीं तथा ।
यद् यत् प्रेतप्रियं द्रव्यं तत् स्वर्गाय समुत्सृजेत् ॥९०॥
ततस्तु वत्समश्वैकं त्रिशूलाङ्केन लाञ्छितम् ।
स्वर्णेनालङ्कृतं कृत्वा त्यजेत् तत्स्वरवाप्तये ॥ ९१ ॥
प्रेतश्राद्धोक्तविधिना श्राद्धं कृत्वातिभक्तितः ।
ब्रह्मज्ञान् ब्राह्मणान् कौलान् क्षुधितानपि भोजयेत्॥९२॥
दानेष्वशक्तो मनुजः कुर्वन् श्राद्धं स्वशक्तितः ।
बुभुक्षितान् भोजयित्वा प्रेतत्वं मोचयेत् पितुः ॥९३॥
आद्यैकोद्दिष्टमेतत्तु प्रेतत्वाम्मुक्तिकारणम् ।
वर्षे वर्षे मृततिथौ दद्यादन्नं गतासवे ॥ ९४ ॥
बहुभिर्विधिभिः किं वा कर्मभिर्बहुभिश्च किम् ।
सर्वसिद्धिमवाप्नोति मानवः कौलिकार्चनात् ॥ ९५ ॥
विना होमाज्जपात् श्राद्धात् संस्कारेषु च कर्मसु ।
सम्पूर्णकार्यसिद्धिः स्यादेकया कौलिकार्चया ॥ ९६ ॥

गामित्यादि । ओं अद्यामुकगोत्रस्य प्रेतस्य पितुरमुकदेवशर्मणः स्वर्गायममुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय गामिमामहं सम्प्रददे इति वाक्येन सत्सुतः प्रेतस्वर्गाय गां दद्यात् । एवमेव कल्पितेन तत्तद्वाक्येन भूम्यादिकमपि प्रेतस्वर्गाय दद्यात् ॥ ८९ । ९० ॥

तत्स्वरवाप्तये प्रेतस्वर्गावाप्तये ॥ ९१ ॥ ९२ ॥

बुभुक्षितान् क्षुधितान् ॥ ९३ ॥

आद्येत्यादि । एतदाद्यमेकोद्दिष्टं तु मृतस्य प्रेतत्वान्मुक्तेः कारणं भवति । अतःपरं वर्षे वर्षे मरणतिथौ करिष्यमाणे

शुक्लां चतुर्थीमारभ्य शुभकर्माणि कारयेत् ।
असितां पञ्चमीं यावत् विधिरेषः शिवोदितः ॥ ९७ ॥
अन्यथापि विरुद्धेऽह्नि गुर्व्वाज्ञाकौलिकाज्ञया ।
कर्म्माण्यपरिहार्य्याणि कर्त्तुमार्य्या अर्हन्ति ॥ ९८ ॥
गृहारम्भः प्रवेशश्च यात्रारत्नादिधारणम् ।
सम्पूज्याद्यां पञ्चतत्त्वैः कुर्य्यादेतानि कौलिकः ॥९९ ॥
संक्षेपयात्रामथवा कुर्य्यात् साधकसत्तमः ।
ध्यायन् देवीं जपन्मन्त्रं नत्वा गच्छेद् यथामति ॥१०० ॥
सर्व्वासु देवतार्च्चासु शारदीयोत्सवादिषु ।
तत्तत्कल्पोक्तविधिना ध्यानपूजां समाचरेत् ॥ १०१ ॥
आद्यापूजोक्तविधिना बलिहोमं प्रयोजयेत् ।
कौलार्च्चनं दक्षिणाञ्च कृत्वा कर्म्म समापयेत् ॥ १०२ ॥
गङ्गां विष्णुं शिवं सूर्य्यं ब्रह्माणं परिपूज्य च ।
उद्दिश्यमर्च्चयेद्देवं सामान्यो विधिरीरितः ॥ १०३ ॥
कौलिकः परमो धर्म्मः कौलिकः परदेवता ।
कौलिकः परमं तीर्थं तस्मात् कौलं सदार्च्चयेत् ॥१०४॥
सार्द्धत्रिकोटितीर्थानि ब्रह्माद्याः सर्व्वदेवताः ।
वसन्ति कौलिके देहे किन्न स्यात् कौलिकार्च्चनात्॥१०५॥
पूर्णाभिषिक्तः सत्कौलो यस्मिन् देशे विराजते ।
धन्यो मान्यः पुण्यतमः सदेशः प्रार्थ्यते सुरैः ॥ १०६ ॥
कृतपूर्णाभिषेकस्य साधकस्य शिवात्मनः ।

एकोद्दिष्टश्राद्धे मृतं प्रेतं नोच्चारयेदित्यर्थः गत्यर्थम् गताश्चे विगत-
स्याश ॥ ९४—९६ ॥

पुण्यपापविहीनस्य प्रभावं वेत्ति को भुवि ॥ १०७ ॥
केवलं नररूपेण तारयन्नखिलं जगत् ।
शिक्षयन् लोकयात्राञ्च कौलो विहरति क्षितौ ॥१०८॥

श्रीदेव्युवाच ।

पूर्णाभिषिक्तकौलस्य माहात्म्यं कथितं प्रभो ! ।
विधानमभिषेकस्य कृपया श्रावयस्व माम् ॥ १०९ ॥

श्रीसदाशिव उवाच ।

विधानमेतत् परमं गुप्तमासीद् युगत्रये ।
गुप्तभावेन कुर्व्वन्तो नरा मोक्षं ययुः पुरा ॥ ११० ॥
प्रबले कलिकाले तु प्रकाशे कुलवर्त्तिनः ।
नक्तं वा दिवसे कुर्य्यात् सप्रकाशाभिषेचनम् ॥ १११ ॥
नाभिषेकं विना कौलः केवलं मद्यसेवनात् ।
पूर्णाभिषेकात् कौलः स्यात् चक्राधीशः कुलार्च्चकः ॥११२॥
तत्राभिषेकपूर्व्वेऽह्नि सर्व्वविघ्नोपशान्तये ।
यथाशक्त्युपचारेण विघ्नेशं पूजयेद्गुरुः ॥ ११३ ॥
गुरुरेवाधिकारी स्यात् शुभपूर्णाभिषेचने ।
तदाभिषिक्तकौलेन संस्कारं साधयेत् प्रिये ! ॥ ११४ ॥

युक्तामित्यादि । वसिताम् लग्नाम् यावदित्यन्वयः ॥ ९७—१०८ ॥

पूर्णाभिषेकविधिं श्रोतुमिच्छन्ती श्रीदेव्युवाच । पूर्णाभिषिक्त-कौलस्येत्यादि ॥ १०९ ॥

एवं प्रार्थितः सन् श्रीसदाशिव उवाच । विधानमित्यादि ॥११०॥

नक्तं रात्रौ ॥ १११ ॥ ११२ ॥

अथ पूर्णाभिषेकस्य विधानमाह तत्रेत्यादिभिः । विघ्नेशम् गण-पतिम् ॥ ११३ ॥

खान्तार्णं विन्दुसंयुक्तं बीजमस्य प्रकीर्त्तितम् ॥ ११५ ॥
गणकोऽस्य ऋषिश्छन्दो नीवृत् विघ्नस्तु देवता ।
कर्त्तव्यकर्म्मणो विघ्नशान्त्यर्थे विनियोगिता ॥ ११६ ॥
षड्दीर्घयुक्तमूलेन षड़ङ्गानि समाचरेत् ।
प्राणायामं ततः कृत्वा ध्यायेद् गणपतिं शिवे ॥ ११७॥
सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानम्
शङ्खं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूर्णकुम्भम् ।

गुरुरित्यादि । चेत् यद्यनभिषिक्तत्वात् शुभपूर्णाभिषेचने गुरुरधिकारी न स्यात्तदाभिषिक्तकौलेन पूर्णाभिषेचनं संस्कारं नरः साधयेत् ॥११४॥

अथ गणपतिपूजाया विधानमेवाह खान्तार्णमित्यादिभिः । विन्दुसंयुक्तमनुस्वारसहितं खान्तार्णं खस्यान्तिमक्रकाररूपमक्षरमस्य विघ्नेशस्य बीजं प्रकीर्त्तितम् ॥ ११५ ॥

अथ ऋष्यिन्यासं विधातुं गणपतिबीजमन्त्रस्य ऋष्यादिकमाह गणक इत्यादिना । अस्य गणपतिबीजमन्त्रस्य गणकऋषिर्नीवृच्छन्दो विघ्नो देवता कर्त्तव्यस्य शुभपूर्णाभिषेककर्म्मणो विघ्नशान्त्यर्थे विनियोगः शिरसि गणकाय ऋषये नमः मुखे नीवृच्छन्दसे नमः हृदये विघ्नाय देवतायै नमः इत्यृषिन्यासं विदध्यात् ॥ ११६ ॥

षड़ित्यादि । ततः षड़्दीर्घयुक्तेन मूलेन गणपतिबीजेनाङ्गुष्ठादीनि हृदयादीनि च षड़ङ्गानि प्रतिन्यासं समाचरेत् गांमङ्गुष्ठाभ्यां नमः गीं तर्ज्जनीभ्यां स्वाहा गूं मध्यमाभ्यां वषट् गैंमनामिकाभ्यां हुम् गौं कनिष्ठाभ्यां वौषट् गं करतलकरपृष्ठाभ्यां फट् इत्यङ्गुष्ठादिषड़ङ्गन्यासम् गां हृदयाय नमः गीं शिरसे स्वाहा गूं शिखायै वषट् गैं कवचाय हुम् गौं नेत्रत्रयाय वौषट् गं अस्त्राय फट् इति हृदयादिषड़ङ्गन्यासं च विदध्यादित्यर्थः ततो गमिति मन्त्रेण प्राणायामं कृत्वा गणपतिं ध्यायेत् ॥ ११७ ॥

गणपतिध्यानमेवाहैकेन सिन्दूराभमित्यादि । हे भक्ता ! गणपतिं

बालेन्दुद्योतमौलिं करिपतिवदनं बीजपूराढ्यगण्डम् ।
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥११८
आत्मैवं मानसैरिष्ट्वा पीठशक्तीः प्रपूजयेत् ।
तीव्रा च ज्वालिनी नन्दा भोगदा कामरूपिणी ॥ ११९ ॥
उग्रा तेजोवती सत्या मध्ये विघ्नविनाशिनी ।
पूर्व्वादितोऽर्च्चयित्वैताः पूजयेत् कमलासनम् ॥ १२० ॥
पुनर्ध्यात्वा गणेशानं पञ्चतत्त्वोपचारकैः ।

गणेशानं यूयं भजतेत्यन्वयः कथम्भूतं गणपतिम् सिन्दूराभम् सिन्दूरेणाभा दीप्तिर्यस्य यस्मिन् वा तथाभूतम् । पुनः कीदृशम् त्रिनेत्रम् त्रिलोचनम् पुनः कीदृशम् पृथुतरजठरम् अतिविशालकुक्षिम् । पुनः कीदृशम् हस्तपद्मैः पाणिकमलैः शङ्ख पाशाङ्कुशेष्टानि पाशमङ्कुशं वरं च दधानं दधतम् । पुनः कीदृशम् उरुकरविलसद्वारुणीपूर्णकुम्भम् उरौ विशाले करे शुण्डायां विलसन् भासमानो वारुण्या मदिरया पूर्णः कुम्भो यस्य तथाभूतम् । पुनः कीदृशम् बालेन्दुद्योतमौलिम् बालेन्दुनोद्दीप्तो मौलिः किरीटं यस्य तथाभूतम् । पुनः कीदृशम् करिपतिवदनम् करिपतेर्गजराजस्येव वदनं मुखं यस्य तथाभूतम् । पुनः कीदृशम् बीजपूराढ्यगण्डम् बीजपूरेण मदप्रवाहेणाढ्यौ गण्डौ कपोलौ यस्य तथाभूतम् । पुनः कीदृशम् भोगीन्द्राबद्धभूषम् भोगीन्द्रेण सर्पराजेन बद्धा भूषा यस्य येन वा तथाभूतम् । पुनः कीदृशम् रक्तवस्त्राङ्गरागम् रक्तवस्त्राङ्गे रागो रक्तत्वं यस्य तथाभूतम् ॥ ११८ ॥

आत्मैवमित्यादि । एवं गणपतिं ध्यात्वा मानसैरुपचारैरिष्ट्वा पूजयित्वा च प्रणवादिनमोऽन्तेन नाममन्त्रेण गन्धपुष्पादिभिः पीठशक्तीः प्रपूजयेत् । याः पीठशक्तीः प्रपूजयेत्ता आह तीव्रा येत्यादिनैकेन । पूर्वादितः क्रमेणैतास्तीव्राद्या अर्च्चयित्वा प्रणवादिनमोऽन्तनाममन्त्रेण गन्धपुष्पादिभिः कमलासनं पूजयेत् ॥ ११९ । १२० ॥

अभ्यर्च्य तच्चतुर्दिक्षु गणेशं गणनायकम् ॥ १२१ ॥
गणनाथं गणक्रीड़ं यजेत् कौलिकसत्तमः ।
एकदन्तं रक्ततुण्डं लम्बोदरगजाननौ ॥ १२२ ॥
महोदरञ्च विकटं धूम्राभं विघ्ननाशनम् ॥ १२३ ॥
ततो ब्राह्मीमुखाः शक्तीर्दिक्पालांश्च प्रपूजयन् ।
तेषामस्त्राणि सम्पूज्य विघ्नराजं विसर्जयेत् ॥ १२४ ॥
एवं सम्पूज्य विघ्नेशमधिवासनमाचरेत् ।
भोजयेच्च पञ्चतत्त्वैर्ब्राह्मणान् कुलसाधकान् ॥ १२५ ॥
ततः परदिने स्नातः कृतनित्योदितक्रियः ।
आजन्मकृतपापानां क्षयार्थं तिलकाञ्चनम् ।
उत्सृजेत् कौलतृप्त्यर्थं भोज्यञ्चैकमपि प्रिये ! ॥ १२६ ॥
अर्घ्यं दत्त्वा दिनेशाय ब्रह्मविष्णुशिवग्रहान् ।
अर्च्चयित्वा मातृगणान् वसुधारां प्रकल्पयेत् ॥ १२७ ॥
कर्म्मणोऽभ्युदयार्थाय वृद्धिश्राद्धं समाचरेत् ।
ततो गत्वा गुरोः पार्श्वं प्रणम्य प्रार्थयेदिदम् ॥ १२८ ॥

पुनरित्यादि । कौलिकसत्तमः पुनर्गणेशानं ध्यात्वा पञ्चतत्त्वोपचारकैः पूर्वोक्तमन्त्रशोधितैर्नैद्यादिभिः पञ्चतत्त्वैरन्यैश्च पाद्यार्घ्याचमनीयादिभिरुपचारैरभ्यर्च्य च तच्चतुर्दिक्षु नमोऽन्तनाममन्त्रेण गन्धपुष्पादिभिर्गणेशादीन् क्रमतो यजेत् ॥ १२१—१२३ ॥

तत इत्यादि । ततः परं प्रणवादिनमोऽन्तनाममन्त्रेण गन्धपुष्पादिभिर्ब्राह्मीमुखा ब्राह्मीप्रभृतीरष्टशक्तीरिन्द्रादीन् दिक्पालांश्च प्रपूजयन् तेषां दिक्पालानामस्त्राणि च सम्पूज्य विघ्नराज ! क्षमस्वेति वाक्येन विघ्नराजं विसर्जयेत् ॥ १२४ ॥

एवमित्यादि । एवं विघ्नेशं सम्पूज्य वक्ष्यमाणेन विधिनाऽधिवासनमाचरेत् कुर्यात् ॥ १२५ ॥

त्राहि नाथ ! कुलाचार ! नलिनीकुलवल्लभ ! ।
त्वत्पादाम्भोजच्छायां देहि मूर्द्धि कृपानिधे ! ॥१२९ ॥
आज्ञां देहि महाभाग ! शुभपूर्णाभिषेचने ।
निर्विघ्नं कर्म्मणः सिद्धिमुपैमि त्वत्प्रसादतः ॥१३० ॥
शिवशक्त्याज्ञया वत्स ! कुरु पूर्णाभिषेचनम् ।
मनोरथमयी सिद्धिर्जायतां शिवशासनात् ॥ १३१ ॥
इत्थमाज्ञां गुरोः प्राप्य सर्वोपद्रवशान्तये ।
आयुर्लक्ष्मीबलारोग्यावाप्त्यै सङ्कल्पमाचरेत् ॥ १३२ ॥
ततस्तु कृतसङ्कल्पो वस्त्रालङ्कारभूषणैः ।
कारणैः शुद्धिसहितैरभ्यर्च्य वृणुयाद् गुरुम् ॥ १३३ ॥

तत इत्यादि । ततो दिनात् परदिने स्नातः कृतनित्योदितक्रियश्च सन् ओं अद्यामुकगोत्रः श्रीमदमुकदेवशर्म्मा आजन्मकृताशेषदुष्कृतक्षय-कामोऽमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय दातुं काञ्चनसहितांस्तिला-नहमुत्सृजे इति वाक्येनाजन्मकृतपापानां क्षयार्थं तिलकाञ्चनमुत्-सृजेत् तथैव कल्पितेन वाक्येन कौलद्वयमथवैकं भोज्यमप्युत्-सृजेत् ॥ १२६–१२८ ॥

अथ प्रार्थनेत्याह त्राहि नाथेत्यादिभ्यां द्वाभ्याम् ॥ १२९—१३१॥

इत्थमित्यादि । इत्थं गुरोराज्ञां प्राप्य सर्वोपद्रवशान्तये आयुर्लक्ष्मी-बलारोग्यप्राप्त्यै च ओं अद्यामुकगोत्रः श्रीमदमुकदेवशर्म्मा निःशेषोप-द्रवध्वंसकाम आयुर्लक्ष्मीबलारोग्यकामश्च शुभपूर्णाभिषेचनमहं करिष्ये इति सङ्कल्पमाचरेत् कुर्य्यात् ॥ १३२ ॥

तत इत्यादि । ततस्तु कृतसङ्कल्पः शिष्यो वस्त्रालङ्कारभूषणैः शुद्धिर्मत्स्यमांसादिसहितैः कारणैर्मद्यैश्च गुरुमभ्यर्च्य ओम् अद्यामुकगोत्रः श्रीमदमुकदेवशर्म्मामुकगोत्रं श्रीमन्तममुकानन्दनाथं गुरुत्वेन भवन्तं वस्त्रादिभिरहं वृणे इति वाक्येन गुरुं वस्त्रा-दिभिर्वृणुयात् ॥ १३३ ॥

गुरुर्मनोहरे गेहे गैरिकादिविचित्रिते ।
चित्रध्वजपताकाभिः फलपल्लवशोभिते ॥ १२४ ॥
किङ्किणीजालमालाभिश्चन्द्रातपविभूषिते ।
घृतप्रदीपावलिभिस्तमोलेशविवर्ज्जिते ॥ १२५ ॥
कर्पूरसहितैर्धूपैर्यक्षधूपैः सुवासिते ।
व्यजनैश्चामरैर्बर्हैः पञ्चाद्यैरलङ्कृते ॥ १२६ ॥
सार्द्धहस्तमितां वेदीमुच्चैश्चतुरङ्गुलाम् ।
रचयेन्मृण्मयीं तत्र चूर्णैरचतसम्भवैः ॥ १२७ ॥
पीतरक्तासितश्वेतश्यामलैः सुमनोहरम् ।
मण्डलं सर्वतोभद्रं विदध्यात् श्रीगुरुस्ततः । १२८ ॥
स्वस्वकल्पोक्तविधिना मानसार्चावधि क्रियाम् ॥
कृत्वा पूर्वोक्तमन्त्रेण पञ्चतत्त्वानि शोधयेत् ॥ १२९ ॥

गुरुरित्यादि । ततो गुरुर्गेहे स्थले सार्द्धहस्तमितामुच्चैश्चतुरङ्गुलां चतुरङ्गुलिपरिमितां मृण्मयीं वेदीं रचयेत् कल्पयेत् इति चतुर्थश्लोकगतैः पदैरन्वयः । मनोहरैः इत्यादीनि सप्तम्यन्तानि पदानि गेहस्य विशेषणानि भवन्तीति बोध्यम् । चित्रध्वजपताकाभिश्च शोभिते ॥ १२४ ॥

किङ्किनीजालमालाभिः क्षुद्रघण्टिकासमूहमालाभिश्च भूषिते ॥ १२५ ॥

यक्षधूपैः यावकसारैः बर्हैः मयूरपक्षैः ॥ १२६ ॥

तत्र चूर्णैरित्यादि । ततः परं श्रीगुरुस्तत्र रचितायां वेद्यां पीतरक्तासितश्वेतश्यामलैरचतसम्भवैश्चूर्णैः सुमनोहरं सर्वतोभद्रं मण्डलं विदध्यात् कुर्यात् । असितैर्नीलवर्णैः श्यामलैर्हरिद्वर्णैः ॥ १२७ ॥ १२८ ॥

स्वस्वेत्यादि ततः स्वस्वकल्पोक्तविधिना मानसार्चावधिक्रियां मानसपूजापर्य्यन्तां क्रियां कृत्वा पूर्वोक्तमन्त्रेण मद्यादीनि पञ्चतत्त्वानि शोधयेत् ॥ १२९ ॥

संशोध्य पञ्चतत्त्वानि पुरः कल्पितमण्डले।
स्वार्णं वा राजतं ताम्रं मृण्मयं घटमेव वा॥ १४०॥
क्षालितस्त्रास्त्रबीजेन दध्यक्षतविचर्चितम्।
स्थापयेत्प्रणवबीजेन सिन्दूरेणाङ्कयेत् श्रिया॥ १४१॥
अकाराद्यैर्क्षकारान्तैर्वर्णैर्बिन्दुविभूषितैः।
मूलमन्त्रत्रिजापेन पूरयेत् कारणेन तम्॥ १४२॥
अथवा तीर्थतोयेन शुद्धेन पाथसापि वा॥
नवरत्नं सुवर्णं वा घटमध्ये विनिःक्षिपेत्॥ १४३॥
पनसोदुम्बराश्वत्थवकुलाम्रसमुद्भवम्।
पल्लवं तन्मुखे दद्यात् वाग्भवेन कृपानिधिः॥ १४४॥
शरावं मार्त्तिकं वापि फलाक्षतसमन्वितम्।
रमां मायां समुच्चार्य्य स्थापयेत् पल्लवोपरि॥ १४५॥

संशोध्येत्यादि। मन्त्रेण पञ्चतत्त्वानि संशोध्य पुरःकल्पिते सर्वतोभद्रमण्डलेऽस्त्रबीजेन फडा मन्त्रेण क्षालितं धौतं दध्यक्षतविचर्च्चितं दध्यक्षतैर्लिप्तं स्वार्णं सुवर्णभवं राजतं रजतोद्भवं ताम्रोद्भवं मृण्मयमेव वा घटं प्रणवबीजेन प्रणवेन स्थापयेत् श्रिया श्रीं बीजेन सिन्दूरेणाङ्कयेत्॥ १४०। १४१॥

अकाराद्यैरित्यादि। ततो बिन्दुविभूषितैरनुस्वारालङ्कृतैः अकाराद्यैः क्षकारान्तैर्वर्णैः सह मूलमन्त्रस्य त्रिजापेन कारणेन मद्येनाथवा तीर्थतोयेन शुद्धेन पवित्रेणाम्भेन पाथसा जलेनापि वा तं घटं पूरयेत्। ततो घटमध्ये नवरत्नं सुवर्णं वा विनिःक्षिपेत्॥ १४२। १४३॥

तन्मुखे घटमुखे वाग्भवेन ऐमिति मन्त्रेण॥ १४४॥

शरावमित्यादि। ततः फलाक्षतसमन्वितं सुवर्णादिभवं मार्त्तिकं मृत्तिकोद्भवं वापि शरावं रमां श्रीमिति मायां ह्रीमिति च बीजं समुच्चार्य्य पल्लवोपरि स्थापयेत्॥ १४५॥

बध्नीयाद्वस्त्रयुग्मेन ग्रीवां तस्य वरानने ।

शक्तौ रक्तं शिवे विष्णौ श्वेतवासः प्रकीर्त्तितम् ॥ १४६ ॥

स्त्रां स्त्रीं मायां रमां स्मृत्वा स्थिरीकृत्य घटान्तरे ।

निक्षिप्य पञ्चतत्त्वानि नवपात्राणि विन्यसेत् ॥ १४७ ॥

राजतं शक्तिपात्रं स्यात् गुरुपात्रं हिरण्मयम् ।

श्रीपात्रन्तु महाशङ्खं ताम्राण्यन्यानि कल्पयेत् ॥ १४८ ॥

पाषाणदारुलौहानां पात्राणि परिवर्ज्जयेत् ।

शक्त्या प्रकल्पयेत् पात्रं महादेव्याः प्रपूजने ॥ १४९ ॥

पात्राणां स्थापनं कृत्वा गुरून् देवीं प्रतर्पयेत् ।

ततस्त्वमृतसम्पूर्णघटमभ्यर्च्चयेत् सुधीः ॥ १५० ॥

दर्शयित्वा धूपदीपौ सर्व्वभूतबलिं हरेत् ।

पीठदेवान् पूजयित्वा षड़ङ्गन्यासमाचरेत् ॥ १५१ ॥

प्राणायामं ततः कृत्वा ध्यात्वावाह्य महेश्वरीम् ।

स्वशक्त्या पूजयेदिष्टां वित्तशाठ्यं विवर्ज्जयेत् ॥ १५२ ॥

ननु किं वर्णेन वस्त्रयुग्मेन घटस्य ग्रीवां बध्नीयादित्यपेक्षायामाह शक्तौ रक्तमित्यादि ॥ १४६ ॥

स्त्रां स्त्रीमित्यादि । ततः स्त्रां स्त्रीं मायां रमां स्मृत्वा स्त्रां स्त्रीं ह्रीं श्रीं स्थिरीभवेति मन्त्रं पठित्वा स्थिरीकृतघटान्तरे पञ्चतत्त्वानि निःक्षिप्य पूर्व्वोक्तविधिना नवपात्राणि विन्यसेत् स्थापयेत् ॥ १४७ ॥

ननु किं द्रव्योद्भवानि नवपात्राणि विन्यसेदित्यत आह राजतमित्यादि महाशङ्खं नरकपालम् ॥ १४८ । १४९ ॥

गुरून् देवीमिति आनन्दभैरवादीनामप्युपलक्षणम् । प्रतर्पयेत् पूर्व्वोक्तेन तत्तन्मन्त्रेण ॥ १५० ॥

दर्शयित्वेत्यादि । ततो घटं प्रति धूपदीपौ दर्शयित्वा पूर्व्वोक्तमन्त्रेण सर्व्वभूतबलिं हरेत् दद्यात् ॥ १५१ । १५२ ॥

होमान्तकृत्यं निष्पाद्य कुमारीशक्तिसाधकान् ।
पुष्पचन्दनवासोभिरर्चयेत् सद्गुरुः शिवे ! ॥ १५३ ॥
भवद्भ्यस्तु कौला मे शिष्यं प्रति कृतव्रताः ।
पूर्णाभिषेकसंस्कारे भवद्भिरनुमन्यताम् ॥ १५४ ॥
एवं पृच्छति चक्रेशे तं ब्रूयुर्गुरुमादरात् ।
महामायाप्रसादेन प्रभावात् परमात्मनः ।
शिष्यो भवतु पूर्णस्ते परतत्त्वपरायणः ॥ १५५ ॥
शिष्येण च गुरुर्देवीमर्चयित्वार्चिते घटे ।
कामं मायां रमां जप्त्वा चालयेद्विमलं घटम् ॥ १५६ ॥
उत्तिष्ठ ब्रह्मकलश ! देवतात्मक ! सिद्धिद ! ।
त्वत्तोयपल्लवैः सिक्तः शिष्यो ब्रह्मरतोऽस्तु ते ॥ १५७ ॥
इत्थं सञ्चाल्य कलशमुत्तराभिमुखं गुरुः ।
मन्त्रैरेतैर्वक्ष्यमाणैरभिषिञ्चेत् कृपान्वितः ॥ १५८ ॥
शुभपूर्णाभिषेकस्य सदाशिवऋषिः स्मृतः ।
छन्दोऽनुष्टुप् देवताद्या प्रणवं बीजमीरितम् ।
शुभपूर्णाभिषेकार्थे विनियोगः प्रकीर्त्तितः ॥ १५९ ॥

होमान्तकृत्यम् होमपर्य्यन्तं कर्त्तव्यं कर्म्म निष्पाद्य साधयित्वा ॥ १५३ । १५४ ॥

परतत्त्वपरायणः परं ब्रह्म तत्परः ॥ १५५ ॥

शिष्येणेत्यादि । ततो गुरुः शिष्येण देवीमर्च्चयित्वार्च्चिते पूजिते घटे कामं मायां रमां क्लीं ह्रीं श्रीमिति मन्त्रं जप्त्वा वक्ष्यमाणमन्त्रेण विमलं घटं चालयेत् ॥ १५६ ॥

घटचालनमन्त्रमेवाह उत्तिष्ठेत्यादिम् ॥ १५७ ॥

इत्थमित्यादि । इत्थं कलशकुटं सञ्चाल्य कृपान्वितो गुरुरुत्तराभिमुखं शिष्यं वक्ष्यमाणैरेतैर्मन्त्रैरभिषिञ्चेत् ॥ १५८ ॥

गुरवस्त्वाभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
दुर्गालक्ष्मीभवान्यस्त्वामभिषिञ्चन्तु मातरः ॥ १६० ॥
षोडशी तारिणी नित्या स्वाहा महिषमर्द्दिनी ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ १६१ ॥
जयदुर्गा विशालाक्षी ब्रह्माणी च सरस्वती ।
एतास्त्वामभिषिञ्चन्तु बगला वरदा शिवा ॥ १६२ ॥
नारसिंही च वाराही वैष्णवी वनमालिनी ।
इन्द्राणी वारुणी रौद्री त्वाभिषिञ्चन्तु शक्तयः ॥ १६३ ॥
भैरवी भद्रकाली च तुष्टिः पुष्टिरुमा क्षमा ।
श्रद्धा कान्तिर्दया शान्तिरभिषिञ्चन्तु ते सदा ॥ १३४ ॥
महाकाली महालक्ष्मीर्महानीलसरस्वती ।
उग्रचण्डा प्रचण्डा त्वामभिषिञ्चन्तु सर्वदा ॥ १६५ ॥
मत्स्यः कूर्म्मो वराहश्च नृसिंहो वामनस्तथा ।
रामो भार्गवरामस्त्वामभिषिञ्चन्तु वारिणा ॥ १६६ ॥
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तो भयङ्करः ।
कपाली भीषणश्च त्वामभिषिञ्चन्तु वारिणा ॥ १६७ ॥

अथ पूर्णाभिषेकमन्त्राणामृष्यादिकमाह शुभपूर्णाभिषेकस्येत्यादिना सार्द्धेन । एषां शुभपूर्णाभिषेकमन्त्राणां सदाशिवऋषिरनुष्टुप्छन्दः आद्या काली देवता प्रणवो बीजं शुभपूर्णाभिषेकार्थे विनियोगः शिरसि सदाशिवाय ऋषये नमः मुखेऽनुष्टुप्छन्दसे नमः हृदये आद्यायै कालिकायै देवतायै नमः गुह्ये प्रणवाय बीजाय नमः शुभपूर्णाभिषेकार्थे विनियोग इत्यृषिन्यासो विधातव्यः ॥ १५८ ॥

अथ गुरवस्त्वाभिषिञ्चन्त्वित्यादीनभिषेकमन्त्रानेवाह गुरव इत्यादि । त्वा त्वाम् ॥ १६०—१६२ ॥

त्वा त्वाम् ॥ १६३ ॥

वाराही कपालिनी कुब्जा कुबकुब्जा विरोधिनी ।
विघ्नविघ्ना महेशया त्वामभिषिञ्चन्तु सर्व्वदा ॥ १६८ ॥
इन्द्रोऽग्निः शमनो रक्षो वरुणः पवनस्तथा ।
धनदश्च महेशानः सिञ्चन्तु त्वान्दिगीश्वराः ॥ १६९ ॥
रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः ।
राहुः केतुः सनक्षत्रा अभिषिञ्चन्तु ते ग्रहाः ॥ १७० ॥
नक्षत्रं करणं योगो वाराः पक्षो दिनानि च ।
ऋतुर्मासो हायनस्त्वामभिषिञ्चन्तु सर्व्वदा ॥ १७१ ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलात्मकाः ।
समुद्रास्त्वाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ १७२ ॥
गङ्गा सूर्य्यसुता रेवा चन्द्रभागा सरस्वती ।
सरयुर्गण्डकी कुन्ती श्वेतगङ्गा च कौशिकी ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ १७३ ॥
अनन्ताद्या महानागाः सुपर्णाद्या पतत्रिणः ।
तरवः कल्पवृक्षाद्याः सिञ्चन्तु त्वां महीधराः ॥ १७४ ॥
पातालभूतलव्योमचारिणः क्षेमकारिणः ।
पूर्णाभिषेकसन्तुष्टास्त्वाभिषिञ्चन्तु पाथसा ॥ १७५ ॥
दौर्भाग्यं दुर्यशो रोगा दौर्म्मनस्यं तथा शुचः ।
विनश्यन्त्वभिषेकेन परमब्रह्मतेजसा ॥ १७६ ॥

ते इति कर्म्मणः शेषत्वेन विवक्षितत्वात् षष्ठी ॥१६४—१६९ ॥
जीवो बृहस्पतिः सितः शुक्रः ॥ १७०—१७२ ॥
सूर्य्यसुता सूर्य्यपुत्री यमुना ॥ १७३ ॥
अनन्ताद्याः शेषप्रभृतयः । सुपर्णाद्याः गरुडादयः । पतत्रिणः पक्षिणः ॥ १७४ । १७५ ॥

अलक्ष्मीः कालकर्णी च डाकिन्यो योगिनीगणाः ।
विनश्यन्त्वभिषेकेण कालीबीजेन ताड़िताः ॥ १७७ ॥
भूताः प्रेताः पिशाचाश्च ग्रहा येऽरिष्टकारकाः ।
विद्रुतास्ते विनश्यन्तु रमाबीजेन ताड़िताः ॥ १७८ ॥
अभिचारकृता दोषा वैरिमन्त्रोद्भवाश्च ये ।
मनोवाक्कायजा दोषाः विनश्यन्त्वभिषेचनात् ॥ १७९ ॥
नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः ।
अभिषेकेण पूर्णेन पूर्णाः सन्तु मनोरथाः ॥ १८० ॥
इत्येकाधिकविंशत्या मन्त्रैः संसिक्तसाधकम् ।
पशोर्मुखाल्लब्धमन्त्रं पुनः संश्रावयेद् गुरुः ॥ १८१ ॥
पूर्वोक्तनाम्ना सम्बोध्य श्रापयन् शक्तिसाधकान् ।
दद्यादानन्दनाथान्तमाख्यानं कौलिको गुरुः ॥ १८२ ॥
श्रुतमन्त्रो गुरोर्यन्त्रे सम्पूज्य निजदेवताम् ।
पञ्चतत्त्वोपचारेण गुरुमभ्यर्चयेत्ततः ॥ १८३ ॥
गोभूहिरण्यवासांसि पानालङ्करणानि च ।
गुरवे दक्षिणां दत्वा यजेत् कौलान् शिवात्मकान् ॥१८४॥

गुह्यः शोकाः ॥ १७६ । १७७ ॥

अरिष्टकारकाः अशुभोत्पादकाः ॥ १७८—१८१ ॥

पूर्व्वोक्तेत्यादि । ततः कौलिको गुरुः शक्तिसाधकान् श्रापयन् पूर्व्वोक्तनाम्ना शिष्यं सम्बोध्य तस्यानन्दनाथान्तमाख्यानं नाम दद्यात् यथा अमुकदेवशर्म्मन् ! त्वमेतद्दिनमारभ्यामुकानन्दनाथाख्यो- ऽसीति ॥ १८२ । १८३ ॥

गोभूहिरण्येत्यादि । श्रो अद्येत्यादि कस्यैतत्पूर्णाभिषेक- कर्म्मणः साङ्गतार्थं गोभूहिरण्यादिदक्षिणाममुकगोत्रायामुकानन्दनाथाय

कृतकौलार्चनो धीरः शान्तोऽतिविनयान्वितः ।
श्रीगुरोश्चरणौ स्पृष्ट्वा भक्त्या नत्वेदमर्थयेत् ॥ १८५ ॥
श्रीनाथ ! जगतां नाथ ! मन्नाथ ! करुणानिधे ! ।
परामृतप्रदानेन पूरयास्मन्मनोरथम् ॥ १८६ ॥
आज्ञां मे दीयतां कौलाः प्रत्यक्षशिवरूपिणः ।
सच्छिष्याय विनीताय ददामि परमामृतम् ॥ १८७ ॥
चक्रेश ! परमेशान ! कौलपङ्कजभास्कर ! ।
कृतार्थं कुरु सत्शिष्यं देह्यमुष्मै कुलामृतम् ॥ १८८ ॥
आज्ञामादाय कौलानां परमामृतपूरितम् ।
सशुद्धिकं पानपात्रं शिष्यहस्ते समर्पयेत् ॥ १८९ ॥
कृपाकृष्य गुरुर्देवीं स्रुवसंलग्नभस्मना ।
स्वस्य शिष्यस्य कौलानां कूर्चे च तिलकं न्यसेत् ॥ १९० ॥
ततः प्रसादतत्त्वानि कौलेभ्यः परिवेशयन् ।
चक्रानुष्ठानविधिना विदध्यात् पानभोजनम् ॥ १९१ ॥
इति ते कथितं देवि ! शुभपूर्णाभिषेचनम् ।
ब्रह्मज्ञानैकजननं शिवत्वफलसाधनम् ॥ १९२ ॥
नवरात्रं सप्तरात्रं पञ्चरात्रं त्रिरात्रकम् ।
अथ वाप्येकरात्रञ्च कुर्य्यात् पूर्णाभिषेचनम् ॥ १९३ ॥
संस्कारेऽस्मिन् कुलेशानि ! पञ्चकल्पाः प्रकीर्त्तिताः ।
नवरात्रे विधातव्यं सर्वतोभद्रमण्डलम् ॥ १९४ ॥

गुरवे द्रव्यमहं सम्प्रददे इति वाक्येन यथाशक्ति गोभूहिरण्यादीनि दक्षिणां गुरवे दत्वा शिवात्मकान् शिवस्वरूपान् कौलान् यजेत् ॥ १८४ ॥

अर्थयेत् याचेत् ॥ १८५ ॥

मद्‌प्रार्थकेसदाह श्रीनाथेत्याद्येकेन ॥ १८६—१९० ॥

नवनाभं सप्तरात्रे पञ्चाब्जं पञ्चरात्रके ।
त्रिरात्रे चैकरात्रे च पद्ममष्टदलं प्रिये ! ॥ १९५ ॥
मण्डले सर्वतोभद्रे नवनाभेऽपि साधकैः ।
स्थापनीया नवघटाः पञ्चाब्जे पञ्चसङ्ख्यकाः ॥ १९६ ॥
नलिनेऽष्टदले देवि ! घटस्त्वेकः प्रकीर्त्तितः ।
अङ्गावरणदेवांश्च कोणवादिषु पूजयेत् ॥ १९७ ॥
पूर्णाभिषेकसिद्धानां कौलानां निर्म्मलात्मनाम् ।
दर्शनात् स्पर्शनाद् घ्राणाद् द्रव्यशुद्धिर्विधीयते ॥ १९८ ॥
शाक्तैर्वा वैष्णवैः शैवैः सौरैर्गाणपतैरपि ।
कौलधर्म्माश्रितः साधुः पूजनीयोऽतियत्नतः ॥ १९९ ॥
शाक्ते शाक्तो गुरुः शस्तः शैवे शैवो गुरुर्मतः ।
वैष्णवे वैष्णवः सौरे सौरो गुरुरुदाहृतः ॥ २०० ॥
गाणपे गाणपश्चैव कौलः सर्वत्र सद्गुरुः ।
अतः सर्वात्मना धीमान् कौलाद् दीक्षां समाचरेत्॥२०१
पञ्चतत्त्वेन यत्नेन भक्त्या कौलान् यजन्ति ये ।
उद्धृत्य पुरुषान् सर्वांस्ते यान्ति परमाङ्गतिम् ॥ २०२ ॥
पशोर्वक्त्राल्लब्धमन्त्रः पशुरेव न संशयः ।
वीराल्लब्धमनुर्वीरः कौलाद्भवति ब्रह्मवित् ॥ २०३ ॥
शाक्ताभिषेकी वीरः स्यात् पञ्चतत्त्वानि शोधयेत् ।
स्वेष्टपूजाविधावेव न तु चक्रेश्वरो भवेत् ॥ २०४ ॥
वीरघाती ब्रह्मघाती वीराणां स्त्रीगमस्तथा ।

विदध्यात् कुर्य्यात् ॥ १९१–१९६ ॥
नलिने पद्मे ॥ १९७–२०० ॥
सर्व्वात्मना सर्व्वप्रयत्नेन ॥ २०१–२०४ ॥

स्तेयी महापातकिनस्तत्संसर्गी च पञ्चमः ॥ २०५ ॥
कुलवर्त्म कुलद्रव्यं कुलसाधकमेव च ।
ये निन्दन्ति दुरात्मानस्ते गच्छन्त्यधमाङ्गतिम् ॥ २०६ ॥
नृत्यन्ति रुद्रडाकिन्यो नृत्यन्ति रुद्रभैरवाः ।
मांसास्थिचर्व्वणानन्दाः सुराः कौलद्विषां नृणाम् ॥२०७॥
दयालवः सत्यशीलाः सदा परहितैषिणः ।
तान् गर्हयन्तो नरकान्निष्कृतिं यान्ति न क्वचित् ॥२०८॥
उक्ता प्रयोगा बहवः कर्म्माणि विविधानि च ।
अत्रै कनिष्ठकौलस्य त्यागानुष्ठानयोः समम् ॥ २०९ ॥
एकमेव परं ब्रह्म जगदावृत्य तिष्ठति ।
विश्वार्च्चया तदर्चा स्यात् यतः सर्व्वं तदन्वितम् ॥२१०॥
फलासक्ताः कामपराः कर्म्मजालरताः प्रिये ! ।
पृथक्त्वेन यजन्तोऽपि तत् प्रयान्ति विशन्ति च ॥ २११
सर्व्व ब्रह्मणि सर्व्वत्र ब्रह्मैव परिपश्यति ।
ज्ञेयः सएव सत्कौलो जीवन्मुक्तो न संशयः ॥२१२॥

इति श्रीमहानिर्व्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्व्वधर्म्मनिर्णय-
सारे श्रीमदाद्यासदाशिवसंवादे वृद्धिश्राद्धादिसंस्कृतक्रिया-
पूर्णाभिषेककथनं नाम दशमोल्लासः ।

अथ पञ्चमहापातकिन आह वीरघातीत्याद्येकेन ॥ २०५—२०७॥
गर्हयन्तः निन्दन्तः ॥ २०८ । २०९ ॥
तदर्च्चा परब्रह्मार्च्चनम् । तदन्वितम् परब्रह्मान्वितम् ॥ २१० ॥
फलासक्ता इत्यादि । तत इति शेषः कर्म्मजालरताः कर्म्मसमूहा-
नुरक्ताः । तत्परं ब्रह्म ॥ २११ । २१२ ॥

इति श्रीमहानिर्व्वाणतन्त्रटीकायां दशमोल्लासः ।

---

# एकादशोल्लासः ।

श्रुत्वा शाम्भवधर्माणि वर्णाश्रमविभेदतः ।
अपर्णा परया प्रीत्या पप्रच्छ शङ्करं प्रति ॥ १ ॥

श्रीदेव्युवाच ।

वर्णाश्रमाचारधर्माः संस्कारा लोकसिद्धये ।
कथिताः कृपया मह्यं सर्वज्ञेन त्वया प्रभो ! ॥ २ ॥
कलौ दुर्वृत्तयो लोकाः कामक्रोधान्धचेतसः ।
नास्तिकाः संशयात्मानः सदेन्द्रियसुखैषिणः ॥ ३ ॥

कलौ लोकानां प्रायशो नास्तिकत्वात् संशयापन्नमानसत्वात् कामक्रोधाद्यभिभूतत्वात् सर्व्वदेन्द्रियसुखाकाङ्क्षित्वाच्च सदाशिवप्रोक्त-सन्मार्गाननुष्ठानात्तन्निषिद्धदुर्व्वर्त्मनः सेवनाच्चानेकविधं पापमुत्पद्येत ततश्च तेषां कथं विशुद्धिरित्याशयवती पार्व्वती शङ्करं पृच्छति श्रुत्वेत्याह श्रुत्वेत्यादिना । वर्णा ब्राह्मणादयश्चाश्रमौ गार्हस्थ्यभैक्षुकौ च तेषां विभेदतः शाम्भवधर्माणि शम्भुप्रोक्तधर्माणि श्रुत्वा अपर्णा व्रतत्यक्त-पत्रा पार्वती परयोत्तमया प्रीत्या शङ्करं कल्याणकर्त्तारं महादेवं प्रति पप्रच्छ ॥ १ ॥

किं पप्रच्छेत्याकाङ्क्षायां प्रष्टव्यमेवाभिधातुमुपक्रमते वर्णाश्र-मेत्यादि वक्तुमर्हसीत्यन्तं श्लोकत्रयम् । प्रभो ! हे स्वामिन् ! यद्यपि लोकसिद्धये लोकनिर्वाहनिष्पत्तये वर्णानामाश्रमाणां चाचारा धर्माः संस्काराश्च सर्वज्ञेन ! सर्वं जानता त्वया कृपया मह्यं [illegible] कथिता उक्ताः ॥ २ ॥

तथापि कलौ लोका जना भवन्निगदितं भवता कथितं वर्णाश्रमं

भवनिगदितं वर्त्म नानुष्ठास्यन्ति दुर्धियः।
तेषाञ्च गतिरीशान! विशेषाद्वक्तुमर्हसि ॥ ४ ॥

श्रीसदाशिव उवाच।

साधु पृष्टं त्वया देवि! लोकानां हितकारिणि!।
त्वं जगज्जननी दुर्गा जन्मसंसारमोचनी ॥ ५ ॥
त्वमाद्या जगतां धात्री पालयित्री परात्परा।
त्वयैव धार्य्यते देवि! विश्वमेतच्चराचरम् ॥ ६ ॥

नानुष्ठास्यन्तीति द्वितीयेनान्वयः [शिवोक्तवर्त्मानुष्ठाने हेतुं दर्शयन् लोकांस्त्रिशिनष्टि कलौ दुर्हृत्तय इत्यादिना। कथम्भूताः लोकाः दुर्हृत्तयः दुष्टे कर्मणि हत्तिर्दृष्टा वा हत्तिर्येषां ते। दुष्टे कर्मणि वर्त्तमाना इत्यर्थः पुनः कामक्रोधान्धचेतसः कामक्रोधाभ्यामन्धञ्चेतो येषां तथाभूताः नास्तिका परलोकादिकं नास्तीति बुद्धिशालिनः संशयात्मानः परलोकादिकमस्ति नास्ति वेति सन्देहापन्नमानसाः सदेन्द्रियसुखैषिणः सर्व्वदा रसनादीन्द्रियसुखाकाङ्क्षिणः ॥ ३ ॥

दुर्धियः दुर्बुद्धयः ईशान! हे ऐश्वर्य्यशालिन्! तेषां लोकानां का गतिः को विलक्षणोपायः स्यादिति विशेषात्तत्तु कथयितुमर्हसि त्वं भवसि। गतिर्ज्ञानेयात्रां च मार्गे यात्राभ्युपाययोरिति कोषः ॥ ४ ॥

शम्भुरिदानीमपर्णाप्रश्नं स्तौति साधु पृष्टमित्यादिना। देवि! हे द्युतिमति! त्वया साधु मनोरमं पृष्टम्। साधुप्रश्ने हेतुं वदन्नाह लोकानामिति। कीदृशि देवि! लोकानां हितकारिणि जनानामभीष्टप्रदायिनि! लोकानां हितकारिणीत्वे बीजं दर्शयन्नाह त्वमित्यादि। त्वं जगज्जननी जगतां जनयित्री जगज्जननीत्वाल्लोकानां हितकारिणी लोकानां हितकारिणीत्वाच्च साधु पृष्टमिति योज्यम्। जन्मसंसारमोचनी जन्मनः उत्पत्तेः संसारात् पुनःपुनर्यातायातकर्म्मणः कलत्रपुत्रादेश्च मुक्तिकारिणीम्। अतएव दुःखेन गम्यते ज्ञायते या सा दुर्गा दुर्ज्ञेया च त्वम् ॥ ५ ॥

त्वमेव पृथ्वी त्वं वारि त्वं वायुस्त्वं हुताशनः ।
त्वं वियत्त्वमहङ्कारस्त्वं महत्तत्त्वरूपिणी ॥ ७ ॥
त्वमेव जीवो लोकेऽस्मिं स्त्वं विद्या परदेवता ।
इन्द्रियाणि मनोबुद्धिर्विश्वेषां त्वं गतिः स्थितिः ॥ ८ ॥
त्वमेव वेदाः प्रणवः स्मृतयस्त्वं हि संहिताः ।
निगमागमतन्त्राणि सर्व्वशास्त्रमयी शिवा ॥ ९ ॥
महाकाली महालक्ष्मीर्महानीलसरस्वती ।
महोदरी महामाया महारौद्री महेश्वरी ॥ १० ॥

त्वमिति । त्वं जगतामाद्या आदिभूतासि । जगतां धात्री पोष्ट्री च त्वम् । पालयित्री जगतां रक्षिका च त्वमेव । परात् श्रेष्ठादपि परा श्रेष्ठा च त्वम् । हे देवि! कान्तिमति! चराचरं जङ्गमस्थावरमेतद्विश्वं त्वयैव धार्य्यते ॥ ६ ॥

त्वमेवेति ।त्वं चाहङ्कारः । महत्तत्त्वरूपिणी च त्वमेव ॥ ७ ॥

त्वमेवेति अस्मिंल्लोके यो जीवस्तद्रूपा च त्वमेव । विद्या आत्मज्ञानरूपा च त्वम् । परदेवता श्रेष्ठदेवता च त्वमेवासि । इन्द्रियाणि नेत्रादीनि मनो हृदयं बुद्धिः शास्त्रादितत्त्वज्ञानम् तत्तद्रूपा च त्वम् भासि विश्वेषां या गतिः स्थितिश्च तद्रूपा च त्वमेव ॥ ८ ॥

त्वमेवेति । वेदा यजुरादयः तद्रूपा च त्वमेवासि । प्रणव ओङ्काररूपा च त्वम् । स्मृतयो मन्वादिकथितधर्म्मशास्त्राणि तद्रूपा च त्वम् । संहिता महाभारतादयस्तद्रूपा च त्वमेवासि । निगमः मञ्जुघोषः पार्व्वतीमुखजातः पद्यरूपो ग्रन्थविशेषः । आगमश्च शिवमुखागतगिरिजाननयातवासुदेवमतः पद्यरूपग्रन्थविशेष एव । तन्त्रं शाक्तिकामुद्दिश्य शिवोक्तो गणेशलिखितो ग्रन्थविशेष एव तत्तद्रूपा च त्वमेव । सर्व्वशास्त्रमयी वेदान्तादिसकलशास्त्ररूपा च त्वम् । शिवा कल्याणैकनिलयभूता च त्वमसि ॥ ९ ॥

महेति । जगत्संहर्त्रीत्वान्महाकाली त्वम् । सम्यक्समृद्धिहेतुत्वा-

सर्व्वज्ञा त्वं ज्ञानमयी नास्त्यवेद्यं तवान्तिके ।
तथापि पृच्छसि प्राज्ञे ! प्रीतये कथयामि ते ॥ ११ ॥
सत्यमुक्तं त्वया देवि ! मनुजानां विचेष्टितम् ।
जानन्तोऽपि हितं मत्ताः पापैराशु सुखप्रदैः ॥ १२ ॥
नाचरिष्यन्ति सद्धर्म्मं हिताहितबहिष्कृताः ।
तेषां निःश्रेयसार्थाय कर्त्तव्यं यत्तदुच्यते ॥ १३ ॥
अनुष्ठानं निषिद्धस्य त्यागो विहितकर्म्मणः ।

महालक्ष्मीश्च त्वमेव । विद्याप्रदात्रीत्वान्महानीलसरस्वती च त्वमेवासि । अशेषजगत्कुक्षित्वान्महोदरी त्वम् । जगन्मोहयित्रीत्वान्महामाया च त्वम् । महारौद्री चामुण्डा च त्वम् । महेश्वरी महैश्वर्य्यविशिष्टा च त्वम् ॥ १० ॥

सर्व्वज्ञेति । सर्व्वज्ञा अशेषपदार्थज्ञात्री । ज्ञानमयी मोक्षविषयप्रमास्वरूपा च त्वमसि अतस्तवान्तिके त्वन्निकटेऽवेद्यमप्रज्ञेयं किञ्चिदपि नास्ति । ननु किञ्चिदपि ममावेद्यं नास्ति चेत् कथं पृच्छामीत्याशङ्कमानां प्रत्याह तथापीति । यद्यप्येवं तथापि प्राज्ञे ! हे प्रकृष्टज्ञानवति ! प्रीतये पृच्छसि ममेति शेषः अहमपि ते तव प्रीतये कथयामि । ते तवाग्रतः ते तुभ्यमिति वा । काकाक्षिगोलकन्यायेन प्रीतये इति पूर्व्वोत्तराभ्यां क्रियाभ्यां सम्बध्यते ॥ ११ ॥

अधुना पूर्व्वोक्तमेवानुवदन्नुत्तरं दातुं प्रक्रमते सत्यमुक्तमित्यादि । हे देवि ! मनुजानां मानवानां विचेष्टितं विरुद्धं चेष्टितं त्वया सत्यमुक्तम् । विचेष्टितमेवाह जानन्त इत्यादिना । आत्मनो हितं जानन्तोऽपि मनुजाः सद्धर्म्मं साधुमार्गं नाचरिष्यन्ति नानुष्ठास्यन्ति । सद्धर्म्मानाचरणे हेतुं वदन्मनुजान् विशिनष्टि कथम्भूता मनुजाः आशु सुखप्रदैर्झटिति सुखप्रापकैरवैधस्त्रीगमनसुरापानादिभिः पापैः कर्म्मभिर्म्मत्ताः अतएव हिताहिताभ्यां बहिष्कृताः अतो नाचरिष्यन्तीति भावः तेषां मनुजानां निःश्रेयसार्थाय मुक्तये यत् कर्त्तव्यं विधेयं तदुच्यते ॥१२।१३॥

नृणां जनयतः पापं क्लेशशोकामयप्रदम् ॥ १४ ॥
स्वानिष्टमात्रजननात् परानिष्टोपपादनात् ।
तदेव पापं द्विविधं जानीहि कुलनायिके ! ॥ १५ ॥
परानिष्टकरात् पापात् मुच्यते राजशासनात् ।
अन्यस्मान्मुच्यते मर्त्यः प्रायश्चित्तात् समाधिना ॥ १६ ॥
प्रायश्चित्त्याथवा दण्डैर्न पूता ये कृतांहसः ।
नरकान्न निवर्त्तन्ते इहामुत्र विगर्हिताः ॥ १७ ॥
तत्रादौ कथयाम्याद्ये ! नृपशासननिर्णयम् ।

प्रथमतो निषिद्धकर्म्मानुष्ठानविहितकर्म्माननुष्ठानाभ्यां पापोत्पत्तिरिति ब्रूते अनुष्ठानमित्यादिना । निषिद्धस्य कर्म्मणोऽनुष्ठानमाचरणं विहितकर्म्मणस्त्यागोऽनाचरणं नृणां क्लेशशोकामयप्रदं दुःखशोकव्याधिप्रदायकं पापं जनयतः उत्पादयतः ॥ १४ ॥

अथ पूर्व्वोक्तपापस्य सहेतुकं द्वैविध्यं सम्पादयति स्वानिष्टेत्यादिना । कुलनायिके हे कुलेश्वरि ! स्वानिष्टमात्रजननादात्मन एवानीप्सितस्योत्पादनात् तथा परानिष्टोपपादनादन्यानाकांक्षितस्यापि जननात्तदेव पूर्व्वोक्तं पापं द्विविधं द्विप्रकारकं जानीहि प्रतीहि ॥ १५॥

एवं द्विविधपापोत्पत्तिं प्रदर्श्येदानीं तस्माद्विमुक्त्युपायं वदति परानिष्टेत्यादिना । परानिष्टकरादन्यस्याप्यनाकांक्षितोत्पादकात् पापात् राजशासनात् राजदण्डात् मर्त्यो जनो मुच्यते मुक्तो भवति । कर्म्मकर्त्तरि लट् । अन्यस्मात् स्वानिष्टमात्रजनकात् पापात्तु प्रायश्चित्त्या प्रायश्चित्तेन समाधिना चित्तवृत्तिनिरोधेन च मुच्यते ॥ १६ ॥

जातद्विविधपापानां प्रायश्चित्तदण्डाभ्यां पूतत्वाभावे सर्व्वदा नरकस्थायित्वं दर्शयितुमाह प्रायश्चित्त्येति । ये कृतांहसः कृतपापा जनाः प्रायश्चित्त्या दण्डैर्व्वा पूताः पवित्रा न बभूवुः इह लोके परलोके च विगर्हिता विनिन्दिताः सन्तस्ते नरकान्न निवर्त्तन्ते तत्रैव तिष्ठन्तीत्यर्थः ॥ १७ ॥

यस्य लङ्घनात् महेशानि ! राजा यात्यधमाकृतिम् ॥ १८ ॥
भृत्यान् पुत्रान् उदासीनान् प्रियानपि तथाप्रियान् ।
शासने च तथा न्याये समदृष्ट्यावलोकयेत् ॥ १९ ॥
स्वयं चेत् कृतपापः स्यात् पीड़येदकृतांहसः ।
उपवासैश्च दानैस्तान् परितोष्य विशुध्यति ॥ २० ॥
वधार्हं मन्यमानः स्वं कृतपापो नराधिपः ।
त्यक्त्वा राज्यं वनं प्राप्य तपसात्मानमुद्धरेत् ॥ २१ ॥
गुरुदण्डं नैव राजा विदध्याल्लघुपापिषु ।

अथ राजशासननिर्णयं तदुल्लङ्घनकृतो भूपतेर्नरकगामित्वमाह तस्यादावित्यादिना। हे आद्ये ! हे महेशानि! तत्र प्रायश्चित्तदण्डयो-रनयोर्मध्ये आदौ प्रथमतो दण्डशासननिर्णयं कथयामि। यस्य लङ्घ-नात् राजाऽधमाकृतिं याति ॥ १८ ॥

दण्डशासननिर्णयमेवाह भृत्यानित्यादिना। भृत्यान् भर्त्तव्यान-मात्यादीन् पुत्रानात्मजान् उदासीनान् शत्रुमित्रातिमित्रान् प्रियान् हितान् तथा अप्रियान् अहितांश्च शासने तथा न्याये च राजा समदृष्ट्या तुल्यदृष्ट्यावलोकयेत् पश्येत् ॥ १९ ॥

नन्वकृतकिल्बिषान् पुरुषान् दण्डयतः स्वयं कृतकल्मषस्य कथं शुद्धिस्तत्राह स्वयं चेदित्यादिना। चेद्यदि राजा स्वयं कृतपापः स्यात् तदा उपवासैर्दानैश्च विशुध्यति। चेद्यदि अकृतांहसोऽकृतपापान् जनान् पीड़येद्दण्डयेत् तदा दानैस्तानकृतांहसः परितोष्य उपवासै-र्दानैश्च विशुध्यति अत्र पापतारतम्यादुपवासदानयोस्तारतम्यं बोद्ध-व्यम् ॥ २० ॥

अथात्मानं वधार्हं मन्यमानस्य कृतदुष्कृतस्य भूपतेः प्रायश्चित्त-माह वधार्हमित्यादिना। स्वमात्मानं वधार्हं वधयोग्यं मन्यमानः कृतपापो नराधिपो राज्यं त्यक्त्वा वनं प्राप्य तपसात्मानमुद्धरेत् शोधयेत् ॥ २१ ॥

न लघुं गुरुपापेषु विना हेतुं विपर्य्यये ॥ २२ ॥
तस्मिन् यत् शासने शास्या अनेकोन्मार्गवर्त्तिनः ।
पापेभ्यो निर्भये शस्तो लघुपापे गुरुर्द्दमः ॥ २३ ॥
सकृत्कृतापराधेन सत्रपे बहुमानिनि ।
पापाद्भीरौ प्रशस्तः स्याद् गुरुपापे लघुर्द्दमः ॥ २४ ॥
स्वल्पापराधी कौलश्चेत् ब्राह्मणो लघुपापकृत् ।
बहुमान्योऽपि दण्ड्यः स्याद्वचोभिरवनीभृता ॥ २५ ॥
न्यायं दण्डं प्रसादं च विचार्य्य सचिवैः सह ।
यो न कुर्य्यान्महीपालः स महापातकी भवेत् ॥ २६ ॥

अथ दण्डवैपरीत्ये हेत्वावसति लघुपापे गुरुदण्डं गुरुपापे च लघुदण्डं निषेधति गुर्व्वित्यादिना । विपर्य्यये दण्डं वैपरीत्ये हेतुं विना लघुपापिषु जनेषु गुरुदण्डं राजा नैव विदध्यान्न कुर्य्यात् । गुरुपापेषु जनेषु लघुदण्डं न विदध्यात् ॥ २२ ॥

विना हेतुं विपर्य्यये इत्यनेन वैपरीत्ये कारणसत्त्वे विपरीतदण्डं विदध्यादेवेति ध्वनितमतो हेतुदर्शनपूर्व्वकं विपरीतदण्डं विदधाति तस्मिन्नित्यादिना श्लोकद्वयेन । यत् शासने यस्योन्मार्गवर्त्तिनो जनस्य शासनेऽनेकोन्मार्गवर्त्तिनो बह्वयोऽसद्वर्त्मसु वर्त्तमाना जनाः शास्या भवन्ति । तस्मिन् पापेभ्यो बहुभ्योऽपि दुरितेभ्यो निर्भये भयहीनेऽपि जने लघुपापेऽपि गुरुर्द्दमः शस्तः ॥ २३ ॥

सकृत्कृतापराधेन सत्रपे सलज्जे बहुमानिनि सबहुमाने पापादेकस्मादपि भीरौ भयशीले जने गुरुपापेऽपि लघुर्द्दमः प्रशस्तः ॥ २४ ॥

अथ कृताल्पापराधयोर्बहुमान्ययोरपि कौलब्राह्मणयोर्द्दण्डमाह स्वल्पापराधीत्यादिना । बहुमान्योऽपि कौलः स्वल्पापराधी चेत् स्यात् तादृग् ब्राह्मणोऽपि लघुपापकृच्चेत्तदावनीभृता राज्ञा वचोभिर्द्दण्ड्यः स्यात् ॥ २५ ॥

अथ महामात्यैर्विचारमकृत्वैव दण्डादिकं विदधतो महीपालस्य

न त्यजेत् पितरौ पुत्रो न त्यजेयुर्नृपं प्रजाः।
न त्यजेत् स्वामिनं भार्य्या विनतानतिपापिनः ॥२७॥
राज्यं धनं जीवनं च धार्म्मिकस्य महीपतेः।
संरक्षेयुः प्रजा यत्नैरन्यथा यान्त्यधोगतिम् ॥ २८ ॥
मातरं भगिनीञ्चापि तथा दुहितरं शिवे!।
गन्तारो जानतो ये च महागुरुनिघातकाः ॥ २९ ॥
कुलधर्म्मं समाश्रित्य पुनस्त्यक्तकुलक्रियाः।
विश्वासघातिनो लोका अतिपातकिनः स्मृताः ॥३०॥
मातरं भगिनीं कन्यां गच्छतो निधनं दमः।

महापातकित्वमाह न्यायमित्यादिना। सचिवैर्म्मन्त्रिभिः सह विचार्य्य न्यायं दण्डं प्रसादं च यो महीपालो न कुर्य्यात् स महापातकी भवेत् ॥२६॥

अथ स्त्रीपुत्रप्रजानां धर्म्ममाह न त्यजेदित्यादिना। पुत्रः पितरौ मातापितरौ न त्यजेत्। प्रजाः नृपं राजानं न त्यजेयुः भार्य्या स्वामिनं पतिं न त्यजेत् नन्वतिपातकिनोऽपि पित्रादयो न हातव्या-स्तत्राह विनेति। अनतिपापिनस्तान् पित्रादीन्विनतान्। अतिपातकिनस्ते त्याज्या एवेत्यर्थः ॥ २७ ॥

धार्म्मिकभूपते राज्यादिकमरक्षन्तीनां प्रजानां दोषमाह राज्य-मित्यादिना। धार्म्मिकस्य महीपते राज्यं धनं जीवनं च प्रजा यत्नैः संरक्षेयुः अन्यथा राज्यादिकमरक्षन्त्यस्ता अधोगतिं यान्ति ॥ २८ ॥

पित्रादयोऽतिपातकिनस्त्याज्या इत्युक्तं ते च के इत्याकाङ्क्षायामतिपातकिनो निरूपयति मातरमित्यादिना श्लोकद्वयेन। हे शिवे! मातरं जननीं भगिनीं स्वसारं तथा दुहितरं पुत्रीं चापि जानतो ये गन्तारो भवन्ति तथा जानतो महागुरूणां मात्रादीनां निघातकाः हन्तारो ये। कुलधर्म्मं समाश्रित्य पुनस्त्यक्तकुलक्रिया ये। ये च विश्वासघातिनो लोकाः तेऽतिपातकिनः स्मृताः ॥ २९। ३० ॥

तासामपि सकामानां तदेव विहितं शिवे ! ॥ ३१ ॥
मातापितृस्वसृस्तल्पं स्नुषां श्वश्रुं गुरुस्त्रियम् ।
पितामहस्य वनितां तथा मातामहस्य च ॥ ३२ ॥
पित्रोर्भ्रातुः सुतां जायां भ्रातुःपत्नीं सुतामपि ।
भागिनेयीं प्रभोः पत्नीं तनयाञ्च कुमारिकाम् ॥ ३३ ॥
गच्छतां पापिनां लिङ्गच्छेदो दण्डो विधीयते ।
आसामपि सकामानां दमो नासानिकृन्तनम् ।
गृहान्निर्य्यापणं चैव पापादस्माद्विमुक्तये ॥ ३४ ॥
सपिण्डदारतनयाः स्त्रियं विश्वासिनामपि ।
सर्वस्वहरणं केशवपनं गच्छतो दमः ॥ ३५ ॥

अथ मात्रादिगामिनः पुरुषस्य सकामानां तासां च दण्डमाह मातरमिति । हे शिवे ! मातरं जनयित्रीं तथा भगिनीं तथा कन्यां पुत्रीं च गच्छतः पुंसो निधनं मरणमेव दमो दण्डः । सकामानां तासामपि तदेव मरणमेव दमनं विहितम् । अथ मातृस्वस्रादिगामिनां पुंसां तासामपि सकामानां दण्डमाह मातापित्रित्यादिना पापादस्माद्विमुक्तय इत्यन्तेन सार्द्धत्रयेण । मातापित्रोः स्वसृतल्पं शय्यां मैथुनेच्छया गच्छतां तथा स्नुषां पुत्रवधूं तथा श्वश्रुं श्वशुरपत्नीं तथा गुरुस्त्रियं तथा पितामहस्य मातामहस्य च वनितां स्त्रियं तथा पित्रोर्भ्रातुःसुतां मातुलपितृव्ययोः पुत्रीम् । तयोरेव जायां भार्य्यां च तथा भ्रातुःपत्नीं तस्यैव सुतामपि तथा भागिनेयीं स्वसृतनयाम् । तथा प्रभोःपत्नीं तस्यैव तनयां पुत्रीं च तथा कुमारिकामविवाहितां स्त्रियं गच्छतां पापिनां लिङ्गच्छेदः शिश्नकर्त्तनं दण्डो विधीयते । सकामानामासामप्यस्मात् पापात् विमुक्तये नासानिकृन्तनं नासिकाच्छेदनं गृहान्निर्य्यापणं च दमो दण्डो विधीयते ॥ ३१–३४ ॥

अथ सपिण्डपत्नीतनयागामिनो विश्वसितस्त्रीगामिनश्च दण्डमाह सपिण्डेत्यादिना । सपिण्डानां दारांस्तनयाश्च विश्वासिनामपि स्त्रियं

स्त्रीभिरेताभिरज्ञानाद् भवेत् परिणयो यदि।
ब्राह्मेण वापि शैवेन ज्ञात्वा तास्तत्क्षणं त्यजेत् ॥ ३६॥
सवर्णदारान् यो गच्छेत् अनुलोम परस्त्रियम्।
दमस्तस्य धनादानं मासैकं कणभोजनम् ॥ ३७ ॥
राजन्यवैश्यशूद्राणां सामान्यानां वरानने!।
ब्राह्मणीं गच्छतां ज्ञानाल्लिङ्गच्छेदो दमः स्मृतः ॥ ३८
ब्राह्मणीं विकृतां कृत्वा देशान्निर्य्यापयेन्नृपः।
वीरस्त्रीगामिनां तासामेवमेव दमो विधिः ॥ ३९ ॥

च्छतो जनस्य सर्वस्वहरणं सर्वधनादानं केशवपनं केशमुण्डनं च दमो॥
येत् ॥ ३५ ॥

अथाज्ञानतो वेदोक्तशिवोक्तविधिभ्यां सपिण्डादिभिर्ज्ञातविवा-
स्य वह्निर्धेयं तदाह स्त्रीभिरित्यादिना। एताभिः सपिण्डादि-
नयादिभिः स्त्रीभिर्ब्राह्मेण वेदोक्तविधिना शैवेन शिवोक्तविधिना
। यद्यज्ञानात् परिणयो विवाहो भवेत् तदा ज्ञात्वा ताः स्त्रीस्तत्-
णमेव त्यजेत् ॥ ३६ ॥

ननु सवर्णदारान् सवर्णान्तरवर्णदारांश्च गच्छतः कथं शुद्धिस्त-
ाह सवर्णेत्यादिना। यः पुमान् सवर्णदारान् गच्छेत् तथानुलोम
रस्त्रियं च यो गच्छेत् यथा ब्राह्मणः क्षत्रियां क्षत्रियो वैश्यामेवम्।
स्य धनादानं मासैकं कणभोजनं च दमो ज्ञेयः ॥ ३७ ॥

अथ ज्ञानपूर्वकब्राह्मणीगमने क्षत्रियादीनां सकामायास्तस्याश्च
ण्डमाह राजन्येत्यादिना। वरानने! शोभनवदने! ज्ञानाद्ब्राह्मणीं
गच्छतां राजन्यवैश्यशूद्राणां सामान्यानामन्त्यजानां च लिङ्गच्छेदो
दमो दण्डः स्मृतः ॥ ३८ ॥

सकामां ब्राह्मणीमपि विकृतां कथवाङ्गहीनां कृत्वा नृपो देशा-
न्निर्य्यापयेन्निःसारयेत्। अथ वीरस्त्रियो गच्छतां तासां च दण्डमाह
वीरेति। वीरस्त्रीगामिनां सकामानां तासां चैवमेव पूर्ववदेव दमो

दुरात्मा यस्तु रमते प्रतिलोम परस्त्रिया ।
दण्डस्तस्य धनादानं त्रिमासं कणभोजनम् ॥ ४० ॥
सकामायाः स्त्रियाश्चापि दण्डस्तद्वद्विधीयते ।
बलात्कारगता भार्य्या त्याज्या पाल्या भवेत् शिवे ॥४१॥
ब्राह्मी भार्य्याथवा शैवी कामतो वाप्यकामतः ।
सर्वथा हि परित्याज्या स्याच्चेत् परगता सकृत् ॥ ४२ ॥
गच्छतां वारनारीषु गवादिपशुयोनिषु ।
शुद्धिर्भवति देवेशि! त्रिरात्रं कणभोजनात् ॥ ४३ ॥

विधिर्विधातव्य इत्यर्थः । विधिरिति वि-पूर्वकाद्धाञः उपसर्गे घोः किरिति कर्मणि किः ॥ ३९ ॥

अथ सवर्णोत्तमवर्णस्त्रीगामिनां पुंसां तस्याश्च सकामाया दण्डमाह दुरात्मेत्यादिना । यो दुरात्मा दुष्टचित्तो दुर्बुद्धिर्दुःस्वभावो वा प्रतिलोम परस्त्रिया सह रमते यथा शूद्रो वैश्यवेत्यवम् । तस्य पुंसो धनादानं त्रिमासं कणभोजनं च दण्डो भवति ॥ ४० ॥

सकामायाः स्त्रियाश्च तद्वत् पूर्ववद्दण्डो विधीयते । "आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु"ति कोषः । अथ बलात्कारेण परपुरुषरमिताया अबलायास्त्यागः पालनं च पुंसा विधेयमित्याह बलादित्यादिना । हे शिवे ! बलात्कारेण परपुंसा गता या भार्य्या सा त्याज्या ग्रासादिभिः पालनीया भवेत् ॥ ४१ ॥

अथ कामाकामाभ्यां परगतयोर्ब्राह्मीशैव्योर्भार्य्ययोस्त्याग एवोचित इत्याह ब्राह्मीत्यादिना । ब्राह्मी वेदोक्तविधिना परिणीता अथवा शैवी शिवोक्तविधानेन परिणीता भार्य्या सकृदेकवारमपि परगता चेत्तदा सर्वथा सर्वप्रकारेण परित्याज्या स्यात् ॥ ४२ ॥

अथ वेश्यागामिनां पशुयोनिगामिनां च प्रायश्चित्तमाह गच्छतामित्यादिना । हे देवेशि ! वारनारीषु वेश्यासु तथा गवादिपशुयोनिषु गच्छतां जनानां त्रिरात्रं कणभोजनाच्छुद्धिर्भवति ॥ ४३ ॥

गच्छतां कामतः पुंसः स्त्रियाः पायुं दुरात्मनाम् ।
वध एव विधातव्यो भूभृता मम शासनात् ॥ ४४ ॥
बलात्कारेण यो गच्छेदपि चाण्डालयोषितम् ।
वधस्तस्य विधातव्यो न क्षन्तव्यः कदापि सः ॥ ४५ ॥
परिणीतास्तु या नार्य्यो ब्राह्मैर्वा शैववर्त्मभिः ।
ता एव दारा विज्ञेया अन्याः सर्वाः परस्त्रियः ॥ ४६ ॥
कामात् परस्त्रियं पश्यन् रहः सम्भाषयन् स्पृशन् ।
परिष्वज्योपवासेन विशुध्येद् द्विगुणक्रमात् ॥ ४७ ॥
कुर्वन्त्येवं सकामा या परपुंसा कुलाङ्गना ।

अथ स्त्रीपुंसयोः पायुं गच्छतां दण्डमाह गच्छतामित्यादिना । पुंसः पुरुषस्य स्त्रियाश्च पायुं गुदं कामतो गच्छतां दुरात्मनां भूभृता राज्ञा मच्छासनाद्वध एव विधातव्यः ॥ ४४ ॥

बलात्कारेण परस्त्रीगामिनामपि वध एव दण्ड इत्याह बलादित्यादिना । बलात्कारेण चाण्डालयोषितमपि यो गच्छेत्तस्यापि वधो विधातव्यः । कदापि स न क्षन्तव्यः अपि शब्देन ब्राह्मण्यादिगामिनां तु सुतरामेव वधो विधातव्य इति ध्वनितम् ॥ ४५ ॥

यथोक्तवक्ष्यमाणेषु तत्तत्श्लोकेष्वाकाङ्क्षितत्वात् स्वस्त्रीः परस्त्रीश्च निरूपयति परिणीता इत्यादिना । ब्राह्मैर्वेदोक्तवर्त्मभिः शिवोक्तवर्त्मभिर्वा यास्तु नार्य्यः परिणीता उद्वाहितास्ता एव दाराः स्वस्त्रियो विज्ञेयाः अन्यास्तद्भिन्नाः सर्वाः परस्त्रियो विज्ञेयाः ॥ ४६ ॥

अथ कामतः परस्त्रीदर्शनादिकं कुर्वतः प्रायश्चित्तमाह कामादित्यादिना । कामात् परस्त्रियं पश्यन् तथा रह एकान्ते सम्भाषयन् तया सहालापं कुर्वन् तथा स्पृशंश्च परिष्वज्य तामालिङ्ग्य च द्विगुणक्रमादुपवासेन जनो विशुध्येत् । यथा कामतः परस्त्रीदर्शने एकोपवासेन सम्भाषणे उपवासद्वयेन स्पर्शने उपवासचतुष्टयेन आलिङ्गने अष्टभिस्तैः शुद्धिः ॥ ४७ ॥

उक्तोपवासविधिना स्वात्मानं परिशोधयेत् ॥ ४८ ॥
ब्रुवन्निन्द्यं वचः स्त्रीषु पश्यन् गुह्यं परस्त्रियाः ।
हसन् गुरुतरं मर्त्त्यः शुध्येद् द्विरुपवासतः ॥ ४९ ॥
दर्शयन्नग्नमात्मानं कुर्वन्नग्नं तथापरम् ।
त्रिरात्रमशनं त्यक्त्वा शुद्धो भवति मानवः ॥ ५० ॥
पत्न्याः पराभिगमनं प्रमाणयति चेत् पतिः ।
नृपस्तदा तां तज्जारं शास्यात् शास्त्रानुसारतः ॥ ५१ ॥
प्रमाणे यद्यशक्तः स्यात् दयितोपपतेः पतिः ।
त्यक्त्वा तां पोषयेद् ग्रासैस्तिष्ठेच्चेत् पतिशासने ॥ ५२॥

अथ सह परपुंसा सम्भाषणादिकं कुर्वत्याः सकामायाः स्त्रिया-अपि तदेव प्रायश्चित्तमित्याह कुर्वतीत्यादिना । या कुलाङ्गना कुलपालिका स्त्री सकामा सती परपुंसा सह एवं सम्भाषणादिकं कुर्वती बभूव सा पूर्वोक्तोपवासविधिना आत्मानं परिशोधयेत् ॥ ४८ ॥

ननु स्त्रीषु दुर्वचो वदतः परस्त्रीगुह्यं पश्यतो गुरुतरान् हसतश्च कथं शुद्धिस्तत्राह ब्रुवन्नित्यादिना । स्त्रीषु निन्द्यमव्यक्तं वचो ब्रुवन् तथा परस्त्रिया गुह्यं गोप्यप्रदेशं पश्यन् तथा गुरुतरं हसन्मर्त्यो द्विरुपवासतः शुध्येत् ॥ ४९ ॥

नन्वात्मानं नग्नं दर्शयतः परञ्च तादृशं कुर्वतः कथं शुद्धिस्तत्राह दर्शयन्नित्यादिना । आत्मानं नग्नं दर्शयन् तथापरं नग्नं कुर्वन्मानवो त्रिरात्रमशनं भोजनं त्यक्त्वा शुद्धो भवति ॥ ५० ॥

अथ स्वपतिप्रमाणितान्यपुरुषगमनायाः स्त्रियाः तज्जारस्य च दण्डमाह पत्न्या इत्यादिना । पतिश्चेद्यदि पत्न्याः पराभिगमनं प्रमाणयति तदा नृपस्तां तथा जारं च शास्त्रानुसारतः पूर्वोक्तविधानात् शास्यात् ॥ ५१ ॥

अथोपपतिप्रमाणाऽशक्तपतिकायाः शङ्कितव्यभिचारायाः स्त्रियास्त्यागपोषणे विधातव्ये इत्याह प्रमाणेत्यादिना । दयितोपपतेः पत्न्या

रममाणामुपपतौ पश्यन् पत्नीं पतिस्तदा ।
निघ्नन् वनितया जारं वधार्हो नैव भूभृतः ॥ ५३ ॥
भर्त्तुर्निवारणं यत्र गमने येन भाषणे ।
प्रयाणाद्भाषणात्तत्र त्यागार्हा स्यात् कुलाङ्गना ॥ ५४ ॥
मृते पत्यौ स्वधर्म्मेण पतिबन्धुवशे स्थिता ।
अभावे पितृबन्धूनां तिष्ठन्ती दायमर्हति ॥ ५५ ॥
द्विर्भोजनं परान्नं च मैथुनामिषदूषणम् ।
पर्य्यङ्कं रक्तवासश्च विधवा परिवर्जयेत् ॥ ५६ ॥

जारस्य प्रमाणे यदि पतिरशक्तः स्यात्तर्हि तां दयितां त्यक्त्वा चेद् यदि पतिशासने तिष्ठेत् भर्त्तुराज्ञां न लङ्घेत तदा ग्रासैः कवलैः तोषयेत् ॥ ५२ ॥

ननु यद्योपपतिना रममाणां पत्नीमवलोक्य सजारां तां घ्नतस्तद्भर्त्तुर्वधार्हत्वं स्यान्न वेति सन्दिहानां गिरिजां प्रति ब्रूते रममाणामित्यादिना । पतिर्भर्त्ता यदोपपतौ रममाणां पत्नीं पश्यन्नासीत्तदा वनितया सह जारं निघ्नन् पतिर्भूभृतो राज्ञो वधार्हो नैव भवेत् तदा निघ्नन्नित्यनेनान्यकाले निघ्नतो वधार्हत्वं स्यादेवेति ध्वनितम् ॥ ५३ ॥

अथ भर्त्तृनिषिद्धस्थाने गच्छन्त्यास्तन्निषिद्धमन्यपुरुषेण सह भाषणं च कुर्वन्त्याः स्त्रियास्त्यागार्हत्वं विदधाति भर्त्तुरित्यादिना । यत्र स्थाने गमने येन पुंसा सह भाषणे च भर्त्तुर्निवारणं जातं तत्र प्रयाणाद्भाषणाच्च कुलाङ्गनापि त्यागार्हा स्यात् ॥ ५४ ॥

अथ प्रसङ्गात् पतिबान्धवादिवशे स्वधर्म्मेण तिष्ठन्त्या मृतपतिकाया दायभाक्त्वमाह मृत इत्यादिना । पत्यौ मृते सति पतिबन्धुवशे स्वधर्म्मेण स्थिता । पतिबन्धूनामभावे पितृबन्धूनां वशे तिष्ठन्ती सती स्त्री दायमर्हति ॥ ५५ ॥

अनन्तरोक्तयोषिद्विधवा धर्माधर्मानाकाङ्क्षितत्वात्तानिरूपयति द्वि-

नाङ्गमुद्वर्त्तयेद्दासैर्ग्राम्यालापमपि त्यजेत् ।
देवव्रता नयेत् कालं वैधव्यं धर्म्ममाश्रिताः ॥ ५७ ॥
न विद्यते पिता यस्य शिशोर्माता पितामहः ।
नियतं पालने तस्य मातृबन्धुः प्रशस्यते ॥ ५८ ॥
मातुर्माता पिता भ्राता मातुर्भ्रातुः सुतास्तथा ।
मातुः पितुः सोदराश्च विज्ञेयाः मातृबान्धवाः ॥ ५९ ॥
पितुर्माता पिता भ्राता पितुर्भ्रातुः स्वसुः सुताः ।
पितुः पितुः सोदराश्च विज्ञेयाः पितृबान्धवाः ॥ ६० ॥

भोजनमित्यादिश्लोकद्वयेन । विधवा स्त्री द्विर्भोजनं परस्यान्नं मैथुनं रतिम् । आमिषं मांसादिकं भूषणमलङ्कारं पर्य्यङ्कं खट्टां रक्तवासो रक्तं वस्त्रं च परिवर्ज्जयेत् ॥ ५६ ॥

नाङ्गमिति । वैधव्यं धर्ममाश्रिता विधवा वासैः पिष्टैर्द्रव्यैर्वा सुगन्धिद्रव्यैः अङ्गं नोद्वर्त्तयेत् नोत्सादयेत् । वास्यते यैस्ते वासाः कर्षकः । ग्राम्यमालापमपि त्यजेत् ननु ग्राम्यालापाभावे कथं कालं क्षिपेत्तत्राह देवेत्यादिना । देवव्रता सती कालं नयेत् स्वेष्टनामादिकीर्त्तनादिना कालं क्षिपेदित्यर्थः ॥ ५७ ॥

ननु मृतमातापितृपितामहस्य शिशोः पालने पितृबन्धुमातृबन्ध्वोर्मध्ये कतरस्य प्राधान्यमिति पृच्छन्तीं देवीं प्रत्याह न विद्यत इत्यादिना । यस्य शिशोः पिता माता पितामहश्च न विद्यते तस्य पालने नियतं निश्चितं मातृबन्धुः प्रशस्यते ॥ ५८ ॥

ननु के ते मातृबन्ध्वादय इत्याह मातुरित्यादिना । मातुर्माता मातामही मातुःपिता मातामहः मातुर्भ्राता मातुलः तथा मातुर्भ्रातुःसुताः मातुलपुत्राः मातुःपितुर्मातामहस्य सोदराश्च मातृबान्धवा विज्ञेयाः ॥ ५९ ॥

अथ पितृबान्धवानाह पितुरित्यादिना । पितुर्माता पितामही पितुःपिता पितामहः पितुर्भ्राता पितृव्यः पितुर्भ्रातुः सोदर्याः सुताः

पत्युर्माता पिता भ्राता पत्युर्भ्रातुः स्वसुः सुताः।
पत्युःपितुः सोदराश्च विज्ञेयाः पतिबान्धवाः॥ ६१॥
पित्रे मात्रे पितुः पित्रे पितामह्यै तथा स्त्रियै।
अयोग्यसूनवे पुत्रहीनमातामहाय च॥ ६२॥
मातामह्यै दरिद्रेभ्य एभ्यो वासस्तथाशनम्।
दापयेन्नृपतिः पुंसा यथाविभवमम्बिके!॥ ६३॥
दुर्वाच्यं कथयन् पत्नीमेकाहमशनं त्यजेत्।
त्र्यहं सन्ताड़यन् रक्तं पातयन् सप्तवासरान्॥ ६४॥
क्रोधाद्वा मोहतो भार्य्यां मातरं भगिनीं सुताम्।

पितुःस्वसुर्भगिन्याश्च सुताः पितुःपितुः पितामहस्य सोदराश्च पितृबान्धवा विज्ञेयाः॥ ६०॥

अथ पतिबान्धवानाह पत्युरित्यादिना। पत्युर्माता श्वश्रूः पत्युःपिता श्वशुरः पत्युर्भ्राता सोदरः पत्युर्भ्रातुः सुताः पुत्राः पत्युःस्वसुर्भगिन्याश्च सुताः पत्युःपितुः श्वशुरस्य सोदराश्च पतिबान्धवा विज्ञेयाः॥ ६१॥

अथ दरिद्रेभ्यः पित्रादिभ्यो भोजनादिकं पुरुषेण नरपतिर्दापयेदित्याह पित्रे इत्यादिना द्वयेन हि। अम्बिके! जगज्जननि! पित्रे तथा मात्रे तथा पितुःपित्रे पितामहाय पितामह्यै च तथा अयोग्यसूनवे अयोग्यपुत्राय स्त्रियै पुत्रहीनमातामहाय च॥ ६२॥

तादृश्यै मातामह्यै च दरिद्रेभ्य एभ्यः पित्रादिभ्यो यथाविभवं विभवमनतिक्रम्य वासो वस्त्रं तथाशनं भोज्यं नृपतिः पुंसा दापयेत्॥६३॥

अथ पत्न्यै दुर्वाच्यं कथयतस्तां ताडयतस्तस्या रक्तं च पातयत क्रमतः प्रायश्चित्तमाह दुर्वाच्यमित्यादिना। पत्नीं पतिदुर्वाच्यमवाच्यं वचः कथयन् जन एकाहमशनं भोजनं त्यजेत् तां सन्ताड़यंस्त्र्यहमशनं त्यजेत्। तस्या रक्तं पातयन् सप्तवासरानशनं त्यजेत्॥ ६४॥

वदन् पोष्य समाहं विशुध्येच्छिवशासनात् ॥ ६५ ॥
षण्ढेनोद्वाहितां कन्यां कालातीतेऽपि पार्थिवः ।
जानन् द्वाहयेत् भूयो विधिरेषः शिवोदितः ॥ ६६ ॥
परिणीता न रमिता कन्यका विधवा भवेत् ।
साप्युद्वाह्या पुनः पित्रा शैवधर्मेष्वयं विधिः ॥ ६७ ॥
उद्वाहाद् द्वादशे पक्षे पत्यन्तात् गतहायने ।
प्रसूते तनयं योग्यं न सा पत्नी न सः सुतः ॥ ६८ ॥

क्रोधादमर्षान्मोहतोऽविवेकाद्वा भार्य्यायां मातृत्वादि वदतः प्रायश्चित्तमाह क्रोधादित्यादिना । क्रोधादमर्षान्मोहतोऽविवेकाद्वा भार्य्यां मातरं भगिनीं सुतां पुत्रीं वा वदन् पुमान् शिवशासनात् सप्ताहमुपोष्य विशुध्येत् ॥ ६५ ॥

नपुंसकपरिणीताया नार्य्याः पुनरुद्वाहो राज्ञा विधापयितव्य इत्याह षण्ढेनेत्यादिना । कालेऽतीतेऽपि जानन् पार्थिवो भूयः षण्ढेन नपुंसकेनोद्वाहितां कन्यां भूयः पुनरुद्वाहयेत् । ननु वेदाद्यसम्मतत्वान्नेदं मान्यं तत आह विधिरिति एषः शिवोदितः शिवभाषितो विधिः । षराढ इति षमेढ इति ढः ॥ ६६ ॥

अथ परिणीताया मृतभर्तृकायाः कन्यायाः पुनरुद्वाहः पित्रा कार्य्य इत्याह परिणीतेत्यादिना । या परिणीता विवाहिता कन्या भर्त्रा न रमिता सती विधवा भवेत् सा परिणीतापि कन्या पित्रा पुनरुद्वाह्या भवेत् । अत्र प्रमाणं दर्शयति शैवेति विधिरयं शैवधर्मेषु निरूपितः ॥ ६७ ॥

अथोद्वाहात् षष्ठे मासि प्रसूतपुत्रतनयाया भर्तृमरणात् प्रसूततनयायाश्च स्त्रियास्तत्पत्नीत्वं बालस्य तत्सुतत्वञ्च व्यावर्त्तयति उद्वाहादित्यादिना । उद्वाहाद् द्वादशे पक्षे षष्ठे मासि योग्यं पुष्टं यं तनयं या प्रसूते उत्पादयति पत्यन्तात् गतहायने पतिमरणात् पति-

प्राग्गर्भात् पञ्चमासान्तर्गर्भं या स्रावयेद्धिया ।
तदुपायकृतं तां च यातयेत्तीव्रताड़नैः ॥ ६८ ॥
पञ्चमात् परतो मासात् या स्त्री भ्रूणं प्रपातयेत् ।
तत्प्रयोक्तुश्च तस्याश्च पातकं स्याद्वधोद्भवम् ॥ ७० ॥
यो हन्ति ज्ञानतो मर्त्यं मानवः क्रूरचेष्टितः ।
वधस्तस्य विधातव्यः सर्वथा धरणीभृता ॥ ७१ ॥
प्रमादाद् भ्रमतोऽज्ञानात् घ्नन्तं नरमरिन्दमः ।
द्रविणादानतस्तीव्रताड़नैस्तं विशोधयेत् ॥ ७२ ॥

वर्षं यं तनयं प्रसूते सा पत्नी न स्यात् स च सुतो न स्यात् । तां पुंश्चलीत्वं च जारजातं विदित्वा तयोस्त्यागं कुर्यादिति भावः ॥ ६८ ॥

अथ गर्भाशयमारभ्य पञ्चमासाभ्यन्तर एव गर्भं स्रावयन्त्याः स्त्रियास्तदुपायकर्त्तुश्च दण्डमाह प्राग्गर्भादित्यादिना । प्राग्गर्भाद्गर्भमारभ्य पञ्चमासान्तः पञ्चमासाभ्यन्तरे गर्भं धिया बुद्ध्या या स्रावयेत्ताम् । तदुपायकृतं गर्भस्रावोपायकर्त्तारं च तीव्रताड़नैर्भूयो यातयेत् पीडयेत् ॥ ६९ ॥

अथ पञ्चममासादूर्द्ध्वं गर्भं स्रावयन्त्याः स्त्रियास्तत्प्रयोक्तुश्च नरवधजन्यं पातकमाह पञ्चमादित्यादिना । पञ्चमान्मासात् परतो या स्त्री भ्रूणं गर्भं प्रपातयेत् तस्यास्तत्प्रयोक्तुर्जनस्य च वधोद्भवं मनुष्यवधजन्यं पातकं स्यात् ॥ ७० ॥

ततश्च कथं विशुद्धिः स्यादिति पृच्छन्तीं पार्वतीं प्रत्याह य इत्यादिना । यः क्रूरचेष्टितो मानवो ज्ञानतो मर्त्यं मनुष्यं हन्ति तस्य सर्वथा सर्वप्रकारेण धरणीभृता राज्ञा वधो विधातव्यः तत एव तस्य शुद्धिर्भवत्येति भावः ॥ ७१ ॥

अथ प्रमादादिभिर्नरमेवं मारयतो विशुद्धिं दर्शयति प्रमादादित्यादिना । प्रमादात्तद्वधाकर्त्ता भ्रमतोऽज्ञानाद्वा यो नरं हन्ति तं

स्वतो वा परतो वापि बधोपायं प्रकुर्वतः ।
अज्ञानबधिनां दण्डो विहितस्तस्य पापिनः ॥ ७३ ॥
मिथः सङ्ग्रामयोद्धारमाततायिनमागतम् ।
निहत्य परमेशानि ! न पापार्हो भवेन्नरः ॥ ७४ ॥
अङ्गच्छेदे विधातव्यं भूभृताङ्गनिकृन्तनम् ।
प्रहारे च प्रहरणं नृषु पापं चिकीर्षुषु ॥ ७५ ॥
विप्रान् गुरूनवगुरेत् प्रहरेद् यो दुरासदः ।
धनादानादस्तदाहात् क्रमतस्तं विशोधयेत् ॥ ७६ ॥

मत्तं जनमरिन्दमो विपक्षदमनकर्त्ता राजा द्रविणादानतो द्रव्यहरण-तस्तीव्रताड़नैश्च विशोधयेत् ॥ ७२ ॥

अथ स्वतः परतो वा नरवधोपायं कुर्व्वतो दण्डमाह स्वत इत्या-दिना । स्वतः परतो वा यो बधोपायं करोति तस्य बधोपायं प्रकुर्व्वतः पापिनः अज्ञानबधिनामज्ञानतो नरहन्तॄणां यो दण्डः स विहितः ॥ ७३ ॥

ननु सङ्ग्रामहतयोधकस्य निहतागताततायिनश्च वधार्हत्वं स्यान्न वेत्याशङ्कायामाह मिथ इत्यादिना । हे परमेशानि ! मिथः परस्परं संग्रामे योद्धारं निहत्य तथाऽगतमाततायिनं च निहत्य नरः पापार्हः पापभाक् न भवेत् । आततायिनो यथा-अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षड़ेते आततायिन इति ॥ ७४ ॥

अथाङ्गच्छेदादिकं कुर्व्वतो दण्डमाह अङ्गेत्यादिना । पापं चिकी-र्षुषु कर्त्तुमिच्छुषु नृषु भूभृता भूपेनाङ्गच्छेदे तत्तदङ्गनिकृन्तनमङ्गच्छेदनं प्रहारे च प्रहरणं विधातव्यम् ॥ ७५ ॥

अथ ब्राह्मणगुरुहननार्थं दण्डादिकमुद्यच्छतस्तान् प्रहरतश्च क्रमतः प्रायश्चित्तमाह विप्रानित्यादिना । यो दुरासदो दुष्टो जनो

शस्त्रादिक्षतकायस्य पक्षमासात् परतो मृतौ।
प्रहर्त्ता दण्डनीयः स्याद् बधार्हो न हि भूभृतः॥ ७७॥
राष्ट्रविप्लाविनो राज्यं जिहीर्षून् नृपवैरिणाम्।
रहोऽहितैषिणो भृत्यात् भेदकान् नृपसैन्ययोः॥ ७८॥
योद्धुमिच्छुः प्रजा राज्ञा शस्त्रिणः पान्थपीड़कान्।
हत्वा नरपतिस्त्वेतान् नैव किल्विषभाग् भवेत्॥७९॥
यो हन्यान्मानवं भर्त्तुराज्ञयापरिहार्य्यया।
भर्त्तुरेव बधस्तत्र प्रहर्त्तुर्न शिवाज्ञया॥ ८०॥

विप्रान् गुरुंश्च हन्तुमिति शेषः। अवगुरेत् दण्डादिकमुत्क्षिपेत् तान् प्रहरेद्वा तं क्रमतो धनादानात् हस्तादाहद्वारा विशोधयेत्॥ ७६॥

अथ शस्त्रादिक्षतशरीरस्य पक्षमासात् परतो मरणे सति प्रहर्त्तुर्दण्डनीयत्वं बधानर्हत्वं चाह शस्त्रादित्यादिना। शस्त्रादिना क्षतः कायो यस्य तस्य पुंसः पक्षमासात् परतो मृतौ सत्यां प्रहर्त्ता भूभृता राज्ञो दण्डनीयः स्यात् बधार्हो नैव स्यात्॥ ७७॥

अथ देशोपद्रविणः राज्यहरणेच्छून् नृपतिविपक्षाणां रहोऽहिताकाङ्क्षी नृपसैन्यभेदकभृत्यान् राज्ञा सह योद्धुमिच्छुः प्रजाः पान्थपीड़कशस्त्रिणश्च घ्नतो महीपतेः पातकभागित्वं नेत्याह राष्ट्रेत्यादि श्लोकद्वयेन। राष्ट्रविप्लाविनो देशोपद्रावकान् राज्यं जिहीर्षून् राज्यहरणेच्छून् नृपवैरिणां राज्ञः शत्रूणां रहो हितैषिणो रहसि हिताकाङ्क्षिणो नृपसैन्ययोर्भेदकान् नृपस्य सैन्यस्य च भेदं कुर्वतो भृत्यान् अमात्यादीन् तथा राज्ञा सह योद्धुमिच्छुः प्रजाः तथा पान्थपीड़कान् शस्त्रिणश्चैतान् हत्वा नरपतिः किल्विषभाङ्नैव भवेत्॥ ७८। ७९॥

अथापरिहार्य्यप्रभ्वाज्ञालङ्घनाशक्तेन शक्तेन भृत्येन मानुषं घातयतो भर्त्तुरेव बधो विधातव्यो न भृत्यस्येत्याह य इत्यादिना। भर्त्तुरपरिहार्य्ययालङ्घनीययाज्ञया यो मानवं हन्यात् तस्य प्रहर्त्तुस्तत्र हनने बधः किन्तु शिवाज्ञया भर्त्तुरेव बधो विहितः अपरिहार्य्य-

अयत्नपुंसः पशुना शस्त्रैर्वा म्रियते नरः ।
धनदण्डेन वा कायदण्डेनास्य विशोधनम् ॥ ८१ ॥
वहिर्मुखान् पाशांस्तु नृपाग्रे प्रौढ़वादिनः ।
दूषकान् कुलधर्माणां शास्याद्राजा विगर्हितान् ॥ ८२॥
स्थाप्यापहारिणं क्रूरं वञ्चकं भेदकारिणम् ।
विवादयन्तं लोकांश्च देशान्निर्यापयेन्नृपः ॥ ८३ ॥
शुल्केन कन्यां दातृंश्च पुत्रं षण्ढे प्रयच्छतः ।
देशान्निर्यापयेद्राजा पतितान् दुष्कृतात्मनः ॥ ८४ ॥

येत्यनेन भर्त्राज्ञालङ्घनशक्तो भृत्यो यदि मानवं हन्यात् तदा तस्यैव वध इति सूचितम् ॥ ८० ॥

नन्वनवधानस्य यस्य पुंसः शस्त्रादिभिर्मनुष्यो म्रियते तस्य विशुद्धिः कथं स्यात्तत्राह अयत्नेत्यादिना । अयत्नपुंसो यत्नहीनस्य यस्य पुरुषस्य पशुना गजाश्वादिना शस्त्रैः खड्गादिभिर्वा नरो म्रियते अस्य पुंसो धनदण्डेन कायदण्डेन वा विशोधनं भवेत् ॥ ८१ ॥

अथ राजाज्ञालङ्घिनस्तदग्रे प्रौढ़वादिनः कुलधर्मदूषकांश्च राजा दण्डयेदित्याह वहिरित्यादिना । नृपाज्ञास्तु वहिर्मुखान् राजाज्ञा-लङ्घिनो नृपाग्रे प्रौढ़वादिनः प्रौढ़ं वदतः तथा कुलधर्माणां दूषकांश्च विगर्हितान्निन्दितानेतान् राजा शास्यात् ॥ ८२ ॥

अथ न्यासापहारकादिकान्निजदेशतो नृपो निष्कासयेदित्याह स्थाप्येत्यादिना । स्थाप्यापहारिणं न्यासस्यापहर्त्तारं क्रूरं कठिनं निर्दयं वा तथा वञ्चकं तथा भेदकारिणं तथा लोकान् विवादयन्तञ्च जनं नृपो देशान्निर्यापयेन्निष्कासयेत् ॥ ८३ ॥

अथ शुल्कग्रहणपूर्वकं कन्यां पुत्रं च ददतो जनान् भूपो देशा-न्निःसारयेदित्याज्ञापयति शुल्केनेत्यादिना । शुल्केन दाननिमित्तकधनेन हेतुना कस्मैचिज्जनाय विशेषतः षण्ढे क्लीवे कन्यां दातॄन् तथा शुल्केनैव कस्मिन् विशेषतः षण्ढे पुत्रं च प्रयच्छतो ददतो दुष्कृतात्मनः

मिथ्यापवादव्याजेन परानिष्टं चिकीर्षवः।
यथापवादं ते शास्या धर्मज्ञेन महीभृता ॥ ८५ ॥
यो यत्परिमितानिष्टं कुर्य्यात्तत् सम्मितं धनम्।
नृपतिर्द्दापयेत्तेन जनायानिष्टभागिने ॥ ८६ ॥
मणिमुक्ताहिरण्यादिधातूनां स्तेयकारिणः।
करस्य वाङ्घ्रिच्छेदो वा कार्य्यो मूल्यं विचारयन् ॥ ८७ ॥
महिषाश्वगवादीनां रत्नादीनां तथा शिशोः।
बलेनापहृतां नृणां स्तेयिवद्विहितो दमः ॥ ८८ ॥
अन्नानामल्पमूल्यस्य वस्तुनस्तेयिनं नृपः।

गापहृदयान् पापबुद्धीन् वा पतितान् जनान् राजा देशान्निर्य्यापयेत्। शब्दे इति सम्प्रदानस्याधिकरणत्वेन विवक्षितत्वात् सप्तम्यधिकरणे चेति सप्तमी ॥ ८४ ॥

अथ मिथ्यापवादच्छलेन परानिष्टजननाकाङ्क्षिणां दण्डमाह मिथ्येत्यादिना। मिथ्यापवादव्याजेन असत्यापवादच्छलेन परानिष्टमन्यानाकाङ्क्षितं चिकीर्षवो ये मानवास्ते धर्मज्ञेन धर्मं जानता महीभृता राज्ञा यथापवादं शास्याः गुर्व्वपवादे गुरुशासनं लघ्वपवादे च लघुशासनं विधेयमित्यर्थः ॥ ८५ ॥

ननु विनैवापराधं परानिष्टं कुर्व्वतः पुंसः कोदण्डो विधातव्यस्तत्राह य इत्यादिना। यो नरो यस्य यत् परिमितमनिष्टं कुर्य्यात्तेन तस्मै अनिष्टभागिने जनाय तत्सम्मितं धनं नृपतिर्द्दापयेत् ॥ ८६ ॥

अथ मणिमुक्तादिधातुस्तेयिनां दण्डमाह मणीत्यादिना। मणिमुक्ताहिरण्यादीनां धातूनां स्तेयकारिणो नरस्य करस्य वाङ्घ्रेर्वा छेदं मण्यादीनां मूल्यं विचारयन् नृपः कुर्य्यात्। अल्पमूल्यकमण्यादिस्तेये करच्छेदो बहुमूल्यकमण्यादिस्तेये वाङ्घ्रिच्छेदः कार्य्य इत्यर्थः ॥ ८७ ॥

अथ बलात्कारेण महिषाश्वादीनामपहारकदण्डमाह महिषेत्या-

विशोधयेत्तं पक्षैकं सप्ताहं वाशयन् कणम् ॥८९॥
विश्वासघातके पुंसि कृतघ्ने सुरवन्दिते ! ।
यज्ञैर्व्रतैस्तपोदानैः प्रायश्चित्तैर्न निष्कृतिः ॥९०॥
ये कूटसाक्षिणो मर्त्त्या मध्यस्था पक्षपातिनः ।
शास्यास्तांस्तीव्रदण्डेन देशान्निर्य्यापयेन्नृपः ॥ ९१ ॥
षट् साक्षिणः प्रमाणं स्युश्चत्वारस्त्रय एव वा ।
अभावे द्वावपि शिवे ! प्रसिद्धौ यदि धार्म्मिकौ ॥ ९२॥

दिना । महिषाश्वगजादीनां पशूनां तथा रत्नादीनां तथा शिशोश्च बलेनापहृतानपहरतां नृणां स्तेयिवद्दमो विहितः ॥ ८८ ॥

अथान्नस्य मणयादिभिन्नाल्पमूल्यवस्तुनश्च स्तेयिनो विशुद्धिमाह अन्नानामित्यादिना । अन्नानां तथाल्पमूल्यस्य वस्तुनश्च स्तेयी यो नरस्तं पक्षैकं सप्ताहं वा कणमाशयन् भोजयन्नृपो विशोधयेत् ॥ ८९ ॥

अथानेकयज्ञव्रतादिकं कुर्व्वतोरपि विश्वासघातककृतघ्नयोरनिष्कृतित्वमाह विश्वासेत्यादिना । हे सुरवन्दिते! विश्वासघातके तथा कृतघ्ने उपकृतविनाशके च पुंसि यज्ञैरश्वमेधादिभिर्व्रतैः कृच्छ्रचान्द्रायणादिभिस्तपोभिर्द्दानैश्च प्रायश्चित्तैः पापविनाशनैरेतैर्निष्कृतिर्दुष्कृतान्मुक्तिर्न स्यात् ॥ ९० ॥

अथ साक्षित्वे मिथ्याभिधायिनां पक्षपातिमध्यस्थानां च दण्डमाह ये इत्यादिना । कूटसाक्षिणः साक्ष्ये मृषाभिधायिनो ये मर्त्त्यास्तथा पक्षपातिनो मध्यस्थाश्च ये तान् नृपस्तीव्रदण्डेन शास्यास्तथा देशान्निर्य्यापयेत् ॥ ९१ ॥

ननु कति साक्षिणः प्रमाणं भवेयुरित्यपेक्षायामाह षडित्यादिना । षट्चत्वारस्त्रयो वा साक्षिणः प्रमाणं स्युः । हे शिवे ! अभावे त्रिचतुरादिसाक्ष्यसत्त्वे यदि प्रसिद्धौ धार्म्मिकौ भवेतां तदा द्वावपि साक्षिणौ प्रमाणं स्याताम् ॥ ९२ ॥

देशतः कालतो वापि तथा विषयतः प्रिये !।
परस्परमयुक्तश्चेद् अग्राह्यं साक्षिणां वचः ॥ ८३ ॥
अन्धानां वाक् प्रमाणं स्याद्बधिराणां तथा प्रिये !।
मूकानामेड़मूकानां शिरसाङ्गीकृतिर्लिपिः ॥ ८४ ॥
लिपिः प्रमाणं सर्वेषां सर्वत्रैव प्रशस्यते।
विशेषाद्व्यवहारेषु न विनश्येच्चिरं यतः ॥ ८५ ॥
स्वीयार्थमपरार्थं चेत् कुर्वतः कल्पितां लिपिम्।
दण्डस्तस्य विधातव्यो द्विपाद्यं कूटसाक्षिणः ॥ ८६ ॥

स्थानादिभेदतः परस्परमसङ्गतं साक्षिणां वचो न प्रमाणमित्याह देशत इत्यादिना। हे प्रिये ! देशतः स्थानतः कालतो दिनप्रहरभेदत स्तथा विषयतो वस्तुतो वा चेद् यदि परस्परमयुक्तं सम्बन्धं साक्षिणां वचस्तथाऽग्राह्यं स्यात् ॥ ८३ ॥

ननु दर्शनाद्यशक्ता अन्धादयः साक्षिणो भवितुमर्हन्ति न वेत्या-शङ्कायामाह अन्धानामित्यादिना। हे प्रिये ! अन्धानामचक्षुषां तथा बधिराणां श्रोत्रहीनानां वाक् प्रमाणं स्यात् मूकानामवाचां तथा एड़-मूकानां श्रोत्रवचोरहितानां शिरसाङ्गीकृतिः स्वीकारो लिपिरक्षरं च प्रमाणं स्यात् ॥ ८४ ॥

अथान्यप्रमाणाल्लिपिप्रमाणस्य बहुकालस्थायित्वात् प्राशस्त्यमाह लिपिरित्यादिना। सर्वत्रैव कर्मणि विशेषात् क्रयविक्रयादिरूपव्यवहा-रेषु सर्वेषां लिपिः प्रमाणं प्रशस्यते। प्राशस्त्ये हेतुं दर्शयन्नाह न विनश्येदित्यादिना। यतश्चिरं बहुकालं लिपिर्न विनश्येच्चिरं तिष्ठेदित्यर्थः ॥ ८५ ॥

अथाक्षरं कल्पयतो दण्डमाह स्वीयार्थमित्यादिना। स्वीयार्थमप-रार्थं वा कल्पितां लिपिं यः करोति तस्य तादृशीं लिपिं कुर्वतो जनस्य कूटसाक्षिणः साक्ष्येऽनृतं वदतो द्विपाद्यं द्विगुणो दण्डो राज्ञा वि धातव्यः ॥ ८६ ॥

अभ्रमस्याप्रमत्तस्य यदङ्गीकरणं सकृत् ।
स्वीयार्थे तत्प्रमाणं स्याद्वचसो बहुसाक्षिणाम् ॥ ९७ ॥
यथा तिष्ठन्ति पुण्यानि सत्यमाश्रित्य पार्वति ! ।
तथानृतं समाश्रित्य पातकान्यखिलान्यपि ॥ ९८ ॥
अतः सत्यविहीनस्य सर्वपापाश्रयस्य च ।
ताड़नाद्दमनाद्राजा न पापार्हः शिवाज्ञया ॥ ९९ ॥
सत्यं ब्रवीमि सङ्कल्प्य स्पृष्ट्वा कौलं गुरुं द्विजम् ।
गङ्गातोयं देवमूर्त्तिं कुलशास्त्रं कुलामृतम् ॥ १०० ॥
देविनिर्म्माल्यमथवा कथनं शपथो भवेत् ।
तत्रानृतं वदन् मर्त्यः कल्पान्तं नरकं व्रजेत् ॥ १०१ ॥

बहुसाक्षिवचोभ्योऽप्रमत्ताऽभ्रान्तजनः स्वयं कृतैकवारस्वीकार-रूपप्रमाणस्यातिप्राबल्यं दर्शयितुमाह अभ्रमस्येत्यादिना । अभ्रमस्य भ्रान्तिरहितस्याप्रमत्तस्य सावधानस्य यत् सकृदेकवारमपि अङ्गीकरणं स्वीकारस्तत् स्वीयार्थे बहु साक्षिणामपि वचसो भाषणादधिकं प्रमाणं स्यात् ॥ ९७ ॥

अथाऽसत्यस्याखिलपातकाश्रयत्वं व्याहरंस्तदाश्रयाश्रानवान् दण्ड-यतो राज्ञः पापानर्हत्वमाह यथेत्यादिना शिवाज्ञयेत्यन्तेन श्लोकद्वयेन । हे पार्वति ! यथा सत्यमाश्रित्य पुण्यानि तिष्ठन्ति तथाऽनृतमसत्यं समाश्रित्याऽखिलान्यपि पातकानि तिष्ठन्ति ॥ ९८ ॥

अतः सत्यविहीनस्य सर्व्वपापाश्रयस्य च जनस्य ताड़नाद्दमनाद्धन-दण्डाच्च राजा शिवाज्ञया पापार्हः पापभाक् न स्यात् ॥ ९९ ॥

अथ शपथस्वरूपं निरूपयंस्तत्रानृतं ब्रुवतो मर्त्यस्य नरकगा-मित्वं विदधाति सत्यमित्यादिना श्लोकद्वयेन । सत्यमहं ब्रवीमीति सङ्कल्प्य कौलं कुलीनं गुरुं निषेकादिकरं द्विजं ब्राह्मणं गङ्गातोयं गङ्गाजलं देवमूर्त्तिं देवताप्रतिमां कुलशास्त्रं तन्त्रादिकं कुलामृतमा-

अपापजनिकार्य्याणां त्यागे वा ग्रहणेऽपि वा ।
तत् कार्य्यं सर्वथा मर्त्यैः स्वीकृतं शपथेन यत् ॥ १०२॥
स्वीकारोल्लङ्घनाच्छुध्येत् पञ्चमैकमभोजनैः ।
अमेणापि तमुल्लङ्घ्य द्वादशाहं कणाशनैः ॥ १०३ ॥
कुलधर्मोऽपि सत्येन विधिना चेन्न सेवितः ।
मोक्षाय श्रेयसे न स्यात् कौले पापाय केवलम् ॥१०४॥
सुरा द्रवमयी तारा जीवनिस्तारकारिणी ।
जननी भोगमोक्षाणां नाशिनी विपदां रुजाम् ॥१०५॥

सवम् । देविनिर्म्माल्यं वा स्पृष्ट्वा कथनं शपथो भवेत् तत्र शपथेऽनृतं मिथ्यां वदन् मर्त्यः कल्पान्तं कल्पपर्य्यन्तं नरकं व्रजेत् नरकान्नरकान्तरं गच्छेत् ॥ १०० । १०१ ॥

अथ शपथपूर्व्वकस्वीकृताऽपापजनककार्य्याणामवश्यकर्त्तव्यत्वमाह अपा-पेत्यादिना । न पापस्य जनिरुत्पत्तिर्येभ्यस्तेषां कार्य्याणां त्यागे वा ग्रहणेऽपि वा शपथेन मर्त्यैर्यत् स्वीकृतं तत् सर्व्वथा कार्य्यं न लङ्घनीयमित्यर्थः । ग्रहणेऽपि वेत्यनेन पापजनककर्म्मणां त्यागे इव यत् स्वीकृतं तस्यैवावश्यकर्त्तव्यत्वमिति ध्वनितम् ॥ १०२ ॥

ननूल्लङ्घनामेकं पञ्चमभोजनैर्ज्ञानः शुध्येत् भ्रमेणापि तं स्वीका-रमुल्लङ्घ्य द्वादशाहं कणाशनैः शुध्येत् ॥ १०३ ॥

अथाऽविधिसेवितस्य कुलधर्मस्यापि पापजनकत्वमाह कुलेत्यादि- । सत्येन विधिना चेद् यदि सेवितो न स्यात् तदा कुलधर्मोऽपि कौले ोने मोक्षाय अपवर्गाय तथा श्रेयसे भद्राय च न स्यात् केवलं पायैव भवति अतो विधिनैव सेव्यः कुलधर्म इति भावः ॥ १०४ ॥

अथ सुरेत्यादिभिस्त्रिभिः पद्यैर्मद्यं स्तौति । सुरा द्रवमयी द्रव-ा तारा भवति या जीवनिस्तारकारिणी जीवानां निस्तारकर्त्री या गमोक्षाणां जननी उत्पादयित्री या विपदां विपत्तीनां रुजां रोगाणां नाशिनी ॥ १०५ ॥

दाहिनी पापसङ्घानां पावनी जगतां प्रिये ! ।
सर्व्वसिद्धिप्रदा ज्ञानबुद्धिविद्याविवर्द्धिनी ॥ १०६ ॥
मुक्तैर्मुमुक्षुभिः सिद्धैः साधकैः क्षितिपालकैः ।
सेव्यते सर्व्वदा देवैराद्ये ! स्वाभीष्टसिद्धये ॥ १०७ ॥
सम्यग्विधिविधानेन सुसमाहितचेतसा ।
पिबन्ति मदिरां मर्त्त्या अमर्त्त्या एव ते क्षितौ ॥१०८
प्रत्येकतत्त्वस्वीकाराद्विधिना स्याच्छिवो नरः ।
न जाने पञ्चतत्त्वानां सेवनात् किं फलं भवेत् ॥ १०
इयञ्चेत् वारुणी देवी निपीता विधिवर्ज्जिता ।
नृणां विनाशयेत् सर्व्वं बुद्धिमायुर्यशोधनम् ॥ ११०

या पापसङ्घानां पापसमूहानां दाहिनी दग्ध्री । हे प्रिये ! जगतां पाविनी शुद्धिकर्त्री या सर्व्वसिद्धिप्रदा सर्व्वासां सिद्धीनां प्र त्री या ज्ञानबुद्धिविद्याविवर्द्धिनी । मोक्षे धीर्ज्ञानम् शास्त्रादितत्त्व नं बुद्धिः आत्मज्ञानं विद्या तेषां विवर्द्धयित्री ॥ १०६ ॥

हे आद्ये ! मुक्तैर्मुक्तिशालिभिः मुमुक्षुभिर्मोक्षेप्सुभिः सि साधकैः क्षितिपालकैः राजभिर्देवैश्च स्वाभीष्टसिद्धये सर्व्वदा या से सा सुरा द्रवमयी तारा बोद्धव्येति पूर्व्वेणान्वयः या सेव्यध्याहा र्य्ये ॥ १०७ ॥

सुरेत्यादिश्लोकत्रयेण मदिरां स्तुत्वेदानीं विधिपूर्व्वकतत्पानव साक्षाद्देवत्वं प्रतिपादयति सम्यगित्यादिना । ये मर्त्त्याः सम्यग्विधि धानेन सुसमाहितचेतसाऽतिसावधानमनसा मदिरां पिबन्ति ते क्षि पृथिव्याममर्त्त्या देवा एव भवन्ति ॥ १०८ ॥

अथ विधिसेवितमद्यादिपञ्चतत्त्वानामनिर्व्वचनीयफलत्वं दर्श प्रत्येकेत्यादिना । विधिना प्रत्येकतत्त्वस्वीकारात् मद्यादीनामेकतत्त्व काराद्वरः शिवः स्यात् पञ्चानामपि तत्त्वानां मद्यादीनां सेवनात् फलं भवेदिति तु न जाने ॥ १०९ ॥

अत्यन्तपानान्मत्तस्य चतुर्वर्गप्रसाधनी ।
बुद्धिर्विनश्यति प्रायो लोकानां मत्तचेतसाम् ॥ १११ ॥
विभ्रान्तबुद्धेर्मनुजात् कार्य्याकार्य्यमजानतः ।
स्वानिष्टं च परानिष्टं जायतेऽस्मात् पदे पदे ॥ ११२ ॥
अतो नृपो वा चक्रेशो मद्ये मादकवस्तुषु ।
अत्यासक्तजनान् धनदण्डेन शोधयेत् ॥ ११३ ॥
सुराभेदात् व्यक्तिभेदात् न्यूनेनाप्यधिकेन वा ।
देशकालविभेदेन बुद्धिभ्रंशो भवेन्नृणाम् ॥ ११४ ॥

अथ विधिवर्ज्जितसुरापानस्य बुद्ध्यायुरादिसकलपदार्थविनाशकत्वमाह यदित्यादिना । येषु यदि विधिवर्ज्जितेयं वारुणी मदिरा देवी पीता स्यात्तदा नृणां बुद्धिमायुर्यशोधनमित्यादि सर्व्वं विनाशयेत् ॥ ११० ॥

सुरात्यन्तपानस्य बुद्धिविनाशकत्वेऽतिपीतमद्यानां स्वपरानिष्टोत्पादकत्वञ्च हेतुत्वात्तदासक्तचेतसः पुमांसो नरेशचक्रेशाभ्यां दण्ड्या इत्याह अत्यन्तेत्यादिना शोधयेदित्यन्तेन श्लोकत्रयेण । मद्यस्यात्यन्तपानान्मत्तचेतसां लोकानां चतुर्वर्गप्रसाधनी धर्म्मार्थकाममोक्षाणां साधनी बुद्धिः प्रायो विनश्यति ॥ १११ ॥

कार्य्याकार्य्यमजानतोऽस्माद्विभ्रान्तबुद्धेर्मनुजात् स्वानिष्टं परानिष्टं च पदे पदे जायते ॥ ११२ ॥

अतो मद्ये मादकवस्तुषु चात्यासक्तान् जनान् नृपश्चक्रेशो वा धनदण्डेन शोधयेत् ॥ ११३ ॥

मद्यादिविभेदतो न्यूनाधिकस्य च तस्य बुद्धिभ्रंशजनकत्वादत्यन्तपानस्य प्राणनाशकत्वात् [illegible] इत्याह सुरेत्यादिना विचारयेदित्यन्तेन श्लोकद्वयेन । सुराभेदात् व्यक्तिभेदात् [illegible] देशकालयोर्विभेदेन च न्यूनेनापि अधिकेन वा मद्येन नृणां बुद्धिभ्रंशो भवेत् ॥ ११४ ॥

अतएव सुरापानादतिपानं न लक्ष्यते ।
स्खलद्वाक्पाणिपादृग्भिरतिपानं विभावयेत् ॥११५॥
नेन्द्रियाणि वशे यस्य मदविह्वलचेतसः ।
देवतागुरुमर्य्यादोल्लङ्घिनो भयरूपिणः ॥ ११६ ॥
निखिलानर्थयोग्यस्य पापिनः शिवघातिनः ।
दहेज्जिह्वां हरेदर्थान् ताड़येत्तं च पार्थिवः ॥ ११७ ॥
विचलत्पादवाक्पाणिं भ्रान्तमुन्मत्तमुद्धतम् ।
तमुग्रं यातयेद्राजा द्रविणं चाहरेत्ततः ॥ ११८ ॥
अपवाग्वादिनं मत्तं लज्जाभयविवर्ज्जितम् ।
धनादानेन तं शास्यात् प्रजाप्रीतिकरो नृपः ॥११९॥
व्रताभिषिक्तः कौलश्चेत् अतिपानात् कुचेष्टितः ।

अतएव सुरापानादतिपानं न लक्ष्यते किन्तु स्खलद्वाक् पाणिपाद-दृग्भिरितस्ततो विचलद्भिर्वचो हस्तपादनेत्रैः इति पानं विभावयेत् लक्षयेत् ॥ ११५ ॥

अथोल्लङ्घितदेवतागुरुमर्य्यादाऽवशेन्द्रियमदिरामत्तस्य दण्डमाह नेन्द्रियाणीत्यादि श्लोकद्वयेन । यस्येन्द्रियाणि वशे न सन्ति तस्य मदविह्वलचेतसो मदिराविक्लवचित्तस्य देवतागुरुमर्य्यादोल्लङ्घिनो लङ्घितदेवनिषेकादिकमर्य्यादस्य भयरूपिणो भीतिस्वरूपस्य निखिलानर्थयोग्यस्याशेषानर्थार्हस्य पापिनः पातकाश्रयस्य शिवघातिनः शिवाज्ञालङ्घनात्कल्याणभङ्गकर्त्तुर्मत्तस्य जिह्वां पार्थिवो दहेत् अर्थान् हरेत् तं च ताड़येत् ॥ ११६ । ११७ ॥

अथ विचलत्पादादिकस्य मद्यमत्तस्य दण्डमाह विचलदित्यादिना । विचलत्पादवाक्पाणिं स्खलच्चरणवचोहस्तं भ्रान्तं भ्रमयुक्तमुन्मत्तमुन्मादवन्तमुद्धतमविनीतञ्च तमुग्रं रौद्रं राजा यातयेत् ततो द्रविणं च आहरेत् ॥ ११८ ॥

अथाऽवाच्यवादिनो मत्तस्य दण्डमाह अपवागित्यादिना । अप-

शुध्येत्सामोत्थवर्णानामन्नात् पक्षोपवासतः ॥ १२८ ॥

अनुलोमेन वर्णानामन्नं भुक्त्वा सकृत् प्रिये ।

दिनत्रयोपवासेन विशुद्धः स्यान्ममाज्ञया ॥ १२९ ॥

पशुश्वपचम्लेच्छानामन्नं चक्रार्पितं यदि ।

वीरहस्तार्पितं वापि तदश्नन्नैव पापभाक् ॥ १३० ॥

अन्नाभावे च दुर्भिक्षे विपदि प्राणसङ्कटे ।

निषिद्धेनान्नेनापि रक्षन् प्राणान्न पातकी ॥ १३१ ॥

करिपृष्ठे तथा नौकाग्रामपाषाणदारुषु ।

असंपृक्तेऽपि दुष्टानां भक्ष्यदोषो न विद्यते ॥ १३२ ॥

अथ क्रमतः क्षत्रियाद्यन्नभक्षतां ब्राह्मणादीनां प्रायश्चित्तमाह अनुलोमेनेत्यादिना । हे प्रिये ! अनुलोमेन क्रमेण वर्णानां सकृदन्नं भुक्त्वा ब्राह्मणादिर्दिनत्रयोपवासेन ममाज्ञया विशुद्धः स्यात् । यथा ब्राह्मणः क्षत्रियान्नमेवम् ॥ १२९ ॥

अथ चक्रार्पितस्य वीरहस्तार्पितस्य च पशुश्वपचम्लेच्छान्नस्य भोक्तुरपातकित्वमाह पश्वित्यादिना । पशुश्वपचम्लेच्छानामन्नं यदि चक्रार्पितं चक्रदत्तं वीरहस्तार्पितं वा स्यात्तदा तदश्नन् खादन् नरः पापभाक् नैव भवेत् ॥ १३० ॥

ननु दुर्भिक्षादौ निषिद्धवस्तुभोजनेन प्राणान् रक्षतो जनस्य पातकं भवेन्न वेत्याशङ्कमानां प्रत्याह अन्नेत्यादिना । दुर्लभा भिक्षा यत्र तत्र दुर्भिक्षे समये विपदि च देशोपद्रवपलायनादौ अन्नाभावे प्राणसङ्कटे सति निषिद्धेनाप्यदनेन भोज्यस्यापि भोजनेन प्राणान् रक्षन् पातकी न भवेत् ॥ १३१ ॥

नौकादावन्नादिकमश्नतां न दोष इत्याह करीत्यादिना । करिपृष्ठे हस्तिनः पृष्ठे तथा नौकाग्रामेषु पाषाणेषु दारुषु च तथा दुष्टानां यवनादीनामसंपृक्तेऽपि यवनादीनामिदं भवति यवनादयोऽत्र वर्त्तन्ते

पशूनभक्ष्यमांसांश्च व्याधियुक्तानपि प्रिये ।
न हन्याद्देवतार्थेऽपि हत्वा च पातकी भवेत् ॥ १२३ ॥
कृच्छ्रव्रतं नरः कुर्य्याद् गोवधे बुद्धिपूर्वके ।
अज्ञानादाचरेदर्द्धं व्रतं शङ्करशासनात् ॥ १२४ ॥
न केशवपनं कुर्य्यात् न नखच्छेदनं तथा ।
न क्षारयोगं वसने यावन्न व्रतमाचरेत् ॥ १२५ ॥
उपवासैर्नयेत् मासं मासमेकं कणाशनैः ।
मासं भैक्षान्नमश्नीयात् कृच्छ्रव्रतमिदं शिवे ! ॥ १२६ ॥
व्रतान्ते वापितशिराः कौलान् ज्ञातींश्च बान्धवान् ।
भोजयित्वा विमुक्तः स्याद् ज्ञानगोवधपातकात् ॥ १२७ ॥

एवमविज्ञानेऽपि ज्ञाने यद्वा द्रव्याणां मलमूत्रादीनामकथितेऽपि तत्स्वपि तेषु तेषामविज्ञानेऽपि भक्ष्यदोषो न विद्यते ॥ १२२ ॥

अथ देवतार्थमभक्ष्यमांसान् व्याधियुतांश्च पशूंश्चेद्धतः पातकित्वमाह पशूनित्यादिना । हे प्रिये ! अभक्ष्यमांसान् व्याधियुतांश्च पशून् देवतार्थे न हन्यात् अपीति निश्चितम् । ननु हनने कोदोषस्तत्राह हत्वेति । हत्वा च जनः पातकी भवेत् ॥ १२३ ॥

अथ ज्ञानाज्ञान कृतगोवध प्रायश्चित्तमाह कृच्छ्रेत्यादिना प्रिये इत्यन्तेन । ज्ञानपूर्वके गोवधे सति नरः कृच्छ्रव्रतं कुर्य्यात् । अज्ञानाद्गोवधे सति शङ्करशासनादर्द्धं व्रतमाचरेत् कुर्य्यात् ॥ १२४ ॥

न केशेति । यावद् व्रतं नाचरेत् तावत् केशवपनं केशानां मुण्डनं न कुर्य्यात्, तथा नखच्छेदनं न कुर्य्यात्, वसने वस्त्रे क्षारयोगं च न कुर्य्यात् ॥ १२५ ॥

ननु किं नाम कृच्छ्रव्रतमतस्तन्निरूपयति उपवासैरित्यादिना । हे शिवे ! उपवासैर्मासमेकं नयेत् यापयेत् । मासमेकं कणाशनैर्नयेत्

अपालनवधाद्गोश्च शुध्येद्दष्टोपवासतः ।
बाहुजाद्या विशुध्येयुः पादन्यूनक्रमात् प्रिये ! ॥१३८॥
गजोष्ट्रमहिषाश्वांश्च हत्वा कौलिनि ! कामतः ।
उपवासैस्त्रिभिः शुध्येन्मानवः कृतकिल्बिषः ॥ १३९ ॥
मृगमेषाजमार्जारान् निघ्ननुपवसेदहः ।
मयूरशुककहंसांश्च सज्योतिरशनं त्यजेत् ॥ १४० ॥
निहत्य सास्थिजन्तूंश्च नक्तमद्यात् निरामिषम् ।
निरस्थिजीविनो हत्वा मनस्तापेन शुद्ध्यति ॥ १४१ ॥

मासमेकं च भैक्षान्नं भिक्षासम्पन्नमन्नमश्नीयात् इदं कृच्छ्रव्रतं ज्ञेयम् ॥ १२६ ॥ १२७ ॥

व्रतान्ते इति । व्रतान्ते व्रतसमाप्तौ वापितशिराः मुण्डित-मस्तकः सन् कौलान् ज्ञातीन् सगोत्रांश्च भोजयित्वा ज्ञानगोवधपात-कान्मनो विशुद्धः स्यात् ॥ १२७ ॥

अपालने गोरपालनवधाद्रक्षणतो वधाद्दष्टोपवासतः शुध्येत् । हे प्रिये ! बाहुजाद्याः क्षत्रियादयः पादन्यूनक्रमाद्विशुध्येयुः । क्षत्रि-यादिभिः क्रमतः पादपादन्यूनं व्रतं करणीयमिति भावः ॥ १२८ ॥

अथ गजोष्ट्रादिवधप्रायश्चित्तमाह गजोष्ट्रेत्यादिना । हे कौलिनि ! गजोष्ट्रमहिषाश्वान् हत्वा काममोहत्वात् कृतकिल्बिषो मानवस्त्रिभिरुप-वासैः शुध्येत् ॥ १२९ ॥

अथ मृगमेषादिवधप्रायश्चित्तमाह मृगेत्यादिना । मृगमेषा अजमार्जारान् हरिणादिच्छागबिड़ालान् निघ्नन्नरोऽहरेकदिनमुप-वसेत्, मयूरशुकहंसांश्च निघ्नन्नरो ज्योतिषा सूर्य्येण सह वर्त्तमानं सज्योतिर्दिवाशनं त्यजेत्, दिवसेऽशनं त्यजन्नस्तं याते सूर्य्ये भुञ्जी-तेत्यर्थः । ज्योतिर्नो भास्करेऽग्नौ च क्लीवं खद्योतदृष्टिष्विति वदः ॥ १४० ॥

अथ कृकलासाद्यस्थिनम् क्षुद्रजन्तूनस्थिजन्तूंश्च निघ्नतो नरस्य

पशुमीनाण्डजाविघ्नन् मृगयायां महीपतिः ।
न पापार्हो भवेद्देवि ! राज्ञो धर्मः सनातनः ॥ १४२॥
देवोद्देश्यं विना भद्रे ! हिंसां सर्वत्र वर्जयेत् ।
कृतायां वैधहिंसायां नरः पापैर्न लिप्यते ॥ १४३॥
संकल्पितव्रतापूर्त्तौ देवनिर्माल्यलङ्घने ।
अशुचौ देवतास्पर्शे गायत्रीजपमाचरेत् ॥ १४४॥
माता पिता अन्नदाता महान्तो गुरवः स्मृताः ।

प्रायश्चित्तमाह निहत्येत्यादिना । निरस्थिसाहचर्य्यात् सास्थिजन्तून् स्थितमतः कृकलासादीन् क्षुद्रान् शरीरिणो निहत्य नक्तं रात्रौ निरामिषमामिषवर्ज्जितमद्यात् भुञ्जीत मयूरादिहननापेक्षया कृकलासादिहनने प्रवृत्तेराधिक्यात्तद्धनननिमित्तकदण्डतः कृकलासादिहनननिमित्तकदण्डस्य गुरुत्वमवगन्तव्यम् । निरस्थिजीविनोऽस्थिरहितजन्तून् हत्वा मनस्तापेन शुध्यति ॥ १४१ ॥

ननु मृगयायां मृगमीनादीन्निघ्नतो महीपालस्य मृगादिवधहेतुकं पापं भवेन्न वेति पृच्छन्तीं प्रत्याह पश्वित्यादिना । हे देवि ! पशुमीनाण्डजान् मृगव्याघ्रादिमत्स्यपक्षिणो मृगयायां निघ्नन् महीपतिः पापार्हो न भवेत् यतोऽयं राज्ञः सनातनो नित्यो धर्मो भवति ॥ १४२ ॥

अथाऽवैधहिंसायाः पापजनकत्वादकर्त्तव्यत्वमाह देवेत्याद्यर्द्धेन । हे भद्रे ! भद्रकारिणि देवोद्देश्यं कर्म विना सर्वत्र हिंसां वर्जयेत् वैधहिंसायाः पापाऽजनकत्वात् कर्त्तव्यतामाह कृतायामित्याद्यर्द्धेन । वैधहिंसायां कृतायां सत्यां नरः पापैर्न लिप्यते ॥ १४३ ॥

ननु सङ्कल्पितं व्रतमसमापयतो देवनिर्माल्यं लङ्घयतोऽशौचापगमे देवताः स्पृशतश्च पुंसः कथं शुद्धिरित्याह सङ्कल्पितेत्यादिना सङ्कल्पितव्रतापूर्त्तौ सङ्कल्पितस्य व्रतस्यासमाप्तौ देवनिर्माल्यलङ्घने परिच्छिन्नाशौचे देवतास्पर्शे च गायत्रीजपमाचरेत् ॥ १४४ ॥

पिबंस्तोयाञ्जलिमेकं भवन्नपि क्षुधोदयम् । [illegible]
मानवः प्रायश्चित्तार्थं न भ्रश्येदुपवासतः ॥ [illegible] ॥
उपवासासमर्थश्चेद्रुजा वा जरयापि वा ।
तदा प्रत्युपवासञ्च भोजयेद्द्वादश द्विजान् ॥ १५१ ॥
परनिन्दां निजोत्कर्षं असत्यानुक्तभाषणम् ।
अयुक्तं कर्म कुर्वाणो मनस्तापैर्विशुध्यति ॥ १५२ ॥
अन्यानि यानि पापानि ज्ञानाज्ञानकृतान्यपि ।
नश्यन्ति जपनाद्देव्याः सावित्र्याः कौलभोजनात् ॥ १५३ ॥

आदिना । तपनोदयं सूर्योदयमारभ्य यावदेकं प्रहरार्द्धं यद्भोजनं स उपवासो विज्ञेयः प्रायश्चित्ते स विधीयते क्रियते ॥ १४९ ॥

अथ एकाञ्जलितोयपानेनोपवासस्याविनाशित्वं कथयन्नाह पिब-न्निति । प्रायश्चित्तार्थमेकं तोयाञ्जलिं पिबन् क्षुधोदयं वायु चापि भवन्मानवः उपवासतो न भ्रश्येत्, एकाञ्जलितोयपानादुपवासो न विन-श्येदिति तत्त्वम् ॥ १५० ॥

अथ रोगादिनोपवासं कर्त्तुमशक्नुवता जनेन प्रत्युपवासं द्वादश ब्राह्मणा भोजयितव्या इत्याह उपवासेत्यादिना । रुजा रोगेण वा जरया जीर्णत्वेन वा चेद्यदि उपवासासमर्थो नरः स्यात् तदा प्रत्यु-पवासमुपवासं प्रति द्वादश द्विजान् ब्राह्मणान् भोजयेत् ॥ १५१ ॥

अथ परनिन्दां निजोत्कर्षमात्मोत्कर्षं असत्यानुक्तभाषणं परी-वादादिरूपं कथनम् अयुक्तमनुचितं कर्म च कुर्वाणो नरो मनस्तापै-र्विशुध्यति ॥ १५२ ॥

अथ ज्ञानाज्ञानकृतान्यपापानां गायत्रीजपात् कौलानां भोज-नाच्च विनाश इत्याह अन्यानीत्यादिना । ज्ञानाज्ञानाभ्यां कृतान्य-न्यपि यानि पापानि तानि सावित्र्याः [illegible] गायत्र्या देव्या जपनात् कौलानां भोजनाच्च नश्यन्ति ॥ १५३ ॥

सामान्यनियमात् पुंसां स्त्रीषु षण्ढेषु योजयेत् ।
योषितान्तु विशेषोऽयं पतिरेको महागुरुः ॥ १५४ ॥
महारोगान्विता ये च ये नराश्चिररोगिणः ।
सर्वदानेन पूताः स्युर्दैवे पैत्रेऽधिकारिणः ॥ १५५ ॥
अपघातमृतेनापि दूषितं विद्युदग्निना ।
गृहं विशोधयेद्धोमैर्व्याहृत्या शतसंख्यकैः ॥ १५६ ॥
वापीकूपतडागेषु सास्थ्नां शवनिरीक्षणात् ।
उद्धृत्य कुणपं तेभ्यस्ततस्तान् परिशोधयेत् ॥ १५७ ॥
पूर्णाभिषेकमन्त्रैर्वाभिमन्त्रितैः शुद्धवारिभिः ।

अथ पुरुषाणां साधारणनियमाः स्त्रीषु नपुंसकेष्वपि योजयितव्या इत्याह सामान्येत्यादिना । पुंसां पुरुषाणां सामान्यनियमान् स्त्रीषु षण्ढेषु नपुंसकेषु च योजयेत् योषितां स्त्रीणान्तु पतिरेको महागुरुः इत्ययं विशेषः ॥ १५४ ॥

अथ कुष्ठादिमहारोगान्वितचिररोगिणोरपि सुवर्णदानेन पूतत्वमधिकारित्वमाह महारोगेत्यादिना । ये नरा महारोगान्विता ये च चिररोगिणस्ते सर्वदानेन पूताः सन्तो दैवे पैत्रे च कर्मणि अधिकारिणः स्युः ॥ १५५ ॥

अथापघातमृतेन विद्युदग्निना च दूषितगृहस्य कथं शुद्धिस्तदाह अपघातेत्यादिना । अपघातमृतेनापघातप्राप्तमृत्युना सर्पव्याघ्रोद्बन्धनादिजातमरणेनेति यावत्, विद्युदग्निना चापि दूषितं गृहं व्याहृत्या भूरादया शतसंख्यकैर्होमैर्विशोधयेत् ॥ १५६ ॥

अथास्थिशवादिदूषितवापीकूपादीनां सामान्यतः शोधनमाह वापीत्यादिना । वापीकूपतडागेषु सास्थ्नामस्थिमतां शवनिरीक्षणात् कुणपदर्शनात्तेभ्यो वाप्यादिभ्यः कुणपं शवमुद्धृत्य ततस्तान् वाप्यादीन् परिशोधयेत् ॥ १५७ ॥

पूर्वोक्तसप्तकुम्भैस्तान् प्लावयेदिति शोधनम् ॥ १५८ ॥
यदि स्वल्पजलास्ते स्युः शवदुर्गन्धिदूषिताः ।
सपङ्कं सलिलं सर्वमुद्धृत्याप्लावयेत्तु तान् ॥ १५९ ॥
सन्ति भूरीणि तोयानि गजदघ्नानि तेषु च ।
शतकुम्भजलोद्धारैरभिषेकेण शोधयेत् ॥ १६० ॥
यद्येवं शोधिता न स्युस्तत्स्पृष्टजलाशयाः ।
अपेयसलिलास्तेषां प्रतिष्ठामपि नाचरेत् ॥ १६१ ॥
स्नानमेषु जलैरेषां कुर्वन् कर्म वृथा भवेत् ।
दिनमेकं विनाहारः शुध्येत् पञ्चामृताशनात् ॥१६२॥

कथं शोधयेदित्याकाङ्क्षायां शोधनप्रकारमाह पूर्वोक्तादिना । पूर्णाभिषेकमनुभिः पूर्णाभिषेकस्य मन्त्रैर्मन्त्रितैः शुद्धवारिभिः पवित्रजलैः पूर्वोक्तसप्तकुम्भैरेकविंशतिघटैस्तान् वाप्यादीन् प्लावयेत् इति शोधनं अयं शोधनप्रकारः ॥ १५८ ॥

अथाल्पजलत्वगजमितबहुजलत्वाभ्यां वाप्यादीनां भेदेनैव शोधनविशेषमाह यदीत्यादिना श्लोकद्वयेन । शवदुर्गन्धदूषितास्ते वाप्यादयो यदि स्वल्पजलाः स्युस्तदा तेभ्यः सपङ्कं सर्वं जलमुद्धृत्योक्तप्रकारेण तानाप्लावयेत् ॥ १५९ ॥

सन्तीति । तेषु वाप्यादिषु चेत् यदि गजदघ्नानि हस्तिपरिमाणानि भूरीणि बहूनि तोयानि जलानि सन्ति तदा शतकुम्भजलोद्धारैरेकविंशतिकुम्भजलैरभिषेकेण च तान् शोधयेत् ॥ १६० ॥

अथाशोधितवाप्यादीनामपेयजलत्वं प्रतिष्ठानर्हत्वञ्चाह यदीत्यादिना । शवस्पृष्टजलाशयाः शवस्पृष्टा वाप्यादयो यद्येवं शोधिता न स्युस्तदा तेऽपेयसलिला भवन्ति तेषामशोधितवाप्यादीनां प्रतिष्ठामपि नाचरेन्न कुर्य्यात् ॥ १६१ ॥

अथाशोधितवाप्यादिजलैः स्नानादिकं कुर्वतो दण्डं प्रा

याचकं धनिनं दृष्ट्वा वीरं युद्धपराङ्मुखम् ।
दूषकं कुलधर्माणां मद्यपाश्च कुलस्त्रियम् ॥ १६३ ॥
मित्रद्रोहकरं मर्त्यं स्वयं पापरतं बुधम् ।
पश्यन् सूर्यं स्मरन् विष्णुं सचेलः स्नानमाचरेत् ॥ १६४ ॥
खरकुक्कुटकोलांश्च विक्रीणन्तो द्विजातयः ।
नीचवृत्तिं चरन्तोऽपि शुध्येयुस्त्रिदिनव्रतात् ॥ १६५ ॥
दिनमेकं निराहारो द्वितीयं कणभोजनः ।
अपरन्तु नयेद्भिक्षास्त्रिदिनव्रतमम्बिके ! ॥ १६६ ॥

चित्तं क्रियमाणस्य कर्मणो निष्फलत्वमाह स्नानमित्यादिना । एवं शोधितवाप्यादिषु स्नानं कुर्वन् तथैषां जलैरन्यत्र कर्म कुर्वन् नरो दिनमेकं निराहारः सन् पञ्चामृतपानात् शुध्येत् क्रियमाणं कर्म च तथा भवेत् ॥ १६२ ॥

अथ दृष्टधनिकयाचकयुद्धपराङ्मुखवीरादिकस्य पुंसः प्रायश्चित्तमाह याचकमित्यादिश्लोकद्वयेन । याचकं भिक्षुकं धनिनं दृष्ट्वा तथा युद्धपराङ्मुखं रणभीरुकं वीरं शूरं कुलधर्माणां दूषकं जनं कुलस्त्रियश्च मद्यपां मित्रद्रोहकरं मर्त्यं स्वयं पापरतं बुधं पण्डितं च दृष्ट्वा सूर्यं पश्यन् विष्णुं स्मरन्नरः सचेलः सवस्त्रः स्नानमाचरेत् ॥ १६३ । १६४ ॥

ननु गर्दभादीन् विक्रीणतां नीचवृत्तिं च कुर्वतां द्विजातीनां कथं शुद्धिरित्यत आह खरेत्यादिना । खरकुक्कुटकोलान् गर्दभचरणायुधसूकरान् विक्रीणन्तो नीचवृत्तिमपि चरन्तः कुर्वन्तो द्विजातयो ब्राह्मणादयः त्रिदिनव्रतात् शुध्येयुः ॥ १६५ ॥

ननु किं त्रिदिनव्रतमत आह दिनमित्यादिना । निराहारः सन् दिनमेकं नयेत् यापयेत् कणभोजनः सन् द्वितीयं दिनं नयेत् अपरन्तु

इहामुत्रार्थदं धर्म्मं पावनं हितकारकम् ॥ १७० ॥

इति श्रीमहानिर्व्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्व्वधर्म्मनिर्णय-
सारे श्रीमदाद्यासदाशिवसंवादे अपराधि-
जनकर्म्मप्रायश्चित्तकथनं
नाम एकादशोल्लासः ।

प्रकरणार्थमुपसंहरन्नाह इहेत्यादिना । हे देवि ! वारांवृषार्थं न्यायादपि नार्थं परात्परस्तत्वाद्युत्तमं इहामुत्रार्थदमिहलोके पर-लोके च फलदं धर्म्मं धर्म्मादनपेतं पावनं पवित्रताकारकं हितकारकमे-तदिदं ते तुभ्यं कथितम् । धान्यो यत्ने स्विरोधे च न्याय्ये क्लीबं वरे लि-ङ्गित्यमरः । अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिष्वित्यमरः ॥ १७० ॥

इति श्रीमहानिर्व्वाणतन्त्रटीकायामेकादशोल्लासः ।

---

## अथ द्वादशोल्लासः

श्रीसदाशिव उवाच ।

भूयस्ते कथयाम्याद्ये ! व्यवहारान् सनातनान् ।
यान् यान् प्रविदन्राजा स्वच्छन्दं पालयेत् प्रजाः ॥ १ ॥

इदानीं लोकशुभाकाङ्क्षया परमकारुणिको महादेवः सनातन-व्यवहारान् पार्व्वतीं प्रति पुनः कथयितुमारभते भूय इत्यादिना । हे आद्ये ! ते तुभ्यं त्वाद्ये वा तान् सनातनान् शाश्वतान् व्यवहा-रान् भूयः पुनरपि कथयामि यान् व्यवहारान् यत्नात् पालयन् प्रविदन् प्रजानन् राजा स्वच्छन्दं स्वैरं प्रजाः पालयेद्रक्षेत् ॥ १ ॥

नियमेन विना राज्ञो मानवा धनलोलुपाः ।
मिथस्ते विवदिष्यन्ति गुरुस्वजनबन्धुभिः ॥ २ ॥
अतिघ्नन्ति तदा देवि ! स्वार्थिनो वित्तहेतवे ।
पापाश्रया भविष्यन्ति हिंसया च जिहीर्षया ॥ ३ ॥
अतस्तेषां हितार्थाय नियमो धर्म्मसम्मतः ।
नियोज्यते यमाश्रित्य न भ्रश्येयुः शुभान्नराः ॥ ४ ॥
दण्डयेत् पापिनां राजा यथा पापापनुत्तये ।
तथैव विभजेद्दायान् नृणां सम्बन्धभेदतः ॥ ५ ॥
सम्बन्धो द्विविधो ज्ञेयो विवाहाज्जन्मनस्तथा ।

महीपतेर्नियमस्याभावाद्द्रव्याभिलाषिणो मनुजाः पित्रादिभिः सार्द्धं मिथो विवादादिकं करिष्यन्ति तन्निराकरणाय लोकहिताकाङ्क्षः सदाशिवो नियमं विदधातीत्याह नियमेनेत्यादिना शुभान्नराः इत्यन्तेन श्लोकत्रयेण । हे देवि ! यतो राज्ञो नृपस्य नियमेन विना धनलोलुपाः वित्तविषयकलालसावन्तस्ते मानवा मनुष्या गुरुस्वजन-बन्धुभिः सार्द्धं मिथो विवदिष्यन्ति तथा तदा नियमाभावे स्वार्थिनो धनार्थिनस्ते वित्तहेतवे धनार्थं अतिघ्नन्ति परस्परं हनिष्यन्ति जिहीर्षया वित्तहरणेच्छया हिंसया च पापाश्रया भविष्यन्ति अतस्तेषां मानवानां हितार्थाय धर्म्मसम्मतः स नियमो मया नियोज्यते प्रवर्त्यते यं निय-ममाश्रित्य नराः शुभाद्धर्म्मात् भ्रश्येयुर्न पतेयुः अतिघ्नन्तीत्यत्र वर्त्तमा-नसामीप्ये वर्त्तमानवद्वेति भविष्यति लट् ॥ २ । ३ । ४ ॥

नन्वविद्यमाने यस्मान्मनुष्या भद्राच्च भ्रश्येयुः कोऽसौ नियमस्त-त्राह दण्डयेदित्यादिना । यथा राजा नराधिपः पापापनुत्तये किल्बि-षनाशाय पापिनो जनान् दण्डयेत्तथैव नृणां मनुष्याणां सम्बन्धभेदतो दायान् विभवान् विभजेत् विभक्तान् कुर्य्यात् । दायो दाने धने इति [illegible] दातरि ॥ ५ ॥

विवाहजन्मभ्यां दायविभागोपयोगिनः सम्बन्धस्य द्वैविध्य

तत्रौद्वाहिकसम्बन्धादपरो बलवत्तरः ॥ ६ ॥
दायेतूर्ध्वतनाज्ज्यायान् सम्बन्धोऽधस्तनः प्रिये ! ।
अध-ऊर्ध्वक्रमादेव पुमान् मुख्यतरः स्मृतः ॥ ७ ॥
तत्रापि सन्निकर्षेण सम्बन्धो दायमर्हति ।
अनेन विधिना धीरा विभजेयुः क्रमाद्धनम् ॥ ८ ॥
मृतस्य पुत्रे पौत्रे च कन्यासु पितरि स्थिते ।
भार्य्यायामपि दायार्हः पुत्र एव न चापरः ॥ ९ ॥

सम्बन्धो मन्त्राद्वैयस्तत्र वैवाहिकसम्बन्धतो जननसम्बन्धस्य प्राबल्यं तिपादयति सम्बन्ध इत्यादिना । विवाहात्तथा जन्मनः उत्पत्तेः सम्बन्धो द्विविधो द्विप्रकारको ज्ञेयो बोद्धव्यः। तत्र तयोः सम्बन्धयो-र्वैवाहिकसम्बन्धादपरो जननसम्बन्धो बलवत्तरो ज्ञेयः ॥ ६ ॥

दायहरणे ऊर्ध्वतनसम्बन्धतोऽधोभवस्यैव सम्बन्धस्य ज्येष्ठत्वमध-ऊर्ध्वक्रमतो योषिद्भ्यः पुरुषस्यैव प्रधानतरत्वं चाह दाये त्वित्यादिना । हे प्रिये ! दाये तु धने तूर्ध्वतनादूर्ध्वभवात् सम्बन्धादधस्तनोऽधोभवः सम्बन्धो ज्यायान् श्रेष्ठः स्मृतः तृप्त्यादेर्नाभिवादनादाद्यधस्तनात् सम्बन्धा-दूर्ध्वतनस्यैव सम्बन्धस्य ज्यायस्त्वमिति ध्वनितम् । अत्र दायहरणेऽध-ऊर्ध्वक्रमात् स्त्रीतः पुमान् पुरुषो मुख्यतरः प्रधानतरः स्मृतः ॥ ७ ॥

सम्बन्धस्थानाधस्तनयोर्मध्ये कतरस्य दायार्हत्वं स्यात् तत्राह तत्रा-पीति । तत्रापि मुख्यतरेषु पुंस्वपि सन्निकर्षेण सान्निध्येन सम्बन्धो दायमर्हति धनार्हो भवति अनेन पूर्व्वोक्तेन विधिना धीरा मनीषिणो धनं क्रमाद्विभजेयुर्व्वण्टयेयुः ॥ ८ ॥

ननु प्राप्तपञ्चत्वस्य पुंसो विद्यमानानां पत्नीकन्यानां ताततनय-पौत्राणाञ्च मध्ये कतमस्य तद्धनग्राहकत्वमत आह मृतस्येत्यादिना । मृतस्य मानवस्य पुत्रे पौत्रे पितरि च स्थिते कन्यास्वात्मजासु च स्थितासु भार्य्यायां पत्न्यामपि स्थितायां सन्निकृष्टत्वात् पुंस्त्वेन मुख्यत-रत्वादधोभवत्वेन ज्यायस्त्वाच्च पुत्र एव दायार्हः स्यात् नापर

बहवस्तनया यत्र सर्व्वे तत्र समांशिनः ।
ज्येष्ठे राज्याधिकारित्वं तत्तु वंशानुसारतः ॥ १० ॥
ऋणं यत् पैतृकं तच्च शोधयेत् पैतृकैर्धनैः ।
तस्मिन् स्थिते विभागार्हं न भवेत् पैतृकं वसु ॥ ११ ॥
विभज्य यदि गृह्णीयुर्विभवं पैतृकं नराः ।
तेभ्यस्तदृणमाहृत्य पितॄणां दापयेन्नृपः ॥ १२ ॥

भिन्नः पौत्रादिर्दायार्हः पौत्रस्य पुत्रतो विप्रकृष्टत्वात् भार्य्यायाः कन्यानां च स्त्रीत्वेनाप्रधानत्वात् पितुश्चोर्द्ध्वभवत्वेनाज्यायस्त्वाद्दायार्हत्वं नेत्यर्थः ॥ ९ ॥

ननु बहुपुत्रस्य प्रमीतस्य पृथ्वीपतेः स्थावरे स्थावरेतरद्रव्ये च सर्वेषामात्मजानां समांशहारित्वं न्यूनाधिकांशहारित्वं वेत्यत आह बहव इत्यादिना । राज्ञो यत्र स्थावरे जङ्गमे वापि द्रव्ये बहवः तनयाः पुत्रा भागार्हास्तत्र सर्वे समांशिनस्तुल्यभागिनः स्युर्न तु न्यूनाधिकांशिन इत्यर्थः । ननु महीपतेर्ज्येष्ठ एवात्मजे प्रायशो राज्याधिकारित्वं श्रूयते दृश्यते च तत् कथमुच्यते सर्वे तत्र समांशिन इत्यत आह ज्येष्ठे राज्ञः पुत्रे यद्राज्याधिकारित्वं तत्तु वंशानुसारतो ज्ञेयम् । वंशे यदि ज्येष्ठ एव राजपुत्रो राज्यं लभमानो भवेत्तदा तस्यैव राज्याधिकारित्वम् । अन्येषां ग्रासाच्छादनमात्रम्, अन्यथा तु पृथ्व्यादिकं सकलं द्रविणं विभज्य सर्वे गृह्णीयुरिति भावः ॥ १० ॥

पैतृकमृणं दत्त्वाऽवशिष्टं पितृद्रव्यं भ्रातृभिर्विभक्तव्यमित्याह ऋणमित्यादिना । पैतृकं पितृसम्बन्धि यदृणं तत् पैतृकैः पितृसम्बन्धिभिर्धनैः शोधयेत् तस्मिन्नृणे स्थिते सति पैतृकं वसु धनं विभागार्हं वर्त्तनयोग्यं न भवेत् ॥ ११ ॥

पैतृकमृणमशोधयित्वैव विभज्य गृहीततातद्रव्यैस्तैर्नराधिपस्तदृणं दापयेदित्याह विभज्येत्यादिना । पैतृकं विभवं धनं विभज्य

यथा स्वकृतपापेन निरयं यान्ति मानवाः ।
ऋणेनापि तथा बद्धः स्वयमेव न चापरः ॥ १३ ॥
साधारणं धनं यच्च स्थावरं स्थावरेतरम् ।
अंशिनः प्राप्नुमर्हन्ति स्वं स्वमंशं विभागतः ॥ १४ ॥
अंशिनां सम्मतावेव विभागः परिसिद्ध्यति ।
तेषामसम्मतौ राजा समदृष्ट्यांशमाचरेत् ॥ १५ ॥
स्थावरस्य चरस्यापि विभागानर्हवस्तुनः ।
मूल्यं वा तदुपसत्वमंशिनां विभजेन्नृपः ॥१६ ॥

रा यदि गृहीतुस्तदा तेभ्यो नरेभ्यस्तत् पैतृकं धनमाहृत्य गृहीत्वा
ृपो राजा पितृणं तातसम्बन्ध्यृणं तेऽर्पयेत् ॥ १२ ॥

ऋणानयने ऋणपरिशोधस्तु तदृणोपभागित्वमाह यथे-
त्यादिना । यथा स्वकृतपापेन मानवा नरा निरयं नरकं यान्ति तथा
ऋणेनापि स्वयमेव बद्धो भवति न चापरस्तदन्यः कश्चन बद्धो
भवेत् ॥ १३ ॥

सामान्ये स्थावरे जङ्गमे च द्रव्ये सर्वेषामेव दायादानां तुल्यां-
शभाक्त्वमित्याह साधारणमित्यादिना । स्थावरं स्थावरेतरं जङ्गमं
। यत् साधारणं सामान्यं तत्र विभागतः सर्वेऽंशिनः स्वं स्वमंशं
प्राप्तुं लब्धुमर्हन्ति योग्या भवन्ति ॥ १४ ॥

सर्वेषामंशिकानां मिथः सम्मतौ सत्यामेव विभागस्य संसिद्धिः
स्यादित्याह अंशिनामित्याद्यर्द्धेन । अंशिनां भागभाक्कानां सम्मता-
वेव सत्यां विभागः परिसिद्ध्यति निष्पद्यते न त्वन्यथा । ननु पैतृक-
द्रव्यविभागे सर्वेषां दायादानां सम्मतेरभावे कथं विभागो भवेत्तत्राह
तेषामित्यादिना । तेषामंशिनामसम्मतौ सत्यां राजा समदृष्ट्या तुल्य-
दृष्ट्या अंशं भागमाचरेत् कुर्यात् ॥ १५ ॥

ननु विभागायोग्यस्य स्थावरादेर्वस्तुनः कथं विभागः स्यादत
आह स्थावरस्येत्यादिना । स्थावरस्य चरस्य जङ्गमस्यापि विभागान-

विभक्तेऽपि धने यस्तु स्वीयांशं प्रतिपादयेत्।
पुनर्विभज्य तद्द्रव्यमप्राप्तांशाय दापयेत् ॥ १७ ॥
कृते विभागे द्रव्याणामंशिनां सम्मतौ शिवे।
पुनर्विवादयंस्तत्र शास्यो भवति भूभृतः ॥ १८ ॥
स्थिते प्रेतस्य पौत्रे च भार्य्यायाञ्च पितर्य्यपि।
पौत्र एव धनार्हः स्यादधस्ताज्जन्मगौरवात् ॥ १९ ॥

र्घस्तुनो विभाजनायोग्यस्य पदार्थस्य मूल्यमथवा तदुपस्वत्वं तदतिरिक्तं तत्र एवोपजातं द्रव्यं नृपो राजा अंशिनां दायादानां विभजेत् तेभ्यो दापयित्वं विभक्तं कुर्य्यात्। अंशिनामिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी शेषे इति षष्ठी ॥ १६ ॥

अथांशिभिर्विभज्य गृहीतेष्वपि द्रव्येषु स्वकीयं भागं साक्षिभिर्न्नं पश्चात् ज्ञापयते मानवाय राजा पुनस्तानि द्रव्याणि विभज्य तैर्द्दापयेदित्याह विभक्तेऽपीत्यादिना। विभक्तेऽपि वण्टितेऽपि धने यस्तु मनुष्यः स्वीयांशमात्मीयं भागं प्रतिपादयेत् पश्चात् साक्षिभिर्वोधयेत् तस्मै अप्राप्तांशाय मनुष्याय पुनस्तत् द्रव्यं विभज्य नृपो दायादैर्द्दापयेत् ॥ १७ ॥

सर्वेषां दायानां सम्मतौ सत्यां द्रव्यविभागे जाते पुनस्तत्र विवादं कुर्व्वन्नरो महीपालेन शासनीयो भवेदित्याह कृत इत्यादिना। हे शिवे! अंशिनां सम्मतौ सत्यां द्रव्याणां विभागे कृते सति पुनस्तत्र द्रव्यविभागे विवादयन् विवादं कुर्व्वन्नरो भूभृतो राज्ञः शास्यः शासनीयो भवति ॥ १८ ॥

ननु प्रमीतस्य मानवस्य विद्यमानानां तातभार्य्यापौत्राणां मध्ये कस्य तद्धनभागित्वमत आह स्थिते इत्यादिना। प्रेतस्य मृतस्य मनुष्यस्य पौत्रे पितरि चापि स्थिते भार्य्यायां च स्थितायामधस्ताज्जन्म येषां तेषां गौरवाद्गुरुत्वाद्धेतोः पौत्र एव धनार्हो धनयोग्यः स्यात् ॥ १९ ॥

तत्रौद्वाहिकसम्बन्धादपरो बलवत्तरः ॥ ६ ॥
दायेतूर्द्ध्वतनात्त्वाधास्तु सम्बन्धोऽधस्तनः प्रिये ! ।
अध-ऊर्द्ध्वक्रमादत्र पुमान् मुख्यतरः स्मृतः ॥ ७ ॥
तत्रापि सन्निकर्षेण सम्बन्धो दायमर्हति ।
अनेन विधिना धीरा विभजेयुः क्रमाद्धनम् ॥ ८ ॥
मृतस्य पुत्रे पौत्रे च कन्यासु पितरि स्थिते ।
भार्य्यायामपि दायार्हः पुत्त्र एव न चापरः ॥ ९ ॥

भावनाख्यो महादेवस्तत्र वैवाहिकसम्बन्धतो जननसम्बन्धस्य प्राबल्यं प्रतिपादयति सम्बन्ध इत्यादिना । विवाहात्तथा जन्मनः उत्पत्तेः सम्बन्धो द्विविधो द्विप्रकारको ज्ञेयो बोद्धव्यः। तत्र तयोः सम्बन्धयोरौद्वाहिकसम्बन्धादपरो जननसम्बन्धो बलवत्तरो ज्ञेयः ॥ ६ ॥

दायहरणे ऊर्द्ध्वतनसम्बन्धतोऽधोभवस्यैव सम्बन्धस्य ज्येष्ठत्वमध-ऊर्द्ध्वक्रमतो योषिद्भ्यः पुरुषस्यैव प्रधानतरत्वं चाह दाये त्वित्यादिना । हे प्रिये ! दाये तु धने तूर्द्ध्वतनादूर्द्ध्वभवात् सम्बन्धादधस्तनोऽधोभवः सम्बन्धो ज्यायान् श्रेष्ठः स्मृतः तुशब्देनाभिवादनादावधस्तनात् सम्बन्धादूर्द्ध्वतनस्यैव सम्बन्धस्य ज्यायस्त्वमिति ध्वनितम् । अत्र दायहरणेऽध-ऊर्द्ध्वक्रमात् स्त्रीतः पुमान् पुरुषो मुख्यतरः प्रधानतरः स्मृतः ॥ ७ ॥

सम्बन्धजनानामनयोर्मध्ये कतरस्य दायार्हत्वं स्यात् तत्राह तत्रापीति । तत्रापि मुख्यतरेषु पुंस्वपि सन्निकर्षेण सान्निध्येन सम्बन्धो दायमर्हति धनार्हो भवति अनेन पूर्व्वोक्तेन विधिना धीरा मनीषिणो धनं क्रमाद्विभजेयुर्व्वण्टयेयुः ॥ ८ ॥

ननु प्राप्तपञ्चत्वस्य पुंसो विद्यमानानां पत्नीकन्यानां ताततनयपौत्राणाञ्च मध्ये कतमस्य तद्धनग्राहकत्वमत आह मृतस्येत्यादिना । मृतस्य मानवस्य पुत्रे पौत्रे पितरि च स्थिते कन्यास्वात्मजासु च स्थितासु भार्य्यायां पत्न्यामपि स्थितायां सन्निकृष्टत्वात् पुंस्त्वेन मुख्यतरत्वादधोभवत्वेन ज्यायस्त्वाच्च पुत्र एव दायार्हः न तु चापरः

बहवस्तनया यत्र सर्व्वे तत्र समांशिनः ।
ज्येष्ठे राज्याधिकारित्वं तत्तु वंशानुसारतः ॥ १० ॥
ऋणं यत् पैतृकं तच्च शोधयेत् पैतृकैर्धनैः ।
तस्मिन् स्थिते विभागार्हं न भवेत् पैतृकं वसु ॥ ११ ।
विभज्य यदि गृह्णीयुर्विभवं पैतृकं नराः ।
तेभ्यस्तद्धनमाहृत्य पितृणां दापयेन्नृपः ॥ १२ ॥

स्त्रियः पौत्त्रादिदृह्यार्हैः पौत्त्रस्य पुत्त्रतां विप्रकृष्टत्वात् भार्य्याया कन्यानां च स्त्रीत्वेनाप्रधानत्वात् पितृयोर्द्ध भवत्वेनाजग्रायस्याहृायाईत्व नेत्यर्थः ॥ ६ ॥

ननु बहुपुत्त्रस्य प्रमीतस्य पृथ्वीपतेः स्थावरं स्थावरेतरद्रव्यं सर्वेषामात्मजानां समांशहारित्वं न्यूनाधिकांशहारित्वं वेत्यत आह बहव इत्यादिना । राज्ञो यत्र स्थावरे जङ्गमे वापि द्रव्ये बहव तनयाः पुत्रा भागार्हास्तत्र सर्वे समांशिनस्तुल्यभागिनः स्युर्न तु न्यूनाधिकांशिन इत्यर्थः । ननु महीपतेर्ज्येष्ठ एवात्मजो प्रायशो राज्याधिकारित्वं श्रूयते दृश्यते च तत् कथमुच्यते सर्वे तत्र समांशिन इत्यत आह ज्येष्ठे राज्ञः पुत्त्रे यद्राज्याधिकारित्वं तत्तु वंशानुसारतो ज्ञेयम् । वंशे यदि ज्येष्ठ एव राजपुत्रो राज्यं लभतामे भवेत्तदा तस्मिन्नेव राज्याधिकारित्वम् । अन्येषां ग्रासाच्छादनभाजनत्वम्, अन्यथा तु पृथ्व्यादिकं सकलं द्रविणं विभज्य सर्वे गृह्णीयुरिति भावः ॥ १० ॥

पैतृकमृणं दत्त्वाऽवशिष्टं पितृद्रव्यं भ्रातृभिर्विभक्तव्यमित्याह ऋणमित्यादिना । पैतृकं पितृसम्बन्धि यदृणं तत् पैतृकैः पितृसम्बन्धिभिर्धनैः शोधयेत् तस्मिन्नृणे स्थिते सति पैतृकं वसु धनं विभागार्हं वण्टनयोग्यं न भवेत् ॥ ११ ॥

पैतृकमृणमशोधयित्वैव विभज्य गृह्णीततातद्रव्यमेतन्नैरादिभिः पितृणां दापयेदित्याह विभज्येत्यादिना । पैतृकं विभवं धनं विभज्य

अपुत्रस्य स्थिते ताते सोदरे च पितामहे ।
जन्मतः सन्निकर्षेण पितैवास्य धनं हरेत् ॥ २० ॥
विद्यमानासु कन्यासु सन्निकृष्टास्वपि प्रिये ।
मृतस्य पौत्रो धनभाक् यतो मुख्यतरः पुमान् ॥ २१ ॥
धनं मृतेन पुत्रेण पौत्रं याति पितामहात् ।
अतोऽत्र गीयते लोकैः पुत्ररूपः स्वयं पिता ॥ २२ ॥
औद्वाहिकेऽपि सम्बन्धे ब्राह्मी भार्य्या वरीयसी ।
अपुत्रस्य हरेद्रिक्थं पत्युर्द्देहार्द्धहारिणी ॥ २३ ॥

नन्वपुत्रस्य मृतस्य पुंसो वर्त्तमानानां जनकपितामहसमानोदर्य्याणां मध्ये कतमस्य तद्धनहारित्वमत आह अपुत्रस्येत्यादिना । अपुत्रस्य मृतस्य जनस्य ताते पितरि सोदरे भ्रातरि पितामहे च स्थिते सति जन्मतः सन्निकर्षेण सान्निध्येन हेतुनाऽस्याऽपुत्रस्य धनं पितैव हरेत् गृह्णीयात् ॥ २० ॥

कन्यातिरिक्तस्यासन्नतरास्वपि कन्यासु स्थितासु पुंसः प्रधानतरत्वात् पौत्रस्यैव धनभागित्वमित्याह विद्यमानास्वित्यादिना । हे प्रिये ! मृतस्य पुरुषस्य विद्यमानासु सन्निकृष्टास्वासन्नास्वपि कन्यासु यतः पुमान् पुरुषो मुख्यतरः प्रधानतरो भवेदतः पौत्र एव धनभाग् भवेत् ॥ २१ ॥

अधुना पितुरेव सर्व्वेषां पुत्ररूपत्वं व्याहरन् पुत्रहीनस्य मृतस्य पुंसः पौत्रस्यैव धनाधिकारित्वमनुवदति धनमित्यादिना । यतो धनं पितामहात् सकाशात् मृतेन पुत्रेण पौत्रं याति गच्छति अतोऽत्र संसारे लोकैर्जनैः पिता स्वयं पुत्ररूप इति गीयते गद्यते ॥ २२ ॥

इदानीं ब्राह्मीशैवीभार्य्ययोर्मध्ये ब्राह्मयेवातिश्रेष्ठा पुत्ररहितस्य मृतस्य पत्युर्वित्तस्य ग्राहिका चेत्याह औद्वाहिकेऽपीत्यादिना । औद्वाहिकेऽपि विवाहनिमित्तकेऽपि सम्बन्धे ब्राह्मी वेदोक्तविधिना परिणीता भार्य्या शैवभार्य्याया वरीयस्यतिवरा भवेत् पत्युः स्वामिनो

एवं स्थितायां कन्यायामलब्धं पुत्रवधूगतम् ।
तन्मृतौ स्वामिनं प्राप्य श्वशुरात्तत्सुतामियात् ॥ २१ ॥
तथा पितामहे सत्त्वे वित्तं मातृगतं शिवे ।
तस्यां मृतायां पुत्रेण भर्त्रा श्वशुरमाव्रजेत् ॥ २२ ॥
मृतस्योर्ध्वगतं वित्तं यथा प्राप्नोति तत्पिता ।
जनन्यपि तथाप्नोति पतिहीना भवेद्यदि ॥ २३ ॥
अतः सत्यां जनन्यां तु विमाता न धनं हरेत् ।
मृते जनन्यास्तं प्राप्य पिता गच्छेद्विमातरम् ॥ २४ ॥

अप्राप्तपतिद्रव्याया नार्य्या मृतौ तस्यां तत् द्रव्यं भर्तृगतं ततः श्वशुरगतं च तत् श्वशुरकन्यां यायादित्याह एवमित्यादिना । एवमनेन प्रकारेण कन्यायां स्थितायां सत्यां पुत्रवधूगतमलब्धं धनं तन्मृते पुत्रवधूमरणे सति स्वामिनं तद्भर्त्तारं प्राप्य ततश्च श्वशुरं प्राप्य श्वशुरात् तत्सुतां श्वशुरतनयामियाद्गच्छेत् । तन्मृते इत्यत्र नपुंसके भावे क्त इति सूत्रेण भावे क्त प्रत्ययः । एतच्च भर्तृदुहित्रादिभ्रात्रीयपर्य्यन्ताभावे बोद्धव्यम् ॥ २१ ॥

नन्वप्राप्तपुत्रवित्ताया मातुर्मरणे सति कस्य तद्वित्तभागितेत्यत आह तथेत्यादिना । हे शिवे ! तथा तेनैव प्रकारेण पितामहे सत्त्वे वर्त्तमाने मातृगतं जननीप्राप्तं वित्तं धनं तस्यां मातरि मृतायां सत्यां पुत्रेणात्मजेन भर्त्रा पत्या च श्वशुरगं भवेत् श्वशुरं गच्छेदित्यर्थः । यथैव सत्त्वमिति सार्थिकस्त्वः इदं पुत्रस्य सोदराणां तत्पुत्राणाञ्चाभावे बोध्यम् ॥ २२ ॥

पुत्रादिपितृपर्य्यन्तरहितस्य प्राप्तपत्नीकस्य पुंसो जनकस्य जनन्या अपि द्वितीयपत्नीत्वं तन्मृतौ च तस्य विमातुरपि प्राप्तिरस्तीत्याह मृतस्येत्यादिद्वयेन । मृतस्य जनस्योर्द्ध्वगतमूर्द्ध्वं प्राप्तं वित्तं तत्पिता मृतस्य जनको यथाप्नोति जननी तथैव यदि पतिहीना स्वामिरहिता भवेत् तदा तज्जनन्यप्याप्नोति ॥ २२ ॥

मृतस्य सोदरो भ्राता वैमात्रेयस्तथा प्रिये ।
धनं पितृगतत्वेन विभजेतां समांशिनौ ॥ ३९ ॥
कन्यायां जीवितायाञ्च तदपत्ये न दायभाक् ।
यत्र यद्वाधितं वित्तं तन्मृतौ तत्परं व्रजेत् ॥ ४० ॥
विभजेयुर्दुहितरः पुत्राभावे पितुर्धनम् ।
उद्वाहयन्त्योऽनूढास्तु पितुः साधारणैर्धनैः ॥ ४१ ॥

ननु सोदरायां वैमात्रेयसन्ततौ च विद्यमानायां वैमात्रेयस्य मरणे सति तद्गतं वित्तं का प्राप्नुयादित्यत आह स्थितायामित्यादिना । सोदरायां भगिन्यां विमातुः पुत्रसन्ततौ च स्थितायां सत्यां वैमात्रेयगतं वित्तं तन्मरणे सति वैमात्रेयाग्नयो विमातृजसन्ततिर्भजेत् सेवेत् ॥ ३८ ॥

पुत्रादिपौत्रपर्य्यन्तरहितस्य प्रमीतस्य पुंसः सोदरवैमात्रेययोरुभयोरपि तद्धने समभागित्वमित्याह मृतस्येत्यादिना । हे प्रिये ! मृतस्य जनस्य सोदरो भ्राता तथा वैमात्रेयश्चोभौ तद्धनस्य पितृगतत्वेन हेतुना तत्र समांशिनौ सन्तौ तद्धनं विभजेतां विभज्य गृह्णीयातामित्यर्थः ॥ ३९ ॥

जीवन्त्यां कन्यायां तदपत्यस्य दायभागित्वं नेत्याह कन्यायामित्यादिना । कन्यायां जीवितायां सत्यां तदपत्यं दायभाङ्नभवेत्, किन्तु कन्यैव दायभागिनी स्यादित्यर्थः । यत्र जने यद्वित्तं धनं वाधितं भवेत् तन्मृतौ तस्य बाधकजनस्य मरणे सति तद्वित्तं तत्परं जनं व्रजेत् ॥ ४० ॥

अपरिणीतां भगिनीं साधारण्येनोद्वाहयन्त्यो दुहितरो मृतस्याऽपुत्रस्य पितुर्द्धनं सर्वां विभज्य गृह्णीयुरित्याह विभजेयुरित्यादिना । पितुः पुत्राभावे सति पितुः साधारणैः धनैरनूढामपरिणीतां पितुः पुत्रीमुद्वाहयन्त्यो दुहितरः पितुर्धनन्तु तद्धनं विभजन्तु । तदभावेन पितामहीप्रभृतयोऽपि विभजेत् ॥ ४१ ॥

पितृव्यात् सन्निकर्षेऽपि तुल्यौ भ्रातृपितामहौ ।
धनं पितृपदं गत्वा प्रयातुर्भ्रातरं भजेत् ॥ ४६ ॥
स्थितेऽप्यपत्ये दुहितुः प्रेतस्य पितरि स्थिते ।
दुहित्रपत्यं धनभाग् धनं यस्मादधोमुखम् ॥ ४७ ॥
स्वःप्रयातुः स्थिते ताते तथा मातरि कालिके ।
पुंसो मुख्यतरत्वेन धनहारी भवेत् पिता ॥ ४८ ॥
स्थितः स्वपितृसापिण्डो वर्त्तमानेऽपि मातुले ।
प्रेतस्य धनहारी स्यात् पितुः सम्बन्धगौरवात् ॥ ४९

जीवति सति अधोभवानां जनानां मुख्यत्वात् प्रधानत्वाद्धेतोर्भ्रातैव धनभाग् भवेत् मृतात् पुत्रात् पितृगतं धनं मृतस्य भ्रातैव भजेदित्यर्थः ॥ ४५ ॥

पितृव्यादिति । अत्र लोके पितृव्यात् सन्निकर्षे सामीप्ये यद्यपि भ्रातृपितामहौ तुल्यौ समानौ भवतस्तथाप्यधोभवानां मुख्यत्वात् स्वः प्रयातुर्जनस्य धनं पितृपदं गत्वा भ्रातरं भजेत् ॥ ४६ ॥

ननु पुत्रादिपुत्रीपर्य्यन्तहीनस्य मृतस्य पुंसो विद्यमानयोस्तात दुहित्रपत्ययोर्मध्ये कतरस्य तद्धनभाक्त्वमत आह स्थित इत्यादिना । प्रेतस्य मृतस्य जनस्य पितरि स्थिते दुहितुरपत्येऽपि स्थिते सति यस्माद्धनमधोमुखं स्यात्ततो दुहित्रपत्यमेव धनभाग् भवेत् ॥ ४७ ॥

प्रेतस्य पुंसो जीवतोर्मातापित्रोर्मध्ये पुरुषस्य प्रधानत्वात् पितुरेव तद्धनहारित्वमित्याह स्वः प्रयातुरित्यादिना । हे कालिके ! स्वः प्रयातुर्मृतस्य जनस्य ताते पितरि स्थिते सति तथा मातरि स्थितायां सत्यां पुंसो मुख्यतरत्वेन हेतुना पिता धनहारी भवेत् ॥ ४८ ॥

ननु मृतस्य पुंसो विद्यमानयोर्मातुलपितृसपिण्डयोर्मध्ये कतरस्य तद्धनभागित्वमत आह स्थित इत्यादिना । मातुले वर्त्तमानेऽपि पितुः सम्बन्धस्य गौरवाद्धेतोः स्थितः स्वपितृसापिण्डः प्रेत

अतः सत्कुलजां कन्यां शैवैरुद्वाहयन्पिता ।
क्रोधाद्वा लोभतो वापि स भवेल्लोकगर्हितः ॥ ६१ ॥
शैवी तदन्वयाभावे सोदको मस्करी नृपः ।
हरेयुः क्रमतो वित्तं मृतस्य शिवशासनात् ॥ ६२ ॥
पिण्डदात् सप्तपुरुषाः सपिण्डाः कथिताः प्रिये ।
सोदका दशमान्ताः स्युस्ततः केवलगोत्रजाः ॥ ६३ ॥

शैव्याः स्त्रियाः पित्रादीनां धनेऽधिकारो नास्त्यतः शैवोद्वाहं प्रकुर्वन्तीं तां चेद्यदि सौम्यामव्यभिचारिणीं जानीयात्तदा शैवभर्त्तैव पालयेत् रक्षेत् । जानीयादिति त्वध्याहारलभ्यम् । प्रकुर्वन्तीमित्यत्र नुमागमः त्वार्षः ॥ ६० ॥

अथ शैवेन विधिना सत्कुलजां कन्यामुद्वाहयतो जनकस्य लोकनिन्द्यत्वं दर्शयितुमाह अत इत्यादिना । अतो ब्राह्मणत्वे मातापित्रोः सपिण्डे वा स्थिते भर्त्तुर्द्रव्ये स्वपित्रादिद्रव्ये चाधिकारस्याभावाद्धेतोः क्रोधाद्वा लोभतो वापि शैवैर्विधिभिः सत्कुलजां वह्वयजातां कन्यामुद्वाहयन् यः स पिता लोकगर्हितो लोकनिन्दितो भवेत् ॥ ६१ ॥

पुत्त्रादिशैवीसन्ततिपर्य्यन्तरहितस्य प्राप्तपञ्चत्वस्य पुरुषस्य स्थावरादिसकलद्रव्ये तु सोदकस्य वेदाध्यापकगुरोर्नरपतेश्च क्रमतोऽधिकारित्वमित्याह शैवीत्यादिना । शैवी तदन्वयाभावे सति सोदको मस्करी वेदाध्यापकः गुरुः नृपो राजा च मृतस्य वित्तं धनं शिवशासनात् शिवाज्ञातः क्रमतो हरेयुः यथा शैवी तदन्वयाऽसत्त्वे प्रथमतः सोदको मृतस्य वित्तं हरेत्, तदभावे वेदाध्यापकः तदसत्त्वे तु राजा चेति ॥ ६२ ॥

ननु केषां सपिण्डत्वं केषां सोदकत्वं केवलगोत्रजत्वं च केषामत आह पिण्डदादित्यादिना । हे प्रिये ! पिण्डदात् पिण्डदातारं पुरुषमारभ्य सप्तपुरुषाः सपिण्डाः कथिताः तत आरभ्य दशमान्ताः

विभक्तं द्रविणं यत्र संसृष्टं स्वेच्छया तु चेत् ।
अविभक्तविधानेन भजेरंस्तद्धनं पुनः ॥ ६४ ॥
अविभक्ते विभक्ते वा यस्य यादृग्विभागिता ।
मृतेऽपि तस्य दायादास्तादृग्विभवभागिनः ॥ ६५ ॥
ये यस्य धनहर्त्तारो भवेयुर्जीवनावधि ।
दद्युः पिण्डं तएवास्य शैवभार्य्यासुतं विना ॥ ६६ ॥
लोकेऽस्मिन् जन्मसम्बन्धाद् यथाशौचं विधीयते ।
धनभागित्वसम्बन्धात् त्रिरात्रं विहितं तथा ॥ ६७॥

दशमपुरुषान्ताः सोदकाः स्युः ततः परं केवलगोत्रजा भवेयुः । पिण्डदादिति ल्यब्लोपे कर्मणीति कर्मणि पञ्चमी ॥ ६३ ॥

विभक्तस्य पश्चात् स्वेच्छया संसृष्टस्य द्रव्यस्याविभक्तविधानेनैव पुनर्विभागमाह विभक्तमित्यादिना । चेद्यदि विभक्तं यत् द्रविणं द्रव्यं स्वेच्छया संसृष्टं मिश्रीकृतं स्यात्तदा तद्धनं पुनरविभक्तविधानेन दायादा भजेरन् ॥ ६४ ॥

जीवतो यस्य पुरुषस्य विभक्ताऽविभक्ताखिलद्रव्येषु येषां यादृग्विभागित्वं तस्य मरणेऽपि तत्र तेषां तादृग्विभागित्वं स्यादेवेत्याह अविभक्ते इत्यादिना । यस्य पुरुषस्याविभक्ते विभक्ते वा द्रव्ये येषां दायादानां यादृग्विभागिता स्यात्तस्य पुंसो मृतेऽपि मरणेऽपि ते दायादास्तादृग्विभवभागिनो भवेयुः ॥ ६५ ॥

मृतस्य यस्य पुंसो द्रविणं ये लभेरंस्ते यावज्जीवनं तस्मै पिण्डं दद्युरित्याह ये इत्यादिना । ये पुमांसो यस्य पुंसो धनहर्त्तारो भवेयुस्तएव जीवनावधि जीवनपर्य्यन्तमस्य पुरुषस्य पिण्डं दद्युः परन्तु शैवभार्य्यासुतं विना तस्य तत्पिण्डदानेऽधिकारो नास्तीत्यर्थः । शैवभार्य्यासुतमिति शैव्यास्तद्दुहित्रादीनां चोपलक्षणम् ॥ ६६ ॥

यथा जन्मसम्बन्धात् सर्वेषां बान्धवानां मरणजननिमित्तकम-

पूर्णेऽशौचेऽथवाऽपूर्णे तत्कालाभ्यन्तरे मृतौ ।
अवशाच्छेषदिवसैर्विशुध्येयुर्द्विजातयः ॥ ६८ ॥
कालातीते तु विज्ञाते सर्वेऽशौचं न विद्यते ।
पूर्वं त्रिरात्रं विहितं न चेत् संवत्सरात् परम् ॥ ६९ ॥
वर्षातीतेऽपि चेन्मातुः पितुर्वा मरणश्रुतौ ।
त्रिरात्रमशुचिः पुत्रस्तथा भर्तुः पतिव्रता ॥ ७० ॥

शौचं जायते एवं धनभागित्वसम्बन्धाज्ञनकादिनामपि त्रिरात्रमशौचं स्यादित्याह लोके इत्यादिना । जन्मसम्बन्धाभावात् लोके जने मरणजननिमित्तकमशौचं विधीयते तथा धनभागित्वसम्बन्धाज्जनके- ऽप्यपि त्रिरात्रमशौचं विहितम् । लोकः स्याद्भुवने जने इत्य- मरः ॥ ६७ ॥

तच्छौचकालाभ्यन्तर एव पूर्णे खण्डे वाऽशौचे मृततावपर- देशस्थानां ब्राह्मणादीनामशौचसम्बन्धासरादवशिष्टैर्देवाशौचवासरै- र्विशुद्धिः स्यात्तद्वासरमारभ्यापरैर्वा दशाहादिभिरित्याशङ्क्याह पूर्णे इत्यादिना । पूर्णेऽशौचेऽथवाऽपूर्णे खण्डेऽशौचे तत्कालाभ्यन्त- रेऽशौचकालमध्ये मृते सति अवशाद्दशौचसम्बन्धिदिवसावशेषदिवसै- रवशिष्टैरहोरात्रैर्द्विजादयो ब्राह्मणादयो विशुध्येयुः मृतेऽपिशिष्टेति अवशं तस्मात् । करणाधिकरणयोश्चेत्यधिकरणे ल्युट् ॥ ६८ ॥

तच्छौचकालव्यपगमे सति संवत्सराभ्यन्तर एव ज्ञातिमरणं शृण्वन्तो ब्राह्मणादयः कियद्भिरहोरात्रैर्विशुध्येयुरत आह काला- तीते इत्यादिना । कालातीते तच्छौचकालातिक्रमणे तु सर्वेऽशौचे विज्ञाते सत्यशौचं न विद्यते चेद्यदि संवत्सरात्पूर्वात् परमूर्ध्वं कालाति- मतीतं न भवेत्तदा अतीतेऽप्यशौचकाले पूर्वेऽशौचे विज्ञाते सति त्रिरात्र- मशौचं विहितम् । कालस्यातीतं कालातीतमिति अतीतं शब्देन षष्ठीतत्पुरुषः । अतीतमित्यतिपत्त्यादिषु भावे क्तः । मासत्रये त्रिरात्रं स्यात् व्यतीतेषु दिनेष्वपीति देवलवचनात् मरणादिविषयमिदं वचनम् ॥६९॥

यो यस्य धनहर्त्ता स्यात् स तद्धर्मानपि पालयेत् ।
संरक्षेन्नियमान् तस्य तद्बन्धून् परितोषयेत् ॥ ८० ॥
कानीना गोलकाः कुण्डाः ऽतिपातकिनश्च ये ।
नाशौचं मरणे तेषां नैव दायाधिकारिता ॥ ८१ ॥
लिङ्गच्छेदो दमो येषां यासां नासानिकृन्तनम् ।
महापातकिनाञ्चापि मृतौ नाशौचमाचरेत् ॥ ८२ ॥
नृणामुद्देशहीनानां परिवारान् धनान्यपि ।
पालयेद्रक्षयेद्राजा यावद्द्वादशवत्सरम् ॥ ८३ ॥

चेद्यदि भ्रातृपुत्रोऽपि दत्तो भवेत्तदा सर्वेषु कर्मसु ग्रहीतैव तस्य पिता भवेत् उत्पादको जनकस्तु तस्य पितृव्यः स्यात् ॥ ७९ ॥

धनहारिणा पुरुषेण धनस्वामिनो धर्मा नियमाश्च संरक्षणीयास्तद्बान्धवाश्च सन्तोषणीया इत्याह य इत्यादिना । यः पुमान् यस्य पुंसो धनहर्त्ता स्यात् स तस्य धर्मानपि पालयेत् तस्य नियमांश्च संरक्षेत् तस्य बन्धूनपि परितोषयेत् ॥ ८० ॥

कानीनगोलकादीनां दायाधिकारित्वं तेषां मरणेऽशौचं च नेत्याह कानीना इत्यादिना । ये कानीनाः पितृवेश्मन्यप्रदत्तायां कन्यायोत्पादिताः ये च गोलका मृते भर्त्तरि जाराज्जाताः ये च कुण्डा जीवत्येव पत्यौ जारजाः ये चोक्तलक्षणा अतिपातकिनस्तेषां मरणेऽशौचं न स्यात् तेषां दायाधिकारिता च नैव स्यात् । अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः इत्यमरः ॥ ८१ ॥

नासाकर्त्तनदण्डकापराधकर्त्रीणां स्त्रीणां लिङ्गच्छेदनदण्डकापराधकारिणां महापातकिनाञ्च पुंसामपि मृतावशौचं नाचरणीयमित्याह लिङ्गच्छेदन इत्यादिना । येषां पुरुषाणां लिङ्गच्छेदः शिश्नकर्त्तनं दमो दण्डो विहितस्तेषां यासां नासानिकृन्तनं नासिकाकर्त्तनं दण्डस्तासां स्त्रीणां महापातकिनां ब्रह्मघातकादीनाञ्चापि मृतौ मरणेऽशौचं नाचरेन्न कुर्यात् ॥ ८२ ॥

द्वादशाब्दे गते तेषां दर्भदेहान् विदाहयेत् ।
त्रिरात्रान्ते तत्सुताद्यैः प्रेतत्वं परिमोचयेत् ॥ ८४ ॥
ततस्तत्परिवारेभ्यः पुत्रादिक्रमतो धनम् ।
विभज्य नृपतिर्दद्यादन्यथा पातकी भवेत् ॥ ८५ ॥
न कोऽपि रक्षिता यस्य दीनस्यापद्गतस्य च ।
तस्यैव नृपतिः पाता यतो भूपः प्रजाप्रभुः ॥ ८६ ॥
यथागमोऽस्त्यनुद्दिष्टो विभागान्तेऽपि कालिके । ।

अनुद्दिष्टानां मनुष्याणां परिवारान् धनानि च द्वादशवर्षपर्यन्तं
[illegible]ाज्ञा रक्षितव्यानीत्याह नष्टानामित्यादिना । उद्देशहीनानामनुद्दि-
ष्टानां नष्टानां मनुष्याणां परिवारान् यावत् द्वादशवत्सरं द्वादशवर्ष-
पर्यन्तं राजा पालयेत्, तेषां धनान्यपि स एव रक्षयेत् ॥ ८३ ॥

द्वादशवर्षादूर्द्ध्वमनुद्दिष्टानां पुंसां कुशमयानि शरीराणि राज्ञा
तत्पुत्रादिभिर्दाहयितव्यानि त्रिरात्रान्ते तेषां प्रेतत्वञ्च मोचयितव्यमि-
त्याह द्वादशाब्द इत्यादिना । द्वादशाब्दे द्वादशवर्षे गते याते सति
[illegible]उद्देशहीनानां नष्टानां दर्भदेहान् कुशशरीराणि राजा तत्सुताद्यै-
रनुद्दिष्टानां पुत्रादिभिर्विदाहयेत्, त्रिरात्रान्ते तेषां प्रेतत्वञ्च तैरेव
परिमोचयेत् ॥ ८४ ॥

ततः परमुद्देशरहितजनस्वामिकं द्रव्यं विभज्य पुत्रादिक्रमत-
स्तत्परिवारेभ्यो नृपतिर्दद्यात् । नन्वेवमकुर्वतो नरपतेः को दोषो-
[illegible]त आह अन्यथेति । अन्यथा एतदकुर्वन्नृपतिः पातकी भवेत् ॥ ८५ ॥

विपत्तिं प्राप्तोऽनन्यरक्षको मर्त्यो राज्ञैव पालनीय इत्याह न
कोऽपीत्यादिना । आपद्गतस्य विपत्तिं प्राप्तस्य दीनस्य दरिद्रस्य यस्य
[illegible]कः कोऽपि रक्षिता न विद्यते तस्य नृपतिरेव पाता रक्षकः स्यात्,
यतो भूप एव प्रजानां प्रभुः स्वामी भवेत् । निःस्वस्तु दुर्विधो दीनो
दरिद्रो दुर्गतोऽपि च इत्यमरः ॥ ८६ ॥

स्वार्जितं स्थावरधनमस्थावरधनञ्च यत्।
अस्थावरं पैतृकञ्च दातुं सर्व्वं क्षमो भवेत्॥ ८१॥
धनमेवं विधानेन दत्तं वा धर्म्मसात्कृतम्।
पुंसा तदन्यथा कर्त्तुं पुत्राद्यैर्नैव शक्यते॥ ८२॥
धर्म्मार्थं स्थापितं रिक्थं दाता रक्षितुमर्हसि।
न प्रभुः पुनरादातुं धर्म्मो ह्यस्य यतः प्रभुः॥ ८३॥
मूलं वा तदुपस्वत्वं यथासङ्कल्पमम्बिके!।
स्वयं वा तत्प्रतिनिधिर्धर्म्मार्थं विनियोजयेत्॥ ८४॥

सति पत्न्यां भार्य्यायामथवा कन्यायां दुहितरि स्थितायां तत्सुते कन्यापुत्रे वा जनके पितरि वा स्थिते जनन्यां मातरि स्थितायामेव भ्रातरि सोदरे स्थिते स्वसर्य्यपि भगिन्यामपि स्थितायां स्वार्जितमात्मोपार्जितं यत् स्थावरं धनं यच्चास्थावरधनं जङ्गम-द्रव्यं यच्च पैतृकमप्यस्थावरं धनं तत् सर्वं दातुं पुमान् क्षमः समर्थो भवेत्॥ ८०। ८१॥

शङ्करोक्तेन विधानेन पुरुषेण दत्तं धर्मार्थं स्थापितं च द्रव्यं तत् पुत्रादिभिर्न्यथा कर्त्तुं शक्यमित्याह धनमित्यादिना। पुंसा पुरुषेणैवं विधानेन शिवोक्तेनैतादृशेन विधिना यत् धनं दत्तं यद्वा धर्मसात् कृतं धर्माधीनं कृतं धर्मार्थं स्थापितमिति यावत् तत् धनं पुत्राद्यैरन्यथा कर्त्तुं नैव शक्यते॥ ८२॥

धर्मार्थस्थापितद्रव्यस्य धर्मस्वामिकत्वाद्दातुः पुनरग्राह्यत्वं तद्रक्षकत्वञ्चाह धर्मार्थमित्यादिना। धर्मार्थं स्थापितं यद्रिक्थं धनं तद्रक्षितुं दाताऽर्हति तत् धनं पुनरादातुं ग्रहीतुं दाता न प्रभुरधिपः यतोऽस्य धनस्य हीति निश्चितो धर्मः प्रभुः स्वामी॥ ८३॥

मूलधनं तदुपस्वत्वं वाऽऽत्मनाऽऽत्मप्रतिनिधिना वा यथासङ्कल्पं धर्मार्थं विनियोजयितव्यमित्याह मूलमित्यादिना। हे अम्बिके! यथासङ्कल्पं सङ्कल्पमनतिक्रम्य मूलं वा धनं तदुपस्वत्वं वा तत्प्रति

स्वोपार्ज्जितधनस्यार्द्धं दायादायापि चेत् धनी ।
दद्यात् स्नेहेन तस्यान्यो नान्यथा कर्त्तुमर्हति ॥ ९५ ॥
यदि स्वोपार्ज्जितस्यार्द्धमेकस्मै धनहारिणाम् ।
दद्यात्तदन्यैर्दायादैः प्रतिरोद्धुं न शक्यते ॥ ९६ ॥
एकेन पितृवित्तेन यत्र वित्तमुपार्ज्जितम् ।
पित्र्ये समांशा दायादा न लाभार्हा विनार्जकम् ॥ ९७
पैतृकाणि च वित्तानि नष्टान्युद्धारयेत्तु यः ।

निधिरात्मनः प्रतिनिधिर्वा धर्मार्थं विनियोजयेत् मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिः ॥ ९४ ॥

ननूपार्ज्जकजनेन प्रेमतो दायहारिणेऽपि दत्तं स्वोपार्ज्जितद्रव्य-स्यार्द्धमन्यः पुमानन्यथा कर्त्तुमर्हति न वेत्यत आह स्वोपार्ज्जितधनस्ये-त्यादिना । धनी पुमांश्चेद्यदि स्नेहेन प्रेम्णा स्वोपार्ज्जितधनस्यार्द्धं दायादायापि धनहारिणेऽपि दद्यात्तदान्यो जनस्तत्स्नेहेन स्वोपा-र्ज्जितधनार्द्धमन्यथा कर्त्तुं नार्हति न योग्यो भवति । इतोऽनन्तरं वक्ष्य-माणस्य वचनस्य बह्वंशिविषयत्वात् द्व्यंशिविषयकमिदं वचनम् ॥ ९५ ॥

ननु बहूनां दायादानामेकस्मै दीयमानं स्वोपार्ज्जितधनस्यार्द्धमन्ये दायादाः प्रतिरोद्धुं शक्नुवन्ति न वेत्यत आह यदीत्यादिना । यद्यर्जको धनहारिणां दायादानां मध्ये एकस्मै धनहारिणे स्वोपा-र्जितस्य द्रव्यस्यार्द्धं ददाति तदान्यैर्दायादैः प्रतिरोद्धुं वारयितुं न शक्यते ॥ ९६ ॥

ननु पैतृकद्रविणेनोपार्जिते वित्ते सर्वे दायादा भागार्हा भवे-युर्न वेत्याशङ्कायामाह एकेनेत्यादिना । यत्र येषु दायादेषु मध्ये एकेन दायादेन येन पितृवित्तेन पैतृकेण धनेन वित्तं समुपा-र्जितं ते सर्वे दायादास्तस्मिन् पित्र्ये पैतृके वित्ते समांशाः समभा-गिनः स्युः तदर्जकं विना लाभार्हास्तु न स्युः किन्त्वर्जक एकैव लाभार्ह इत्यर्थः ॥ ९७ ॥

दायादानां तदन्येभ्य उद्धर्त्ता द्व्यंशमर्हति ॥९८॥
पुत्त्रं वित्तं च विद्या च नाश्रयेदशरीरिणम्।
शरीरन्तु पितुर्यस्मात् किन्न स्यात् पैतृकं वसु ॥९९॥
पृथग्गतैः पृथग्भिन्नैर्मनुजैर्यदुपार्जितम्।
सर्वं तत् पितृसंक्रान्तं तदा स्वोपार्जितं कुतः?॥१००॥
अतो महेशि! स्वायासैर्येन यत् धनमर्जितम्।
स्वोपार्जितं तदेव स्यात् स तत्स्वामी न चापरः॥१०१॥

विनष्टानि पैतृकाणि द्रव्याण्युद्धरतो जनस्य तत भागद्वयहा-रित्वमन्यथा तु समभागित्वमित्याह पैतृकाणीत्यादिना। दायादानां मध्ये यस्तु दायादो नष्टेऽपि नाशेऽपि सति पैतृकाणि वित्तान्युद्धा-रयेत् स उद्धर्त्ता तदन्येभ्यो द्व्यंशं भागद्वयमर्हति अन्ये तु समभागं लभन्त इत्यर्थः॥ ९८॥

वपुषः पैतृकत्वेन वपुसदाश्रितानां विद्यावित्तादीनामपि पैतृक-त्वसत्त्वात् पृथगवस्थैरपि मनुष्यैस्तैरेवोपार्जितानां सर्वेषां धनानां पितृसम्बन्धिता न चायाम् स्वोपार्जितत्वं न विरुद्धतो निजायासै-रर्जितानां धनद्रव्याणां स्वोपार्जितत्वमर्जकमात्रस्वामिकत्वञ्च ज्ञातव्य-मित्येतदेवाह पुत्त्रमित्यादिना न चापरः इत्यन्तेन श्लोकत्रयेण। पुत्त्राद्यतोः पुत्त्रं धर्मं वित्तं धनं च विद्या शास्त्रादितत्त्वज्ञानं अशरीरिणमदेहिनं नाश्रयेन्नावलम्बेत्, किन्तु शरीरिणमेवाश्रयेत् शरीरन्तु पितुः पितृसम्बन्धि भवति। अतः किं वसु धनं पैतृकं पितृसम्बन्धि न भवेदपि तु सर्वं वसु पैतृकमेव स्यात्॥ ९९॥

पृथग्गतैरिति। अतः पृथगवस्थैर्विभिन्नभक्तैः पृथग्भिन्नैर्विभक्तधनै-रपि मनुजैर्मनुष्यैर्यदुपार्जितं तत्सर्वं पितृसंक्रान्तं पितृसम्बन्ध-जातं तदा स्वोपार्जितं धनं कुतो भवेत्, धनस्य स्वोपार्जितत्वं न वक्तुमिति भावः॥ १००॥

अत इति। हे महेशि! अतो हेतोः स्वायासैरात्मपरिश्रमैर्येन

मातरं पितरं देवि ! गुरुं चैव पितामहान् ।
मातामहान् करेणापि प्रहरन्नैव दायभाक् ॥ १०२ ॥
निघ्नन्नन्यानपि प्राणैर्न तेषां धनमाप्नुयात् ।
हतानामन्यदायादा भवेयुर्धनभागिनः ॥ १०३ ॥
नपुंसकाः पङ्गवश्च ग्रासाच्छादनमर्हिणः ।
यावज्जीवनमर्हन्ति न ते स्युर्दायभागिनः ॥ १०४ ॥
सस्वामिकं प्राप्तधनं पथि वा यत्र कुत्रचित् ।
नृपस्तत् स्वामिने प्राप्तां दापयेत् सुविचारयन् ॥ १०५ ॥

पृथगन्नादिनाऽपृथगन्नादिना वा पुंसा यत् धनमर्ज्जितं तदेव धनं स्वोपार्जितं स्यात् । सोऽर्जक एव तत्स्वामी स्वोपार्ज्जितस्य धनस्य प्रभुर्न चापरोऽर्ज्जकभिन्नः स्वामी ॥ १०१ ॥

मात्रादीन् पाणिनापि प्रहरतो मानवस्य दायभागित्वं नैव स्यादित्याह मातरमित्यादिना । हे देवि ! मातरं जननीं पितरं जनकं गुरुं मन्त्रोपदेष्टारं बहुवचनस्य बहुप्रकारकत्वात् पितामहान् पितामहादीन् मातामहांश्चापि मातामहादीनपि करेण पाणिनापि प्रहरन्नरो दायभाङ्नैव भवेत् । अपि शब्देन दण्डादिना मात्रादीन् प्रहरतस्तु सुतरामेव दायभागित्वं न भवेदिति सूचितम् ॥ १०२ ॥

भ्रात्रादीनपि धनार्थं मारयतः पुरुषस्य हतस्वामिकद्रव्ये निरंशकत्वमपरदायादानाञ्च समांशकत्वं स्यादित्याह निघ्नन्नित्यादिना । अन्यानपि जनान् प्राणैर्निघ्नन्मारयन्नरस्तेषां हतानां धनं नाप्नुयान्न लभेत किन्तु हतानामन्ये हन्तुर्भिन्ना दायादा धनभागिनो भवेयुः ॥ १०३ ॥

अथाऽनंशानां पङ्गुक्लीवानां यावज्जीवनं ग्रासाच्छादनभागित्वं स्यादित्याह नपुंसका इत्यादिना । हे अम्बिके ! जगज्जननि ! नपुंसकाः पङ्गवश्च यावज्जीवनं जीवनपर्य्यन्तं केवलं ग्रासाच्छादनमर्हन्ति ते दायभागिनो न स्युः ॥ १०४ ॥

अस्वामिकानां जीवानामस्वामिकधनस्य च ।
प्राप्ता तत्र भवेत् स्वामी दशमांशं नृपेऽर्पयेत् ॥ १०६ ॥
स्थावरं धनमध्यक्षे स्थिते सान्निध्यवर्त्तिनि ।
योग्ये क्रेतरि विक्रेतुं न शक्तः स्थावराधिपः ॥ १०७ ॥
सान्निध्यवर्त्तिनां ज्ञातिः सवर्णो वा विशिष्यते ।
तयोरभावे सुहृदो विक्रेत्रिच्छा गरीयसी ॥ १०८ ॥

ननु पथ्यादौ लब्धस्य अस्वामिकद्रव्यस्य प्राप्तृजनगामित्वं स्यादात्मस्वामिगामित्वं वेत्यत आह अस्वामिकमित्यादिना । पथि मार्गे यत्र कुत्रचिद्वा स्थाने अस्वामिकं प्राप्तं धनं सुविचारयन् पश्चात् स्वामिने प्राप्तधनस्यापि पतये प्राप्त्रा पुंसा दापयेत् ॥ १०५ ॥

ननु अस्वामिकाः प्राप्ता गवाश्वादयो जीवास्तादृशानि प्राप्तानि धनानि च प्राप्तारं पुमांसं गच्छेयुर्वसुधाधिपं वेत्याशङ्कायामाह अस्वामिकानामित्यादिना । अस्वामिकानां स्वामिरहितानां जीवानां गवाश्वादीनामस्वामिकस्य धनस्य च प्राप्ता जनस्तत्र तेषु प्राप्तेषु स्वामी भवेत् तत्र च दशममंशं प्राप्ता नृपेऽर्पयेद्दद्यात् । जीवानामिति धनस्येति च कर्तृकर्मणोः कृतीति कर्मणि षष्ठी ॥ १०६ ॥

ननु स्थावरद्रव्यस्वामिना दूरस्थं योग्यसमीपस्थयोः क्रायकयोर्मध्ये कतरस्मै स्थावरं धनं विक्रेतुं शक्यते तत्राह स्थावरमित्यादिना । सान्निध्यवर्त्तिनि समीपस्थायिनि योग्ये क्रयार्हे क्रेतरि क्रायके स्थिते सत्यन्यस्मै दूरवर्त्तिने पुंसे स्थावरं धनं विक्रेतुं स्थावराधिपो जनः शक्तो न भवेत्, किन्तु सान्निध्यवर्त्तिने एव विक्रेतुं शक्नुयादित्यर्थः । सन्निधिरेव सान्निध्यम् । चतुर्वर्णादीनां स्वार्थे उपसंख्यानमिति स्वार्थे ष्यञ् ॥ १०७ ॥

ननु अनेकेषां सन्निधिवर्त्तिनां मध्ये कतमस्य स्थावरद्रव्यक्रयणे वैशिष्ट्यमत आह सान्निध्येत्यादिना । सान्निध्यवर्त्तिनां मध्ये ज्ञातिर्ज्ञातको विशिष्यते, सवर्णः समानवर्णो वा विशिष्यते, तयोर्ज्ञातिसवर्णयोरभावे सुहृदो मित्राणि विशिष्यन्ते । ननु बहूनां मोलजानां

निर्णीतमूल्येऽप्यन्येन स्थावरस्य क्रयोद्यमे ।
तन्मूल्यं चेत् समीपस्थो राति क्रेता न चापरः ॥ १०९ ॥
मूल्यं दातुमशक्तश्चेत् सम्मतो विक्रयेऽपि वा ।
सन्निधिस्थस्तदान्यस्मै दत्त्वा शक्तोऽस्ति विक्रये ॥ ११० ॥
क्रीतं चेत् स्थावरं देवि ! परोक्षे प्रतिवासिनः ।
श्रवणादेव तन्मूल्यं दत्त्वासौ प्राप्तुमर्हति ॥ १११ ॥

सवर्णानां सुहृदाञ्च मध्ये कतमस्मै स्थावरं द्रव्यं तत्स्वामी विक्रीणी-तेत्यत आह विक्रेतुरिच्छेति विक्रेतुर्विक्रयकर्त्तुरिच्छा गरीयसी गुरुतरा भवेत् । अतएव तेषां मध्ये यस्मै विक्रेतुमिच्छेत्तस्मै एव विक्रीणी-तेति भावः ॥ १०८ ।

ननु मन्यनिर्णीतमूल्यं स्थावरं वित्तं तन्मूल्यं ददता समीपस्था-यिना क्रीयेत निर्णीतमूल्ये नान्येन चेत्याशङ्कायामाह निर्णीतेत्या-दिना । स्थावरस्य वित्तस्य क्रयोद्यमे सत्यन्येन समीपस्थभिन्नेन पुंसा निर्णीतमूल्येऽपि मूल्ये निर्णीतेऽपि सति तन्मूल्यमन्यनिर्णीतमूल्यक-स्थावरद्रव्यमूल्यं चेद्यदि समीपस्थो जनो राति ददाति तदाऽपरः समीपस्थभिन्नो जनः क्रेता क्रायको न भवेत्, किन्तु समीपस्थ एव मूल्यं दत्त्वा क्रीणीयादित्यर्थः ॥ १०९ ॥

स्थावरधनस्य मूल्यं दातुमशक्नुवति तद्विक्रये सम्मतिं वापि कुर्वति समीपस्थायिनि जने दूरस्थाय तद्विक्रेतुं तत्स्वामी शक्नोतीत्यत आह मूल्यमित्यादिना । सन्निधिस्थः समीपस्थायी जनश्चेद्यदि स्थाव-रस्य मूल्यं दातुमशक्तो भवेत्, तस्य विक्रयेऽपि वा सम्मतः सम्मतिमान् भवेत्, तदा दत्त्वा दत्तस्थोऽन्यस्मै सन्निधिस्थभिन्नाय विक्रये शक्नोति शक्तो भवति ॥ ११० ॥

ननु समीपस्थायिनः परोक्ष एवान्येन क्रीतं स्थावरं वित्तं क्रेतैव प्राप्तुमर्हति तत् श्रुत्वैव तन्मूल्यं ददत् समीपस्थायी वेत्या-शङ्कायामाह क्रीतमित्यादिना । हे देवि ! चेद्यदि प्रतिवासिनः

क्रेता तत्र मठारामान् विनिर्माति भनक्ति वा ।
मूल्यं दत्त्वापि नाप्नोति स्थावरं सन्निधिस्थितः ॥ ११२ ॥
करहीना प्रतिष्ठिता वन्यारण्यातिदुर्गमा ।
अनादिष्टोऽपि तां भूमिं सम्पन्नां कर्त्तुमर्हति ॥ ११३ ॥
बहुप्रयाससाध्यायास्तस्या भूमेर्महीभृते ।
दत्त्वा दशांशं भुञ्जीयात् भूमिस्वामी यतो नृपः ॥ ११४ ॥

सन्निधिस्थायिनो जनस्य परोक्षे स्थावरं द्रव्यमन्येन क्रीतं भवेत् तदा श्रवणादेव तन्मूल्यमन्यक्रीतस्थावरद्रव्यं प्राप्तुं नार्हतीति सूचितम् ॥ १११ ॥

क्रायकजनविनिर्मितमन्दिरारामं तद्भग्नमन्दिरोपवनं वा क्रीतं स्थावरधनं मूल्यं दत्त्वापि समीपस्थायी नाप्तुमर्हतीत्याह क्रेतेत्यादिना । क्रेता जनस्तत्र क्रीते स्थावरे यदि मठारामान् मठाद्युपवनानि च विनिर्माति करोति तत्र विनिर्मितानेव तान् भनक्ति भग्नतामर्हयति वा तदा सन्निधिस्थितो जनो मूल्यं दत्त्वापि स्थावरधनं नाप्नोति न लभते ॥ ११२ ॥

भूमिपालेनानाज्ञापितेनापि पुंसा जलोद्भवा काननोद्भवा च करहीनाखिलाभूमिः सम्पन्ना कर्त्तव्येत्याह करहीनेत्यादिना । वन्या जलोद्भवाऽरण्या काननोद्भवा चातिदुर्गमातएवाऽप्रतिष्ठिताखिलाऽतएव करहीना राजग्राह्यभागरहिता या भूमिस्तां भूमिमनादिष्टोऽपि भूपेनानाज्ञप्तोऽपि पुरुषः सम्पन्नां शस्याढ्यां कर्त्तुमर्हति ; वने जले भवा, वन्यादित्यादिभ्यो यदिति यत् । पयः कीलालममृतं जीवनं भुवनं वनमित्यमरः । अरण्ये भवा आरण्या अरण्याण्ण इति णः ॥ ११२ ॥

अनेकायाससाध्यवन्यारण्यक्षितिजातवस्तुनो दशमांशं भूमिस्वामित्वाद्राज्ञे समर्प्यावशिष्टं सर्वं स्वयं भोक्तव्यमित्याह बह्वित्यादिना । यतो नृपो राजा भूमिस्वाम्यतो बहुप्रयाससाध्याया अनेक-

वापीकूपतडागानां खननं वृक्षरोपणम् ।
परानिष्टकरे देशे न गृहं कर्त्तुमर्हति ॥ ११५ ॥
देवार्थं दत्तकूपादौ तथा स्रोतस्वतीजले ।
पानाधिकारिणः सर्वे सेचनेऽन्तिकवासिनः ॥ ११६ ॥
यत्तोयसेचनाल्लोका भवेयुर्जलकातराः ।
न सिञ्चेयुर्जलं तस्मादपि सन्निधिवर्त्तिनः ॥ ११७ ॥
धनानामविभक्तानामंशिनां सम्मतिं विना ।
तथा निर्णीतवित्तानामसिद्धौ न्यासविक्रयौ ॥ ११८ ॥

परिभ्रमणनिम्नाद्यायासलब्धा वन्यावा चरस्थायाश्च भूमेर्जातस्य वस्तुनो दशांशं दशमांशं महीपतये राज्ञे दत्त्वाऽवशिष्टं सर्वं भुञ्जीत ॥ ११४ ॥

अन्यानामाकाङ्क्षितोत्पादके स्थाने वाप्यादीनां खननं वृक्षाणामारोपणं गेहस्य निर्माणं च न विधेयमित्याह वापीत्यादिना । वाप्यादिखननवृक्षरोपणगृहकरणस्य परानिष्टकरेऽन्यानीप्सितोत्पादके देशे वापीकूपतडागानां खननं तथा वृक्षस्य रोपणं तथा वृक्षस्य रोपणं तथा गृहमपि कर्त्तुं जनो नार्हति ॥ ११५ ॥

देवार्थदत्तकूपादिजले नदीजले च सर्वेषां पानाधिकारिता सेकाधिकारिता तु तन्निकटस्थायिनामेवेत्याह देवार्थमित्यादिना । देवार्थं दत्तकूपादौ तथा स्रोतस्वतीजले नदीवारिणि सर्वे पानाधिकारिणः सेचने त्वन्तिकवासिनो निकटस्थायिन एवाधिकारिणो भवेयुः ॥ ११६ ॥

ननु यत् पानीयसेचनात् तत्समीपस्थायिनो लोका जना व्याकुला भवेयुस्तज्जलं सेचनीयं न वेत्यत आह यत्तोयेत्यादिना । यत्तोयसेचनाद्यस्य कूपादेर्वारिणः सेकाल्लोका जना जलकातराः पानीयव्याकुला भवेयुस्तस्माज्जलं सन्निधिवर्त्तिनोऽपि न सिञ्चेयुः दूरवर्त्तिनान्तु का वार्त्ता ॥ ११७ ॥

दायादा असम्मतयोरविभक्तद्रव्याविभक्तयोर्निर्णीतवर्द्धितद्र

स्थाप्यानां वस्त्रवित्तानां ज्ञानान्नष्टेऽप्ययत्नतः ।
तन्मूल्यं दापयेत्तेन स्वामिने सर्वथा नृपः ॥ ११९ ॥
अभिमत्या स्थापकस्य पश्वादिन्यस्तवस्तुनाम् ।
व्यवहारे कृते तत्र धार्त्री सम्पोषयेत् पशून् ॥ १२० ॥
लाभि नियोजयेत्तत्र स्थावरादीनि मानवः ।
नियमेन विना लाभालाभयोरन्यथा भवेत् ॥ १२१ ॥

न्यासविक्रययोश्च सिद्धत्वं न भवेदित्याह धनानामित्यादिना । स्वामिनां दायादानां सम्मतिं विना अविभक्तानां धनानां न्यासविक्रयावपि सिद्धौ न भवेताम् । तथा निर्णीतवित्तानां वित्तानीमान्यस्यैवेति वित्तानीमानीयन्ति चेति निर्णयरहितद्रव्याणां स्थापनविक्रयौ सिद्धौ न स्याताम् ॥ ११८ ॥

यस्मान्न्यस्तद्रव्याणां ज्ञानपूर्वकादयत्नान्नाशो भवेत् तेन पुंसा तन्मूल्यं तत्स्वामिने नृपतिना दापयितव्यमित्याह स्थाप्यानामित्यादिना । ज्ञानादयत्नतो ज्ञानपूर्वकादयत्नात् स्थाप्यानां न्यासवित्तानां वस्त्रवित्तानां नष्टेऽपि नाशेऽपि सति यद्गृहे स्थापितानि वस्त्राणि च वित्तानि नष्टानि तेन पुंसा तन्मूल्यं स्थापितवस्त्रवित्तमूल्यं स्वामिने तद्वित्ताधिपतये नृपो राजा सर्वथा सर्वप्रकारेण दापयेत् ; ज्ञानान्नष्टे-ऽप्ययत्नत इति वदता महर्षिणा तद्रक्षायै यत्नसत्त्वेऽपि कथञ्चित्तन्नाशे सति तन्मूल्यं नृपेण न दापयितव्यमिति सूचयामास ॥ ११९ ॥

स्थापकसम्मत्या न्यस्तपश्वादिवस्तुव्यवहारेणैव पुंसा स्थापिताः पशवः सम्पोषयितव्या इत्याह अभिमत्येत्यादिना । स्थापकस्य द्रव्यस्थापकस्याभिमत्या सम्मत्या पश्वादिन्यस्तवस्तुनां व्यवहारे कृते सति तत्र तेषु न्यस्तवस्तुषु मध्ये पशून् धार्त्री धारकः पुरुषः सम्पोषयेत् । संज्ञापूर्वकविधेरनित्यत्वात् पश्वादिन्यस्तवस्तुनामित्यत्र नामीति न दीर्घत्वम् । स्थापकस्याप्यमित्यत्वात् धार्त्रीत्यत्र धातुकस्य कृत्वा-देरिति नेत्वाभावः ॥ १२० ॥

साधारणानि वस्तूनि लाभार्थं नैव योजयेत् ।
मृते पितरि सर्वेषामंशिनां सम्मतिं विना ॥ १२२ ॥
क्रमव्यत्ययमूल्येन द्रव्याणां विक्रये सति ।
नृपस्तदन्यथा कर्त्तुं क्षमो भवति पार्वति ! ॥ १२३ ॥
जननञ्चापि मरणं शरीराणां यथा सकृत् ।
दानं तथैव कन्याया ब्राह्मोद्वाहः सकृत् सकृत् ॥ १२४ ॥

काललाभयोर्नियमं कृत्वैव यस्मिँल्लाभे स्थावरादिद्रव्याणि प्रयोज्यन्ते तस्य अन्यथात्वं भवेदित्याह लाभे इत्यादिना । काललाभयोर्नियमेन विना यत्र लाभे फले स्थावरादीनि वस्तूनि मानवो नियोजयेत् स लाभोऽन्यथा भवेत् । नीवीपरिपणं मूलधनं लाभोऽधिकं फलमित्यमरः ॥ १२१ ॥

पितुर्मरणादूर्द्ध्वं सर्वभ्रातॄणां सम्मतेरभावे सामान्यद्रव्याणि लाभार्थं नैव प्रयोक्तव्यानीत्याह साधारणानीत्यादिना । पितरि मृते सति सर्वेषामंशिनां सम्मतिं विना साधारणानि सामान्यानि वस्तूनि लाभार्थं फलार्थं नैव योजयेत् ॥ १२२ ॥

विपरीतक्रमकेण मूल्येन स्थावरादिद्रव्याणां जातं विक्रयणमन्यथा कर्त्तुं नृपेण शक्यत इत्याह क्रमेत्यादिना । हे पार्वति ! क्रमस्य व्यत्ययो विपर्ययो यत्र तथाभूतेन मूल्येन द्रव्याणां विक्रये सति स्वल्पमूल्येन भूयिष्ठमूल्यानां भूयिष्ठमूल्येन च स्वल्पमूल्यानां द्रव्याणां विक्रयणे सति तद्विक्रयणमन्यथा कर्त्तुं नृपो नराधिपः क्षमो भवति ॥ १२३ ॥

ननु वेदोक्तविधिभिरेकेनोद्वाहिता कन्या जीवत्येव तस्मिन्मृते वा पुनस्तैरेव विधिभिरन्येनोद्वाह्या भवेन्न वेत्यत आह जननमित्यादिना । यथा शरीराणां जननमुत्पत्तिर्मरणं च्युतिश्चापि सकृदेकवारमेव भवति, तथैव दानं कन्याया ब्राह्मोद्वाहश्च सकृत् सकृदेव भवति, ब्राह्मोद्वाह इति व्याहरता महादेवेनैकेनोद्वाहिताया

नैकपुत्रः सुतं दद्यान्नैकस्त्रीकस्तथा स्त्रियम् ।
नैककन्यः सुतां शैवोद्वाहे पितृहितः पुमान् ॥ १२५ ॥
दैवे पित्र्ये च वाणिज्ये राजद्वारे विशेषतः ।
यद्विदध्यात् प्रतिनिधिस्तन्नियन्तुः कृतिर्भवेत् ॥ १२६ ॥
न दण्डार्हः प्रतिनिधिस्तथा दूतोऽपि सुव्रते ! ।
नियोक्तृकृतदोषेण विधिरेष सनातनः ॥ १२७ ॥
ऋणे क्रये च वाणिज्ये तथा सर्वेषु कर्मसु ।

अपि कन्यायाः शैवविधिभिस्तु पुनरुद्वाहो भवत्येवेति सूचयाम्बभूवे ॥ १२४ ॥

एकपुत्रेणैकस्त्रीकेणैकपुत्रीकेण च पितृहितेन पुंसा पुत्रदानं स्त्रीदानं शैवोद्वाहे कन्यादानञ्च नैव कार्य्यमित्याह नैकपुत्र इत्यादिना । एकपुत्रः पुमान् सुतं पुत्रं कस्मैचित्र दद्यात्, तथैकस्त्रीकः स्त्रियं न दद्यात्, ऐककन्यश्च शैवोद्वाहे सुतां कन्यां न दद्यात्, पुत्रादीनामदाने हेतुं दर्शयन् पुमांसं विशिनष्टि कथम्भूतः पुमान् पितृहितः यतः पितृभ्यो हितोऽतो न दद्यादित्यर्थः ॥ १२५ ॥

प्रतिनिधिना विहितं यद्यद्दैवादिकं कर्म सर्वमात्मनैव विहितं भवेदित्याह दैव इत्यादिना । दैवे पित्र्ये वाणिज्ये च कर्मणि विशेषतो राजद्वारे च प्रतिनिधिर्यद्विदध्यात्तन्नियन्तुः प्रवर्त्तयितुः कृतिर्भवेत् दैवे पित्र्ये वाणिज्ये इति निर्द्धारणे सप्तमी क्रियते इति कृतिः । स्त्रियां क्तिनिति कर्मणि क्तिन् ॥ १२६ ॥

ननु नियन्तृकृतेनापराधेन प्रतिनिधिदूतौ दण्डनीयौ भवेतां वेत्यत आह नेत्यादिना । हे सुव्रते ! शोभनव्रतशालिनि ! नियोक्तृकृतदोषेण नियन्तृविहितापराधेन प्रतिनिधिः तथा दूतश्चापि दण्डार्हो न भवेत् । एष सनातनो नित्यो विधिर्विधानम् ॥ १२७ ॥

यद्यदङ्गीकृतं लोकैस्तत् कार्य्यं धर्म्मसम्मतम् ॥ १२८

अधीशेनावितं विश्वं नाशं यान्ति निनङ्क्षवः ।

तत्पातृन् पाति विश्वेशस्तस्माल्लोकहितो भवेत् ॥१२९

इति श्रीमहानिर्व्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्व्वधर्म्मनिर्णय-
सारे श्रीमदाद्यासदाशिवसंवादे सनातनव्यव-
हारकथनं नाम द्वादशोल्लासः ।

कृषिकृष्यादावन्येषु च सकलकर्मसु निखिलस्याङ्गीकृतस्यावश्यक-
रणीयतामाह कृष इत्यादिना । कृषे कृषौ वाणिज्ये वणिक्क-
र्म्मणि च तथान्येषु सर्व्वेषु कर्म्मसु लोकैर्जनैर्धर्म्मसम्मतं यद्यदङ्गीकृत
तत् सर्व्वं कार्य्यं विधातव्यम् । धर्म्मसम्मतमित्यनेन पापसम्मत
स्वीकृतं सर्व्वथा लोकानामकरणीयमिति ध्वनितम् ॥ १२८ ॥

आत्मनो भद्रमभिलषद्भिर्म्मानवैर्लोकहितैरेव भवितव्यमित्याह
अधीशेनेत्यादिना । यतोऽधीशेन जगदीश्वरेणावितं रक्षितं विश्वं
संसारं निनङ्क्षवो नाशयितुमिच्छवो जनाः स्वयं नाशं यान्ति प्राप्नुवन्ति
तत्पातृन् विश्वपालकांस्तु विश्वेशः पाति रक्षति तस्माद्धेतोर्लोकहितो
जनो भवेत्, मध्यत्वात्सभावितोऽयमर्थः ॥ १२९ ॥

इति श्रीमहानिर्व्वाणतन्त्रटीकायां द्वादशोल्लासः ।

# अथ त्रयोदशोल्लासः ।

इति निगदितवन्तं देवदेवं महेशं
निखिलनिगमसारं स्वर्गमोक्षैकबीजम् ।
कलिमलकलितानां पावनैकान्तचित्ता
त्रिभुवनजनमाता पार्वती प्राह भक्त्या ॥ १ ॥

देव्युवाच ।

महद्योनेराद्यशक्तेर्महाकाल्या महाद्युतेः ।
सूक्ष्मातिसूक्ष्मभूतायाः कथं रूपनिरूपणम् ॥ २ ॥
रूपं प्रकृतिकार्य्याणां सा तु साक्षात् परात्परा ।
एतन्मे संशयं देव ! विशेषाच्छेत्तुमर्हसि ॥ ३ ॥

श्रीसदाशिव उवाच ।

उपासकानां कार्य्याय पुरैव कथितं प्रिये ! ।
गुणक्रियानुसारेण रूपं देव्याः प्रकल्पितम् ॥ ४ ॥

इतीत्यादिना । निगदितवन्तम् कथितवन्तम् कलिमलकलितानां पावनैकान्तचित्ता कलिमलैः संयुक्तानां जनानां पावने दृढ़-भावना ॥ १ ॥

पार्वती महेशं प्रति किमाहेत्यपेक्षायामाह महद्योनेरित्यादिना । महद्योनेः महत्तत्त्वोत्पत्तिस्थानभूतायाः ॥ २ ॥

सा महाकाली एतत् एतम् ॥ २ ॥

अनन्तरं श्रीसदाशिव उवाच । उपासकानामित्यादिभिर्ह्-ऋभिः । हे प्रिये ! उपासकानां जनानां कार्य्याय गुणक्रियानु-

श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते ।
प्रविशन्ति तथा काल्यां सर्वभूतानि शैलजे ! ॥ ५ ॥
अतस्तस्याः कालशक्तेर्निर्गुणाया निराकृतेः ।
हितायाः प्राप्तयोगानां वर्णः कृष्णो निरूपितः ॥ ६ ॥
नित्यायाः कालरूपाया अव्ययायाः शिवात्मनः ।
अमृतत्वाल्ललाटेऽस्याः शशिचिह्नं निरूपितम् ॥ ७ ॥
शशिसूर्य्याग्निभिर्नित्यैरखिलं कालिकं जगत् ।
सम्पश्यति यतस्तस्मात् कल्पितं नयनत्रयम् ॥ ८ ॥
ग्रसनात् सर्वसत्त्वानां कालदन्तेन चर्वणात् ।
तद्रक्तसङ्घो देवेश्याः वासो रूपेण भाषितम् ॥ ९ ॥
समये समये जीवरक्षणं विपदः शिवे ! ।

सारेण देव्या महाकाल्या रूपं कल्पितं न तु वास्तवमिति पुरैव मया कथितम् ॥ ४ ॥

श्वेतेत्यादिना । हे शैलजे ! पार्वति ! यथा कृष्णे वर्णे श्वेतपीतादिको वर्णो विलीयते विशेषेण लीनो भवति, तथैव काल्यामपि भूतानि प्रविशन्ति प्रलीयन्ते अतो हेतोस्तस्याः काल्या वर्णः कृष्णो निरूपितः कथित इत्यन्वयः । प्राप्तयोगानाम् लब्धज्ञानरूपमोक्षोपायानाम् ॥ ५ । ६ ॥

नित्याया इत्यादिना । नित्याया हृद्धत्वशून्याया अव्ययाया अपचयरहितायाः शिवात्मनः कल्याणस्वरूपायाः कालरूपाया अस्याः काल्या अमृतत्वात् हेतोर्ललाटे शशिचिह्नं निरूपितं कथितम् ॥ ७ ॥

कालिकम् कालसम्भवम् ॥ ८ ॥

सर्वसत्त्वानाम् अशेषजन्तूनाम् कालदन्तेन कालरूपेण दन्तेन तद्रक्तसङ्घः सर्वसत्त्वरुधिरसमूहः ॥ ९ ॥

प्रेरणं स्वस्वकार्य्येषु वराभयमीरितम् ॥ १० ॥
रजोजनितविश्वानि विष्टभ्य परितिष्ठति ।
अतो हि कथितं भद्रे ! रक्तपद्मासनस्थिता ॥ ११ ॥
क्रीडन्तं कालिकं कालं पीत्वा मोहमयीं सुराम् ।
पश्यन्ती चिन्मयी देवी सर्वसाक्षिस्वरूपिणी ॥ १२ ॥
एवं गुणानुसारेण रूपाणि विविधानि च ।
कल्पितानि हितार्थाय भक्तानामल्पमेधसाम् ॥ १३ ॥

श्रीदेव्युवाच ।

ध्यानं यत् कथितं आद्या जीवनिस्तारहेतवे ।
तस्यानुरूपतो मूर्त्तिं मृण्मयीं वा शिलामयीम् ॥ १४ ॥
दारुधातुमयीं वापि निर्माय यदि साधकः ।
विचित्रभवनं कृत्वा वस्त्रालङ्कारभूषिताम् ॥ १५ ॥
स्थापयेत्तत्र देवेशि किं फलं तस्य जायते ।
प्रतिष्ठा केन विधिना तस्याः प्रतिकृतेः प्रभो ! ।
कर्त्तव्या तदशेषेण कृपया मे प्रकाश्यताम् ॥ १६ ॥
वापीकूपगृहारामदेवप्रतिकृतेस्तथा ।
प्रतिष्ठा सूचिता पूर्वं गदिता न विशेषतः ॥ १७ ॥

समये इत्यादिना । हे शिवे ! समये समये काले काले विपदः सकाशात् जीवानां रक्षणं स्वस्वकार्य्येषु प्रेरणं च कालिकाया वराभयमीरितम् । विपत्तौ जीवानां रक्षणमभयं कथितं स्वस्वकार्य्येषु प्रेरणं वरः कथित इत्यर्थः ॥ १० ॥

विष्टभ्य अवलम्ब्य ॥ ११ ॥

कालिकम् कालसम्भवं जगत् । चिन्मयी ज्ञानस्वरूपा ॥ १२।१३॥

आद्यायाः कालिकायास्तदितराणां च देवतानां प्रतिमाया [illegible]-

तद्विधानमपि श्रोतुमिच्छामि त्वन्मुखाम्बुजात् ।
कथ्यतां परमेशान ! कृपया यदि रोचते ॥ १८ ॥

श्रीसदाशिव उवाच ।

गुह्यमेतत् परं तत्त्वं यत् पृष्टं परमेश्वरि ! ।
कथयामि तव स्नेहात् समाहितमनाः शृणु ॥ १९ ॥
सकामाश्चैव निष्कामा द्विविधा भुवि मानवाः ।
अकामानां पदं मोक्षः कामिनां फलमुच्यते ॥ २० ॥
यो यद्देवप्रतिकृतिं प्रतिष्ठापयति प्रिये ! ।
स तल्लोकमवाप्नोति भोगानपि तदुद्भवान् ॥ २१ ॥
मृण्मये प्रतिबिम्बे तु वसेत् कल्पायुतं दिवि ।
दारुपाषाणधातूनां क्रमाद्दशगुणाधिकम् ॥ २२ ॥
तृणकाष्ठादिरचितं ध्वजवाहनसंयुतम् ।
मन्दिरं देवमुद्दिश्य काममुद्दिश्य वा नरः ।

दीनाञ्च प्रतिष्ठा विधानं, फलं गृहादिप्रदानफलञ्च श्रोतुमिच्छन्ती । श्रीदेव्युवाच—ध्यानमित्यादिना । हे प्रभो ! जीवनिस्तारहेतवे काल्या यद्ध्यानं कथितं तस्य ध्यानस्यानुरूपतो मृण्मयीं धातुकाविकारभूतां शिलामयीं दारुधातुमयीं वा मूर्त्तिं निर्माय विचित्रं भवनं कृत्वा तत्र भवने वस्त्रालङ्कारभूषितां देवेशीं कालीं साधको यदि स्थापयेत्तदा तस्य साधकस्य किं फलं जायते इत्यन्वयः । प्रतिकृतेः प्रतिमायाः ॥ १४—१७ ॥

अपिना फलम् ॥ १८ ॥

श्रीदेव्यैवं प्रार्थितः सन् श्रीसदाशिव उवाच गुह्यमेतदित्यादिना ॥ १९—२१ ॥

प्रतिबिम्बे प्रतिमायाम् अत्र प्रतिष्ठापिते सति इत्यध्याहार्य्यम् ॥ २२ ॥

संख्यातुं पद्मजेनापि तस्य पुण्यं निशामय ॥ २३ ॥
तृणादिनिर्मितं गेहं यो दद्यात् परमेश्वरि ! ।
वर्षकोटिसहस्राणि स वसेद्देववेश्मनि ॥ २४ ॥
इष्टकागृहदाने तु तस्माच्छतगुणं फलम् ।
ततोऽयुतगुणं पुण्यं शिलागेहप्रदानतः ॥ २५ ॥
सेतुसङ्क्रमदाताद्ये ! यमलोकं न पश्यति ।
सुखं सुरालयं प्राप्य मोदते स्वर्निवासिभिः ॥ २६ ॥
वृक्षारामप्रतिष्ठाता गत्वा त्रिदशमन्दिरम् ।
कल्पपादपखण्डेषु निवसन् दिव्यवेश्मनि ।
भुङ्क्ते मनोरमान् भोगान् मनसो यानभीप्सितान् ॥ २७ ॥
प्रीतये सर्वसत्त्वानां ये प्रदद्युर्जलाशयम् ।
विधूतपापास्ते प्राप्य ब्रह्मलोकमनामयम् ।
निवसेयुः शतं वर्षानम्भसां प्रतिशीकरम् ॥ २८ ॥
यो दद्याद्वाहनं देवि ! देवताप्रीतिकारकम् ।
स तेन रक्षितो नित्यं तल्लोके निवसेच्चिरम् ॥ २९ ॥
मृण्मये वाहने दत्ते यत् फलं जायते भुवि ।
दारुजे तद्दशगुणं शिलाजे तद्दशाधिकम् ॥ ३० ॥
रैत्तिका कांस्यताम्रादिनिर्मिते देववाहने ।
दत्ते फलमवाप्नोति क्रमात् शतगुणाधिकम् ॥ ३१ ॥

निशामय शृणु ॥ २३—२७ ॥

जलाशयम् वापीकूपादिकम् अनामयम् निरुपद्रवम् प्रतिशीकरम् प्रत्यम्बुकणम् ॥ २८ ॥

तल्लोके तस्य देवस्य लोके ॥ २९ ॥ ३० ॥

देव्यागारे महासिंहं वृषभं शङ्करालये ।
गरुड़ं वैष्णवे गेहे प्रदद्यात् साधकोत्तमः ॥ २२ ॥
तीक्ष्णदंष्ट्रः करालास्यः शटाशोभितकन्धरः ।
चतुरङ्घ्रिर्वज्रनखो महासिंहः प्रकीर्त्तितः ॥ २३ ॥
शृङ्गायुधः शुक्लकायः चतुष्पादसितक्षुरः ।
बृहत् ककुत् कृष्णपुच्छः श्यामस्कन्धो वृषः स्मृतः ॥ २४ ॥
गरुड़ः पक्षिवक्त्रस्तु नरास्यो दीर्घनासिकः ।
पादसङ्कोचसविष्टः पक्षयुक्तः कृताञ्जलिः ॥ २५ ॥
पताकाध्वजदानेन देवप्रीतिः शतं समाः ।
ध्वजदण्डस्तु कर्त्तव्यो द्वात्रिंशद्धस्तसम्मितः ॥ २६ ॥
सुदृढ़श्छिद्ररहितः सबलः शुभदर्शनः ।
वेष्टितो रक्तवस्त्रेण कोटौ चक्रसमन्वितः ॥ २७ ॥
पताका तत्र संयोज्या तत्तद्वाहनचिह्निता ।
प्रशस्तमूला सूक्ष्माग्रा दृव्यवस्त्रविनिर्मिता ।

विन्तिका पिच्छकम् ॥ २१ ॥ २२ ॥

महासिंहस्वरूपमाह तीक्ष्णदंष्ट्र इत्याद्येकेन । करालास्यः दन्तुरवदनः शटाशोभितकन्धरः शटया परस्परश्लिष्टरोमविशेषसमूहेन शोभिता कन्धरा यस्य तथाभूतः चतुरङ्घ्रिः चतुष्पात् ॥ २२ ॥

वृषभस्वरूपमाह शृङ्गायुध इत्याद्येकेन । असितक्षुरः नीलक्षुरः ॥ २४ ॥

गरुड़स्वरूपमाह गरुड़ इत्याद्येकेन । नरास्यः मनुष्यमुखः ॥२५॥

पताकेत्यादिना । पताकाध्वजदानेन पताकासहितध्वजदानेन शतं समाः शतवर्षाणि देवप्रीतिर्भवति, तयोर्मध्ये पूर्वं ध्वजस्वरूपमाह ध्वजदण्ड इत्यादिना सार्द्धेन । कोटौ अग्रभागे ॥ २६ ॥ २७ ॥

शोभमाना ध्वजाग्रे या पताका सा प्रकीर्त्तिता॥३८॥
वासोभूषणपर्य्यङ्कयानसिंहासनानि च।
पात्रप्रायमताम्बूलभाजनानि पतद्‌ग्रहम्॥ ३९ ॥
मणिमुक्ताप्रवालादिरत्नान्यात्मप्रियञ्च यत्।
यो दद्याद्देवमुद्दिश्य श्रद्धाभक्तिसमन्वितः।
स तल्लोकं समासाद्य तत्तत् कोटिगुणं लभेत्॥ ४० ॥
कामिनां फलमित्युक्तं चयिष्णुः स्वप्नराज्यवत्।
निष्कामानान्तु निर्वाणं पुनरावृत्तिवर्जितम्॥ ४१ ॥
जलाशयगृहारामसेतुसंक्रमशाखिनाम्।
देवतानां प्रतिष्ठायां वास्तुदैत्यं प्रपूजयेत्॥ ४२ ॥
अनर्च्चयित्वा यो वास्तुं कुर्य्यात् कर्माणि मानवः।
भिन्नस्तस्याचरेद्वास्तुः परिवारगणैः सह॥ ४३ ॥
कपिलास्यः पिङ्गकेशो भीषणो रक्तलोचनः।
कोटराक्षो लम्बकर्णो दीर्घजङ्घो महोदरः॥ ४४ ॥
भग्नतुण्डः काककण्ठो वज्रबाहुर्नितान्तकः।
एते परिकरा वास्तोः पूजनीयाः प्रयत्नतः॥ ४५ ॥
स्थलं शृणु वक्ष्यामि यत्र वास्तुं प्रपूजयेत्॥ ४६ ॥
वेद्यां वा समदेशे वा शस्ताद्भिरुपलेपिते।

तत्र ध्वजदण्डपताकामाह तत्तद्वाहनचिह्नितेत्यादिना सपाद-श्लोकेन। ध्वजाग्रे ध्वजदण्डाग्रभागे॥ ३८॥

पतद्‌ग्रहम् तस्मात् पततो जलताम्बूलादेर्ग्राहकं पात्रविशेषम्॥ ३९॥

समासाद्य सम्प्राप्य॥ ४०-४२॥

अथ वास्तुदैत्यस्य परिवारानाह कपिलास्य इत्यादिना सार्द्धेन। परिकराः परिवाराः॥ ४४-४६॥

वायवीशकोणयोर्मध्ये हस्तमात्रप्रमाणतः ।
सूत्रपातक्रमेणैव रेखामेकां प्रकल्पयेत् ॥ ४७ ॥
ईशानादग्निपर्य्यन्तमपरां रचयेत्तथा ।
आग्नेयान्नैरृतं यावत् नैरृताद्वायवावधि ॥ ४८ ॥
दत्वा रेखे चतुष्कोणमेवं मण्डलमालिखेत् ॥ ४९ ॥
कोणसूत्रं पातयित्वा चतुर्द्धा विभजेत्तु तत् ।
यथा तत्र भवेद्देवि ! मत्स्यपुच्छचतुष्टयम् ॥ ५० ॥
ततो भित्त्वा पुच्छमूलं वारुणाद्वासवावधि ।
कौवेराद्याम्यपर्य्यन्तं दद्याद्रेखाद्वयं सुधीः ॥ ५१ ॥
ततश्चतुर्षु कोणेषु कोणरेखान्वितेष्वपि ।
कर्णाकर्णिप्रयोगेण न्यसेद्रेखाचतुष्टयम् ॥ ५२ ॥

वास्तुप्रपूजनार्थं मण्डलमेवाह वेद्यां वेत्यादिभिः । वेद्यां वा प्रस्ताद्भिः प्रशस्तैर्जलैरुपलेपिते समदेशे वा वाय्वीशकोणयोर्मध्ये सूत्रपातक्रमेणैव हस्तमात्रप्रमाणात एकां रेखां प्रकल्पयेत्, तथा तेनैव प्रकारेण ईशानादीशानकोणमारभ्याग्निकोणपर्य्यन्तमपरामन्यां रेखां रचयेत्, तथैवाग्नेयादग्निकोणमारभ्य नैरृतं यावत् नैरृतकोणावधि नैरृतात् नैरृतमपि कोणमारभ्य वायवावधि वायुकोणपर्य्यन्तं क्रमतो द्वे रेखे दत्वा एवं विधानेन एकं चतुष्कोणं मण्डलमालिखेत् ॥ ४७-४९ ॥

कोणसूत्रं इत्यादिना । हे देवि ! तत्र चतुष्कोणे मण्डले यथा मत्स्यपुच्छचतुष्टयं भवेत्तथा तत् चतुष्कोणं मण्डलं कोणसूत्रं पातयित्वा चतुर्द्धा विभजेत् विभक्तं कुर्य्यात् ॥ ५० ॥

तत इत्यादिना । ततः सुधीर्जनो वारुणात् पश्चिमभागात् याम्यपर्य्यन्तं दक्षिणावधि च पुच्छमूलं भित्त्वा रेखाद्वयं दद्यात् ॥ ५१ ॥

एवं सङ्केतविधिना कोष्ठानां षोडशं लिखन् ।
पञ्चवर्णैश्च चूर्णैश्च रचयेद्यन्त्रमुत्तमम् ॥ ५३ ॥
चतुर्षु मध्यकोष्ठेषु पद्मं कुर्य्यात् मनोहरम् ।
चतुर्दलं पीतरक्तकर्णिकं रक्तकेशरम् ॥ ५४ ॥
दलानि शुक्लवर्णानि यद्वा पीतानि कल्पयेत् ।
यथेष्टं पूरयेत् पद्मसन्धिस्थानानि वर्णकैः ॥ ५५ ॥
प्राग्भवं कोष्ठमारभ्य कोष्ठानां द्वादश क्रमात् ।
सितकृष्णपीतरक्तैश्चतुर्वर्णैः प्रपूरयेत् ॥ ५६ ॥
दक्षिणावर्त्तयोगेन कोष्ठानां पूरणं प्रिये ! ।
वामावर्त्तेन देवानां पूजनं तेषु साधयेत् ॥ ५७ ॥
पद्मे समर्चयेद्वास्तुदेवं विघ्नोपशान्तये ।
ईशादिद्वादशे कोष्ठे कपिलाद्यादिदानवान् ॥ ५८ ॥
कुशण्डिकाविधिना कुर्वन्ननलसंस्कृतिम् ।
यथाशक्त्याहुतिं दत्त्वा वास्तुयज्ञं समापयेत् ॥ ५९ ॥

तत इत्यादिना । ततःपरं कोणरेखान्वितेषु चतुर्ष्वपि कोष्ठेषु कर्णाकर्णिप्रयोगेण रेखाचतुष्टयं न्यसेत्, अपिना कोणरेखान्वितेषु चतुर्षु कोष्ठेष्वन्यतमात् पूर्व्वावधि रेखाद्वयमुत्तरस्माद्दक्षिणावधि च रेखाद्वयं न्यसेत् ॥ ५२ ॥

एवमित्यादिना । एवं सङ्केतविधिना इत्थं सङ्केतविधानेन कोष्ठानां षोडशकं लिखेत् । ननु केन द्रव्येणेदं मण्डलमालिखेदित्यपेक्षायामाह पञ्चवर्णैरित्यादिना ॥ ५३ ॥

चतुर्ष्वित्यादिना । ततश्चतुर्षु मध्यकोष्ठेषु मनोहरं चतुर्दलं [illegible] पीतरक्तकर्णिकं पीतरक्तवर्णबीजकोषकं रक्तकेशरं पद्मं कुर्य्यात् ॥ ५४—५६ ॥

एवं वास्तुमण्डलं कथयित्वेदानीं तत्र [illegible] [illegible]

इति ते कथिता देवि ! वास्तुपूजा समासतः ।
यां साधयन्नरः क्वापि वास्तुविघ्नैर्न बाध्यते ॥ ६० ॥

देव्युवाच ।

मण्डलं कथितं वास्तोर्विधानमपि पूजने ।
ध्यानं न गदितं नाथ ! तदिदानीं प्रकाशय ॥ ६१ ॥

श्रीसदाशिव उवाच ।

ध्यानं वच्मि महेशानि ! श्रूयतां वास्तुरक्षसः ।
यस्यानुशीलनात् सद्यो नश्यन्ति सकलापदः ॥ ६२ ॥
चतुर्भुजं महाकायं जटामण्डितमस्तकम् ।
त्रिलोचनं करालास्यं हारकुण्डलशोभितम् ॥ ६३ ॥
लम्बोदरं दीर्घकर्णं लोमशं पीतवाससम् ।
गदात्रिशूलपरशुखट्वाङ्गं दधतं करैः ॥ ६४ ॥
असिचर्मधरैर्वीरैः कपिलाक्षादिभिर्वृतम् ।
शत्रूणामन्तकं साक्षादुद्यदादित्यसन्निभम् ॥ ६५ ॥
ध्यायेदेवं वास्तुपतिं कूर्मपद्मासनस्थितम् ।

पूजाया विधानमाह वास्तावस्मिन्नित्यादिना सार्द्धद्वयेन । तेषु वास्तुकोष्ठेषु वामावर्त्तेन देवानां दीयतां कपिलाक्षादीनां [illegible] पूजनं साधयेत् ॥ ५७—६० ॥

एवं वास्तुमण्डलं तत्र सपरिवारस्य वास्तोः पूजाया विधानं श्रुत्वेदानीं वास्तोर्ध्यानं श्रोतुमिच्छन्ती श्रीदेव्युवाच मण्डलमित्यादिना ॥ ६१ ॥

एवं प्रार्थितः सन् श्रीसदाशिव उवाच ध्यानमित्यादिना ॥ ६२ ॥ वास्तोर्ध्यानमेवाह चतुर्भुजमित्यादिना सार्द्धत्रयेण ॥ [illegible] ॥ [illegible] ॥ ६० ॥

मारीभये रोगभये डाकिन्यादिभये तथा ॥ ६६ ॥
भोगमातिक्रमग्रहोषे व्याघ्रचौरभयेऽपि च ।
भक्त्यैवं पूजयेद्वास्तुं परिवारसमन्वितम् ॥ ६७ ॥
तिलाज्यपायसैर्हुत्वा सर्वशान्तिमवाप्नुयात् ।
ब्रह्मा वास्तुः पूजनीयः प्रोक्तकर्मसु सुव्रते ! ॥ ६८ ॥
ग्रहाश्चापि तथा पूज्या दशदिक्पतिभिर्युताः ।
ब्रह्मा विष्णुश्च रुद्रश्च वाणी लक्ष्मीश्च शङ्करी ॥ ६९ ॥
मातरः क्षेत्रपालाश्च सम्पूज्या वसवस्तथा ।
पितरो यत्र पूज्याः स्युः कर्मस्वेतेषु कालिके ! ॥ ७० ॥
सर्वन्तस्य भवेद्व्यर्थं विघ्नश्चापि पदे पदे ।
अतो महेशि ! यत्नेन प्रोक्तसंस्कारकर्मसु ॥ ७१ ॥
पितॄणां तर्पणे लाभ्युदयिकं श्राद्धमाचरेत् ।
ग्रहयन्त्रं प्रवक्ष्यामि सर्वशान्तिविधायकम् ॥ ७२ ॥
यत्र सम्पूजिताः सेन्द्रा ग्रहा यच्छन्ति वाञ्छितम् ।
त्रित्रिकोणैर्लिखेद्यन्त्रं तद्बहिर्वृत्तमालिखेत् ॥ ७३ ॥
विदध्याद्वृत्तलग्नानि दलान्यष्टौ च तद्बहिः ।
चतुर्द्वारान्वितं कुर्य्यात् भूपुरं सुमनोहरम् ॥ ७४ ॥
वासवेशानयोर्मध्ये भूपुरस्य बहिःस्थले ।
वृत्तं विरचयेदेकं प्रादेशपरिमाणकम् ॥ ७५ ॥
रक्षोवारुणयोर्मध्ये चापरं कल्पयेत्तथा ॥ ७६ ॥

चक्रशादिसवर्णाभम् उद्यत्सूर्यसदृशम् ॥ ६५—७२ ॥
सेन्द्राः इन्द्रादिदशदिक्पतिसहिताः यच्छन्ति ददति ॥ ७३ ॥
यन्त्रप्रकारमाह त्रित्रिकोणैरित्यादिभिः । प्रथमतस्त्रिकोणैर्व-
ष्टिं यन्त्रं लिखेत् ततस्तद्बहिस्त्रिकोणेभ्यो बहिर्वृत्तं ततु तेनैकं

नवग्रहाणां वर्णेन नवकोणानि पूरयेत् ।
मध्यत्रिकोणद्वौ पार्श्वौ सव्यदक्षिणभेदतः ॥ ७७ ॥
श्वेतपीतौ विधातव्यौ पृष्ठभागः सितेतरः ।
अष्टदिक्पतिवर्णेन पर्णान्यष्टौ प्रपूरयेत् ॥ ७८ ॥
सितरक्तासितैश्चूर्णैः पुरः प्राकारमाचरेत् ।
पुरो बहिःस्थे द्वे वृत्ते देवि ! प्रादेशसम्मिते ॥ ७९ ॥
उपर्य्यधःक्रमेणैव रक्तश्वेते विधाय च ।
सन्धिस्थानानि यन्त्रस्य स्वेच्छया रचयेत् सुधीः ॥ ८०
यत्कोष्ठे यो ग्रहः पूज्यो यत्पत्रे यश्च दिक्पतिः ।
यद्द्वारेऽवस्थिता ये च तत्क्रमं शृणु साम्प्रतम् ॥ ८१ ॥
मध्यकोणे यजेत् सूर्य्यं पार्श्वयोररुणं शिखाम् ।
पश्चात् प्रचण्डयोर्द्दण्डौ पूजयेदंशुमालिनः ॥ ८२ ॥
भानूर्द्ध्वकोणे पूर्वस्यामर्चयेद्रजनीकरम् ।

मण्डलमालिखेत्, ततो वृत्ततन्मध्यगौ दलानि पत्राणि विरचय्य कुर्य्यात् तद्बहिश्चतुर्द्वाराभिरामं सुमनोहरं भूपुरं कुर्य्यात्, ततो वामवेष्टनयोर्मध्ये भूपुरस्य बहिःस्थले प्रादेशपरिमाणकमेकं वृत्तं रक्तं मण्डलं विरचयेत्, ततो द्वयोर्वृत्तयोर्निम्नोपरिस्थयोर्मध्ये भूपुरस्य बहिःस्थले तथैव प्रादेशपरिमाणकमपरं वृत्तं मण्डलं कल्पयेद्रचयेत् ॥ ७४—७६ ॥

नवग्रहाणामित्यादिना । तत् सूर्य्यादीनां नवग्रहाणां वर्णैर्विशिष्टैश्चूर्णैर्नवकोणानि पूरयेत्, ततः सव्यदक्षिणभेदतो मध्यत्रिकोणस्य द्वौ पार्श्वौ क्रमतः श्वेतपीतौ विधातव्यौ, मध्यत्रिकोणपृष्ठभागः सितेतरः कृष्णवर्णो विधातव्यः तत इन्द्रादीनामष्टानां दिक्पतीनां वर्णैर्विशिष्टैश्चूर्णैरष्टौ पत्राणि प्रपूरयेत् ॥ ७७ ॥ ७८ ॥

आग्नेये मङ्गलं याम्ये बुधं नैर्ऋतकोणके ॥ ८३ ॥
बृहस्पतिं वारुणे च दैत्याचार्यं प्रपूजयेत् ।
शनैश्चरन्तु वायव्ये कौवेर्य्यैशानयोः क्रमात् ।
राहुं केतुं यजेत् चन्द्रं परितस्तारकागणान् ॥ ८४ ॥
सूरो रक्तः शशी शुक्लो मङ्गलोऽरुणविग्रहः ।
बुधजीवौ चारुपीतौ श्वेतः शुक्रोऽसितः शनिः ॥ ८५ ॥
राहुकेतू विचित्राभौ ग्रहवर्णाः प्रकीर्त्तिताः ।
चतुर्भुजं रविं ध्यायेत् पद्मद्वयवराभयैः ॥ ८६ ॥
चिन्तयेच्छशिनं दानमुद्राऽमृतकराम्बुजम् ।
कुजमीषत्कुजतनुं हस्ताभ्यां दण्डधारिणम् ।
ध्यायेत् सोमात्मजं बालं भाललोलितकुन्तलम् ॥८७॥
यज्ञसूत्रान्वितं ध्यायेत् पुस्तकाक्षकरं गुरुम् ।

चितेत्यादिना । ततः सितरक्तासितैः श्वेतलोहितकृष्णवर्णैश्चूर्णैः पुरो भूपुरस्य प्राकारमवरेत् कुर्य्यात् । हे देवि ! पुरो भूपुरस्य बहिःस्थे प्राकारवेष्टिते ह्युत्र चतुर्वे मण्डले उपर्यधःक्रमेणैव रक्षाणि ते विधाय सुधीः साधको यन्त्रस्य सन्धिस्थानानि स्वेच्छया रञ्जयेत् ॥ ७९—८३ ॥

परितः सर्वतः ॥ ८४ ॥

अथ क्रमतः सूर्यादीनां नवग्रहाणां वर्णमाह सूर इत्यादिना श्लोकेन । सूरः सूर्यः ॥ ८५ ॥

अथ सूर्यादीनां नवग्रहाणां क्रमतो ध्यानमाह चतुर्भुजमित्यादिभिः । पद्मद्वयवराभयैर्विशिष्टं चतुर्भुजं रविं सूर्यं ध्यायेत्, दानमुद्राऽमृतकराम्बुजं दानमुद्रा चामृतञ्च कराम्बुजयोर्यस्य तथाभूतं शशिनं चन्द्रं चिन्तयेत् ॥ ८६ ॥

सोमात्मजम् बुधम् । भाललोलितकुन्तलम् भाले लोलिताः-

एवं दैत्यगुरुश्चापि काम्यं स्वर्णं घनेश्वरम् ॥ ८८ ॥
राहुकेतू शिरःकायौ विकृतौ क्रूरचेष्टितौ ।
स्वैः स्वैर्ध्यानैर्यथानिष्ठां यजेद्दिक्[illegible] ॥ ८९ ॥
दलेष्वष्टसु पूर्वादिक्रमतः साधकोत्तमः ।
सहस्राक्षं यजेदादौ पीतकौषेयवाससम् ॥ ९० ॥
वज्रपाणिं पीतवर्णं स्थितमैरावतोपरि ।
रक्ताभं छागवाहस्थं शक्तिहस्तं हुताशनम् ॥ ९१ ॥
ध्यायेत कालं तुलापस्थं दण्डिनं महिषवाहनम् ।
निरृतिं खड्गहस्तञ्च श्यामलं वाजिवाहनम् ॥ ९२ ॥
वरुणं मकरारूढं पाशहस्तं सितप्रभम् ।
ध्यायेत् कृष्णविषं वायुं मृगस्थमङ्कुशायुधम् ॥ ९३ ॥
कुवेरं कनकाकारं रत्नसिंहासनस्थितम् ।
स्तुतं यक्षगणैः सर्वैः पाशाङ्कुशकराम्बुजम् ॥ ९४ ॥
ईशानं वृषभारूढं त्रिशूलवरधारिणम् ।
व्याघ्रचर्म्माम्बरधरं पूर्णेन्दुसदृशप्रभम् । ९५ ॥
ध्यात्वा चैतान् क्रमादिष्ट्वा ब्रह्मानन्तौ पुरो बहिः ।
ऊर्द्ध्वाधोवृत्तयोरर्च्चेत् ततोऽर्च्चेद् द्वारदेवताः ॥ ९६ ॥

स्थिताः कुन्तलाः केशा यस्य तथाभूतम् ॥ ८७ । ८८ ॥

इष्ट्वा पूजयित्वा ॥ ८९ ॥

अथ क्रमेण इन्द्रादीनामष्टानां दिक्पतीनां ध्यानं । सहस्राक्षमित्यादिभिः । पीतकौषेयवाससम् पीतं कौषेयं कृमिकोषोत्थं वासो वस्त्रं यस्य तथाभूतम् ॥ ९० । ९१ ॥

कालम् यमम् । तुलापस्थम् महिषस्थं [illegible] सम् ॥ ९२-९५ ॥

ध्यात्वेत्यादिना । एतानिन्द्रादीनष्टौ दिक्पालानेवं ध्यात्वा

तारं मायां तीक्ष्णरश्मे ऽन्तमारोग्यदं वदेत् ।
वह्निजायां ततो दत्वा सूर्यमन्त्रं समुद्धरेत् ॥ १०४ ॥
कामो माया च वाणी च ततोऽमृतकरेति च ।
अमृतं प्लावय द्वन्द्वं स्वाहा सोममनुर्मतः ॥ १०५ ॥
ऐं ह्रां ह्रीं सर्वपदाद्दुष्टाशाय नाशय ।
स्वाहावसानो मन्त्रोऽयं मङ्गलस्य प्रकीर्त्तितः ॥ १०६ ॥
ह्रीं श्रीं सौम्यपदश्चोक्ता सर्वान् कामान् ततो वदेत् ।
पूरयान्ते वह्निकान्तामेष सौमाम्बजे मनुः ॥ १०७ ॥
तारेण पुटिता वाणी ततः सुरगुरो ! पदम् ।

न्द्रभ्यां भूषितश्च कर्त्तव्यः एवञ्च व्यां व्यीं व्यं व्यैं व्यौं व्यः इति षडक्षरो वास्तुमन्त्र उद्धृत आसीत् ॥ १०३ ॥

तारमित्यादिना । पूर्वम् तारं प्रणवं वदेत्, ततो मायां ह्रीं बीजं वदेत्, ततस्तिग्मरश्मे इति वदेत्, ततो ऽन्तमारोग्यं वदेत्, ततो वह्निजायां दत्वा सूर्यमन्त्रं समुद्धरेत् । योजनया ओं ह्रीं तिग्मरश्मे आरोग्यदाय स्वाहेति सूर्यमन्त्र उद्धृत आसीत् ॥ १०४ ॥

काम इत्यादिना । पूर्वं कामः क्लीमिति बीजमुच्चार्य ततो माया ह्रीं बीजमुच्चार्य ततो वाणीरैमिति बीजमुच्चार्य ततोऽमृतकरेत्युच्चार्य ततोऽमृतमुच्चार्य ततः प्लावयद्वयमुच्चार्य ततः स्वाहोच्चार्य योजनया क्लीं ह्रीं ऐं अमृतकरेऽमृतं प्लावय प्लावय स्वाहेति सोममनुर्मतः ॥ १०५ ॥

ऐमित्यादिना । पूर्वम् ऐं ह्रां ह्रीं वदेत् ततः सर्वपदतो दुष्टाशाय नाशयेति वदेत् । योजनया ऐं ह्रां ह्रीं सर्वदुष्टाशाय नाशयेति मन्त्रो जातः स्वाहावसानः स्वाहान्तोऽयं मङ्गलस्य मन्त्रः प्रकीर्त्तितः ॥ १०६ ॥

ह्रीमित्यादिना । पूर्वम् ह्रीं श्रीं सौम्यपदं चोक्त्वा ततः सर्वान् कामान् वदेत् । ततः पूरयान्ते वह्निकान्तां वदेत् । योजनया ह्रीं

अभीष्टं यच्छ यच्छेति स्वाहामन्त्रो बृहस्पतेः ॥ १०८ ॥
ग्रां ग्रीं ग्रूं ग्रैं ततः ग्रौं ग्रः शुक्रमन्त्रः समीरितः॥१०९॥
ह्रां ह्रां ह्रीं ह्रौं सर्वशत्रून् विद्रावय पदद्वयम्।
मार्त्तण्डसूनवे पश्चात् नमो मन्त्रः शनैश्चरे॥ ११० ॥
रां ह्रौं श्रौं ह्रीं सोमशत्रो शत्रून् विध्वंसय द्वयम्।
राहवे मम इत्येव राहोर्मनुरुदाहृतः ॥ १११ ॥
क्रूं क्रूं क्रैं केतवे स्वाहा केतोर्मन्त्रः प्रकीर्त्तितः ॥११२॥
लं रं मं क्षूं वं यमिति च ह्रौं श्रोममिति क्रमात्।
इन्द्राद्यनन्तदिक्पानां द्व्यमन्त्राः समीरिताः ॥ ११३ ॥

ओं सौम्य सर्वान् कामान् पूरय स्वाहेत्येव सोमात्मजे बुधे मनुर्मतः ॥ १०७ ॥

तारेणेत्यादिना। तारेण प्रणवेन पुटिता आद्यावर्णौ च संयुक्ता वाग्वी वक्ष्ण्या ततः सुरगुरो इति पदं वदेत्। ततोऽभीष्टं यच्छ यच्छेति वदेत्। ततः स्वाहेति वदेत्। योजनया ओम् ऐं ओं सुरगुरो अभीष्टं यच्छ यच्छ स्वाहेति बृहस्पतेर्मन्त्रो मतः॥ १०८ ॥

ग्रां ग्रीं ग्रूं ग्रैं ग्रौं ग्रः इति शुक्रमन्त्रः समीरितः कथितः ॥ १०९ ॥

ह्रां ह्रामित्यादिना। पूर्वम् ह्रां ह्रां ह्रौं ह्रौं सर्वशत्रूनिति वदेत्। ततो विद्रावयपदद्वयं वदेत्। ततो मार्त्तण्डसूनवे इति वदेत्। पश्चान्नमो वदेत्। योजनया ह्रां ह्रां, ह्रौं ह्रौं सर्वशत्रून् विद्रावय विद्रावय मार्त्तण्डसूनवे नमः इति शनैश्चरे मन्त्रो मतः ॥ ११० ॥

रामित्यादिना। पूर्वं रां ह्रौं श्रौं ह्रीं सोमशत्रो शत्रूनिति वदेत्। ततो विध्वंसयद्वयं वदेत्। ततो राहवे मम इति वदेत्। योजनया रां ह्रौं श्रौं ह्रीं सोमशत्रो शत्रून् विध्वंसय विध्वंसय राहवे मम इत्येव राहोर्मन्त्ररुदाहृतः कथितः ॥ १११। ११२ ॥

अन्येषां परिवाराणां नाममन्त्राः प्रकीर्त्तिताः ।
अनुक्तमन्त्रे सर्व्वत्र विधिरेष शिवोदितः ॥ ११४ ॥
नमोऽन्तमन्त्रे देवेशि ! न नमो योजयेद् बुधः ।
स्वाहान्तेऽपि तथा मन्त्रे न दद्याद्वह्निवल्लभाम् ॥ ११५ ॥
ग्रहादिभ्यः प्रदातव्यं पुष्पं वासश्च भूषणम् ।
तेषां वर्णानुरूपेण नान्यथा प्रीतये भवेत् ॥ ११६ ॥
कुशण्डिकोक्तविधिना वह्निं संस्थापयन् सुधीः ।
पुष्पैरुच्चावचैर्यद्वा समिद्भिर्होममाचरेत् ॥ ११७ ॥
शान्तिकर्म्मणि पुष्टौ च वरदो हव्यवाहनः ।
प्रतिष्ठायां लोहिताक्षः शत्रुहा क्रूरकर्म्मणि ॥ ११८ ॥
शान्तौ पुष्टौ महेशानि ! तथा क्रूरेऽपि कर्म्मणि ।
ग्रहयागं प्रकुर्व्वाणो वाञ्छितार्थमवाप्नुयात् ॥ ११९ ॥
यथा प्रतिष्ठाकार्य्येषु देवार्च्चा पितृतर्पणम् ।
वास्तुयागे ग्रहाणाञ्च तद्वदेव विधीयते ॥ १२० ॥
यद्येकस्मिन् दिने द्विस्त्रिः प्रतिष्ठा यागकर्म्म च ।
तन्त्रेण तत्र देवार्च्चा पितृश्राद्धाग्निसंक्रियाः ॥ १२१ ॥

●

लमित्यादिना । लमिति रमिति [illegible] क्षमिति वमिति यमिति समिति ह्रौमिति ओमिति अमित्येते क्रमादिन्द्रादीनामनन्तानां दिक्पानां बीजमन्त्राः समीरिताः कथिताः ॥ ११२ । ११४ ॥

वह्निवल्लभाम् स्वाहेति पदम् ॥ ११५ ॥

तेषाम् ग्रहादीनाम् ॥ ११६ ॥

समिद्भिः काष्ठैः ॥ ११७ ॥

वरदो वरदनामा लोहिताक्षो [illegible] हव्यवाहकः ॥ ११८-१२० ॥

ततः स्वनाममुद्दिश्य विधिव[illegible] ।
कृतसङ्कल्पको मन्त्री गणेशादीन् समर्चयेत् ॥ १४३ ॥
बन्धूकाभं त्रिनेत्रं द्विरदवरमुखं नागयज्ञोपवीतं
शङ्खं चक्रं कृपाणं विमलसरसिजं [illegible]धानम् ।
उद्यद्बालेन्दुमौलिं दिनकरकिरणोद्दीप्तरत्नाङ्गशोभं
नानालङ्कारयुक्तं भजत गणपतिं रक्तपद्मोपविष्टम् ॥ १४४
एवं ध्यात्वा यथाशक्त्या पूजयित्वा गणेश्वरम् ।
ब्रह्माणञ्च ततो वाणीं विष्णुं लक्ष्मीं समर्चयेत् ॥ १४५ ॥
शिवं दुर्गां ग्रहांश्चापि तथा षोडश मातृकाः ।
घृतधारास्वपि वसूनिष्ट्वा कुर्य्यात् पितृक्रियाम् ॥ १४६ ॥
ततः प्रोक्तविधानेन मण्डलं वास्तुरक्षसः ।
निर्म्माय पूजयेत्तत्र वास्तुदैत्यं गणैः सह ॥ १४७ ॥
ततस्तु स्थण्डिलं कृत्वा वह्निं संस्कृत्य पूर्ववत् ।
धाराहोमान्तमाचर्य्य वास्तुहोमं समारभेत् ॥ १४८ ॥
यथाशक्त्याहुतीस्तस्मै परिवारगणाय च ।
तथा पूजितदेवेभ्यो दत्त्वा कर्म्म समापयेत् ॥ १४९ ॥

वास्तुयागक्रमादुक्तकृत्यानामनुष्ठानस्य क्रममाह [illegible]दिभिः || १४२ । १४३ ॥

अथ गणपतिध्यानमाह बन्धूकाभमित्याद्येन । बन्धूकाभम् बन्धूकपुष्पसदृशद्युतिम् उद्यद्बालेन्दुमौलिम् उद्यन् यो बाल इन्दुः बालचन्द्रः स मौलौ किरीटे यस्य तथाभूतम् दिनकरकिरणो-द्दीप्तरत्नाङ्गशोभम् दिनकरकिरणवदुद्दीप्तेन रत्नेनाङ्गे शोभा [illegible] तथाभूतम् ॥ १४४ । १४५ ॥

इष्ट्वा पूजयित्वा ॥ १४६ । १४७ ॥

आचर्य्य विधाय ॥ १४८ ॥

वास्तुयागे यदाख्यातं एष ते कथितः क्रमः ।
अनेनैव प्रकारेण यज्ञोऽपि विहितः प्रिये ! ॥ १५० ॥
जलाशयानां मुख्यत्वाद्वाङ्गत्वेन प्रपूजनम् ।
तत्पूजानन्तरं कार्य्यं वास्त्वर्चनमिति क्रमः ॥ १५१ ॥
[illegible] सर्वं वास्तुयागविधानवत् ।
वरुणस्य बीजमन्त्रौ च ध्यानं प्रागेव कीर्त्तितम् ॥ १५२ ॥
प्रसङ्गात् कथितौ भद्रे ! ग्रहवास्तुक्रतुक्रमौ ।
अथ प्रस्तुतकल्पानामुच्यते कूपसंस्क्रिया ॥ १५३ ॥
संकल्पं विधिवत् कृत्वा वास्तुपूजनमाचरेत् ।
मण्डले कलशे वापि शालग्रामे यथामति ॥ १५४ ॥
ततः पूज्यो गणपतिर्ब्रह्मा वाणी हरो रमा ।
शिवो दुर्गा ग्रहाश्चापि पूज्या दिक्पतयस्तथा ॥१५५॥
मातरो वसवोऽष्टौ च ततः कार्य्या पितृक्रिया ।
प्राधान्यं वरुणस्यात्र स हि पूज्यो विशेषतः ॥ १५६ ॥
नानोपचारैर्वरुणमर्च्चयित्वा स्वशक्तितः ।
विधिवत् संस्कृते वह्नौ वारुणं होममाचरेत् ॥ १५७ ॥
पूजितेभ्यश्च देवेभ्यो दत्त्वा प्रत्येकमाहुतिम् ।
पूर्णाहुत्यन्तकृत्येन होमकर्म समापयेत् ॥ १५८ ॥
ततो ध्वजपताकास्रग्गन्धसिन्दूरचर्च्चितम् ।
उत्प्रोक्षणमन्त्रेण प्रोक्षयेत् कूपमुत्तमम् ॥ १५९ ॥

तथैव वास्तुदेवाय ॥ १४९ ॥
अनेनैव क्रमेण ॥ १५० ॥
[illegible] ॥ १५१-१५२ ॥
[illegible] संकल्पमित्यादिभिः ॥ [illegible] ॥

ततः स्वकाममुद्दिश्य दैवमुद्दिश्य वा नरः ।
सर्वभूतप्रीणनायोत्सृजेत् कूपजलामलम् ॥ १६० ॥
कृताञ्जलिपुटो भूत्वा प्रार्थयेत् साधकाग्रणीः ।
सुप्रीयन्तां सर्वभूता नभोभूतोयवासिनः ॥ १६१ ॥
उत्सृष्टं सर्वभूतेभ्यो मयैतज्जलमुत्तमम् ।
तृप्यन्तु सर्वभूतानि स्नानपानावगाहनैः ॥ १६२ ॥
सामान्यं सर्वजीवेभ्यो मया दत्तमिदं जलम् ।
ये च केचिद्विपद्यन्ते स्वस्वकर्मविपाकतः ॥ १६३ ॥
तत्पापैर्न प्रलिप्येऽहं सफलास्तु मम क्रिया ।
ततस्तु दक्षिणां कृत्वा कृतसायाह्निकक्रियः ॥ १६४ ॥
ब्राह्मणान् भोजयेत् कौलान् दीनानपि बुभुक्षितान् ।
जलाशयप्रतिष्ठासु सर्वत्रैष क्रमः शिवे ! ॥ १६५ ॥
तडागादौ च कर्त्तव्या नागस्तम्भजलेचराः ॥ १६६ ॥
मीनमण्डूकमकरकूर्माश्च जलजन्तवः ।
कार्य्या धातुमयाश्चैते कर्त्तृवित्तानुसारतः ॥ १६७ ॥
मत्स्यौ स्वर्णमयौ कुर्य्यात् मण्डूकावपि हैमजौ ।
राजतौ मकरौ कूर्ममिथुनं ताम्ररीतिजम् ॥ १६८ ॥

अत्र कूपसंस्कारे सः वरुणः ॥ १५९-१६० ॥

ननु साधकाग्रणीः किं प्रार्थयेदित्याकाङ्क्षायामाह सुप्रीयन्तामित्यादिभिः ॥ १६१-१६५ ॥

तडागादिप्रतिष्ठायां यो विशेषस्तमाह तडागादावित्यादिभिः । तडागादौ संस्कार्य्ये सति नागस्तम्भो जलेचराश्च कर्त्तव्याः ॥ १६६ ॥

ननु किं द्रव्यमयाः के वा जलजन्तवः कर्त्तव्या इत्याकाङ्क्षायामाह मीनमण्डूकेत्यादिना ॥ १६७ ॥

एतैर्जलचरैः सार्द्धं तडागमपि दीर्घिकाम् ।
सागरं च समुत्सृज्य प्रार्थयन्नागमर्चयेत् ॥ १६९ ॥
अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः ।
कुलीरः कर्कटः शङ्खः पाथसां रक्षका इमे ॥ १७० ॥
इत्यष्टौ नागनामानि लिखित्वाश्वत्थपल्लवे ।
स्तुत्वा प्रणवगायत्र्यौ घटमध्ये विनिःक्षिपेत् ॥ १७१ ॥
चन्द्रार्कौ साक्षिणौ कृत्वा विलोड्यैकं समुद्धरेत् ।
ततोऽत्तिष्ठति यो नागस्तं कुर्यात्तोयरक्षकम् ॥ १७२ ॥
स्तम्भमेकं समानीय विंशद्धस्तमितं शुभम् ।
सरलं दारुजं तैलैश्चर्चितञ्च हरिद्रया ॥ १७३ ॥
स्नापयेत्तीर्थतोयेन व्याहृत्या प्रणवेन च ।

ननु किं धातुमयाः कृता वा मीनादयो जलजन्तवो विधातव्या इत्याकाङ्क्षायामाह मत्स्यौ स्वर्णमयावित्यादिना ॥ १६८ ॥

एतैरित्यादिना । एतैर्मीनादिभिर्जलचरैः सार्द्धं तडागं दीर्घिकां सागरं वापि समुत्सृज्य नागं प्रार्थयन् समर्चयेत् ॥ १६९ ॥

ननु कस्मिन् स्थाने कं वा नागमभ्यर्चयेत् किं वा प्रार्थयेदित्यपेक्षायामाह अनन्त इत्यादिना । इमेऽनन्तादयोऽष्टौ नागाः पाथसां जलानां रक्षका भवन्तीत्यन्वयः ॥ १७० ॥

इत्यष्टेत्यादिना । इत्येतान्यनन्तादीन्यष्टौ नागनामान्यश्वत्थपल्लवे लिखित्वा प्रणवगायत्र्यौ स्तुत्वा घटमध्ये विनिःक्षिपेत् ॥ १७१ ॥

चन्द्रार्कावित्यादिना । ततश्चन्द्रार्कौ साक्षिणौ कृत्वा लिखितनागनामाश्वत्थपल्लवान् विलोड्यैकं लिखितनागनामकमश्वत्थपल्लवं समुद्धरेत्, तत्र यो नाग उत्तिष्ठति तं नागं तोयरक्षकं कुर्यात् ॥ १७२ ॥

स्तम्भमित्यादिना । विंशद्धस्तमितं विंशतिहस्तपरिमितं सरल-

तत्र क्रीं श्रीं वमायाग्निसहितं नागमर्च्चयेत् ॥ १७४ ॥
नाग ! त्वं विष्णुशय्यासि महादेवविभूषणम् ।
स्तम्भमेनमधिष्ठाय जलरक्षां कुरुष्व मे ॥ १७५ ॥
इति प्रार्थ्य ततो नागस्तम्भं मध्येजलाशयम् ।
समारोप्य तड़ागस्य कर्त्ता कुर्य्यात् प्रदक्षिणम् ॥ १७६ ॥
यूपश्चेत् स्थापितः पूर्वं तदा नागं घटेऽर्च्चयन् ।
तज्जलं तत्र निक्षिप्य शिष्टं कर्म समापयेत् ॥ १७७ ॥
एवं गृहप्रतिष्ठायां कृतसंकल्पको बुधः ।
वास्त्वादिवसुपूजान्तं पैत्रं कर्म च कूपवत् ॥ १७८ ॥
विधायात्र विशेषेण यजेद्देवं प्रजापतिम् ।
प्राजापत्यस्य हवनं कुर्य्यात् साधकसत्तमः ॥ १७९ ॥

मन्त्रकं दारुजं काष्ठस्तम्भं तैलैर्हरिद्रया चोक्षितमभ्यक्तं शुभमेकं स्तम्भं समानीय व्याहृत्या प्रणवेन तीर्थतोयेन स्नापयेत्, तत्र स्नापिते स्तम्भे ह्रीं श्रीं वमायाग्निसहितं नागमर्च्चयेत् ॥ १७३ । १७४ ॥

नाग ! त्वमित्यादिना । हे नाग ! त्वं विष्णुशय्यासि महादेवभूषणञ्चासि एनं स्तम्भमधिष्ठाय मे मम जलरक्षां कुरुष्व ॥ १७५ ॥

इतीत्यादिना । इति नागं प्रार्थ्य ततो नागस्तम्भं मध्येजलाशयं जलाशयस्य मध्ये समारोप्य कर्त्ता तड़ागप्रदक्षिणं कुर्य्यात् मध्येजलाशयमिति, पारेमध्ये षष्ठ्या वेत्यनेनाव्ययीभावः ॥ १७६ ॥

यूप इत्यादिना । चेद्यदि यूपो नामस्तम्भः पूर्वमेव स्थापितो भवेत् तदा नागं घटेऽर्च्चयन् कर्त्ता तज्जलं घटस्थमभिजलं तत्र तड़ागे निःक्षिप्य शिष्टमवशेषं कर्म समापयेत् ॥ १७७ ॥

एवं जलाशयप्रतिष्ठाविधानमुक्त्वाऽथ गृहप्रतिष्ठाविधानमाह एवं गृहप्रतिष्ठायामित्यादिभिः ॥ १७८ ॥

अत्र गृहसंस्कारे ॥ १७९ ॥

गृहं पूर्वोक्तमन्त्रेण प्रोक्ष्य गन्धादिनार्चयन् ।
ईशानाभिमुखो भूत्वा प्रार्थयेद्विहिताञ्जलिः ॥ १८० ॥
प्रजापतिपते ! गेहे पुष्पमाल्यादिभूषितः ।
अस्माकं शुभवासाय सर्वथा सुखदो भव ॥ १८१ ॥
ततस्तु दक्षिणां कृत्वा शान्त्याशीर्वादमाचरेत् ।
विप्रान् कुलीनान् दीनांश्च भोजयेदात्मशक्तितः ॥१८२॥
अन्यार्थन्तु प्रतिष्ठा चेत् तदासायात्र यो जपेत् ।
देवताकृतगेहस्य विधानं शृणु शैलजे ! ॥१८३ ॥
इत्थं संस्कृत्य भवनं शङ्खतूर्य्यादिनिःस्वनैः ।
देवतासन्निधिं गत्वा प्रार्थयेद्विहिताञ्जलिः ॥ १८४ ॥
उत्तिष्ठ देवदेवेश ! भक्तानां वाञ्छितप्रद ! ।
आगत्य जन्मसाफल्यं कुरु मे करुणानिधे ! ॥ १८५ ॥

गृहमित्यादिना । ततः पूर्वोक्तमन्त्रेण गृहं प्रोक्ष्याभिषिच्य गन्धादिना गृहमर्च्चयन् कर्त्ता ईशानाभिमुखो भूत्वा विहिताञ्जलिः सन् गृहं प्रार्थयेत् ॥ १८० ॥

गृहं प्रति प्रार्थनामेवाह प्रजापतिपते इत्याद्येकेन । प्रजापतिः पतिर्यस्य स प्रजापतिपतिः तत्सम्बोधने प्रजापतिपते इति ॥ १८१ । १८२ ॥

अन्यार्थमित्यादिना । चेद्यद्यन्यार्थं गृहस्य प्रतिष्ठा विधीयते तदाऽत्र गृहप्रतिष्ठायां कर्त्तव्ये संकल्पे तद्दासायेति यो जपेत् । हे शैलजे ! पार्वति ! देवताधीनकृतगृहस्यदानस्य विधानं त्वं शृणु ॥ १८३ ॥

देवताकृतगेहदानविधानमेवाह इत्थमित्यादिभिः । इत्थं पूर्वोक्तविधानेन भवनं गृहं संस्कृत्य शङ्खतूर्य्यादिनिःस्वनैः सह देवतासन्निधिं गत्वा विहिताञ्जलिः सन् देवतां प्रार्थयेत् ॥ १८४ ॥

इत्यभ्यर्थ्य गृहाभ्यर्णे देवमानीय साधकः ।
उपस्थाप्य गृहद्वारि पुरतो वाहनं न्यसेत् ॥ १८६ ॥
त्रिशूलमथवा चक्रं विन्यस्य भवनोपरि ।
रोपयेन्मन्दिरेशाने सपताकं ध्वजं सुधीः ॥ १८७ ॥
चन्द्रातपैः किङ्किणीभिः पुष्पस्रक्चूतपल्लवैः ।
शोभयित्वा गृहं सम्यक् छादयेद्दिव्यवाससा ॥ १८८ ॥
उत्तराभिमुखं देवं वक्ष्यमाणविधानतः ।
स्नापयेद्विहितैर्द्रव्यैस्तत्क्रमं वच्मि ते शृणु ॥ १८९ ॥
ऐं क्लीं श्रीमिति मन्त्रान्ते मूलमन्त्रं समुच्चरन्
दुग्धेन स्नापयामि त्वां मातेव परिपालय ॥ १९० ॥
प्रोक्तबीजत्रयस्यान्ते तथा मूलं नियोजयन् ।
दध्ना त्वां स्नापयाम्यद्य भवतापहरो भव ॥ १९१ ॥

यत् प्रार्थयेत्तदाह उत्तिष्ठेत्यादिना ॥ १८५ ॥

इतीत्यादिना । साधको जन इत्यभ्यर्थ्य गृहाभ्यर्णे गृहसमीपे देवमानीय गृहद्वार्युपस्थाप्य च तस्य पुरतो वाहनं न्यसेत् स्थापयेत् ॥ १८६ ॥

त्रिशूलमित्यादिना । सुधीर्जनो भवनोपरि त्रिशूलमथ वा चक्रं विन्यस्य संस्थाप्य मन्दिरेशाने गृहेशानकोणे सपताकं पताका-सहितं ध्वजं रोपयेत् ॥ १८७ । १८८ ॥

तत्क्रमम् वक्ष्यमाणेन विधानेन विहितैः द्रव्यैर्देवस्नपनस्य क्रमम् ॥ १८९ ॥

तत्क्रममेवाह ऐं क्लीं श्रीमित्यादिभिः । ऐं क्लीं श्रीमिति मन्त्रान्ते मूलमन्त्रं समुच्चरन्, तदनु च दुग्धेन स्नापयामि त्वां मातेव परिपालयेति समुच्चरन् कर्ता पूर्वं दुग्धेन देवं स्नापयेत् ॥ १९० ॥

प्रोक्तेत्यादिना । ततःपरं प्रोक्तबीजत्रयस्यान्ते तथैव मूलं

पुनर्बीजत्रयं मूलं सर्वानन्दकरेति च।
मधुना स्नापितः प्रीतो मामानन्दमयं कुरु ॥ १९२ ॥
प्राग्वच्च तं समुच्चार्य सावित्रीं प्रणवं स्मरन्।
देवप्रियेण हविषा आयुः शुक्रेण तेजसा।
स्नानं ते कल्पयामीश। मामरोगं सदा कुरु ॥ १९३ ॥
तन्मन्त्रं च गायत्रीं व्याहृतिं समुदीरयन्।
देवेश! शर्करातोयैः स्नातो मे यच्छ वाञ्छितम् ॥१९४॥
तथा मूलं समुच्चार्य्य गायत्रीं वारुणं मनुम्।
विधात्रा निर्मितैर्दिव्यैः प्रियैःस्निग्धैरलौकिकैः।
नारिकेलोदकैः स्नानं कल्पयामि नमोऽस्तु ते ॥ १९५ ॥

मन्त्रं चिन्तिबीजत्रयं तदन्ते च, दध्ना त्वां स्नापयाम्यद्य भवतापहरो भवेति, समुच्चरन् कर्त्ता दध्ना देवं स्नापयेत् ॥ १९१ ॥

पुनरित्यादिना। पुनरैं ह्रीं श्रीमिति बीजत्रयं समुच्चरन्, तदन्ते च मूलं मन्त्रं समुच्चरन्, तदन्ते सर्वानन्दकरेति,समुच्चरन्, तदन्ते च मधुना स्नापितः प्रीतो मामानन्दमयं कुरु, इति समुच्चरन् कर्त्ता मधुना देवं स्नापयेत् ॥ १९२ ॥

प्राग्वदित्यादिना। प्राग्वदेव मूलं मन्त्रं समुच्चार्य्य ततः सावित्रीं गायत्रीं प्रणवमोङ्कारं च स्मरन् सन्, देवप्रियेण हविषा आयुः शुक्रेण तेजसा। स्नानन्ते कल्पयामीश! मामरोगं सदा कुरु, इति स्मरन् कर्त्ता हविषा देवं स्नापयेत्। आयुः शुक्रेण आयुः शुक्रवर्द्धकेन तेजसा तेजोजनकेन ॥ १९३ ॥

तन्मन्त्रमित्यादिना। तदेव मूलमन्त्रं गायत्रीं व्याहृतिञ्च समुदीरयन् ततो देवेश! शर्करातोयैः स्नातो मे यच्छ वाञ्छितमिति च समुदीरयन् कर्त्ता शर्करातोयैर्देवं स्नापयेत् ॥ १९४ ॥

तथेत्यादिना। तथैव मूलं मन्त्रं गायत्रीं वारुणं मनुं वमिति मन्त्रं च समुच्चार्य्य ततो, विधात्रा निर्मितैर्दिव्यैः प्रियैः स्निग्धै-

गायत्र्या मूलमन्त्रेण स्नापयेदिक्षुजैरसैः ॥ १९६ ॥
कामबीजं तथा तारं सावित्रीं मूलमीरयन् ।
कर्पूरागुरुकाश्मीरकस्तूरीचन्दनोदकैः ।
सुस्नातो भव सुप्रीतो भुक्तिमुक्ती प्रयच्छ मे ॥ १९७ ॥
इत्यष्टकलसैः स्नानं कारयित्वा जगत्पतिम् ।
गृहाभ्यन्तरमानीय स्थापयेदासनोपरि ॥ १९८ ॥
स्नापनार्हा न चेदर्चा तदन्ये वापि तज्जले ।
शालग्रामशिलायां वा स्नापयित्वा प्रपूजयेत् ॥ १९९ ॥
अशक्तो मूलमन्त्रेण स्नापयेच्छुद्धपाथसाम् ।
अष्टभिः कलसैर्यद्वा पञ्चभिः सप्तभिर्यथा ॥ २०० ॥

रलौकिकैः नारिकेलोदकैः स्नानं कल्पयामि नमोऽस्तु ते इति वदन् कर्त्ता नारिकेलजलैर्देवं स्नापयेत् ॥ १९५ ॥

ततो गायत्र्या मूलमन्त्रेण च इक्षुजैः रसैर्देवं स्नापयेत् ॥ १९६ ॥

कामबीजमित्यादिना । कामबीजं क्लीमिति बीजं तथा तारमोंकारं सावित्रीं गायत्रीं मूलं मन्त्रं चेरयन् वदन् कर्पूरागुरुकाश्मीरकस्तूरीचन्दनोदकैः सुस्नातो भव सुप्रीतो भुक्तिमुक्ती प्रयच्छ मे इति चोदीरयन् कर्त्ता कर्पूरादिवासितैर्जलैर्देवं स्नापयेत्, काश्मीरम् कुङ्कुमम् ॥ १९७ ॥

इतीत्यादिना । इत्यनेनैव विधानेन क्रमेण [illegible]कलसपरिमितैर्दुग्धादिभिः स्नानं कारयित्वा गृहाभ्यन्तरमानीय च जगत्पतिं देवमासनोपरि स्थापयेत् ॥ १९८ ॥

स्नापनार्हेत्यादिना । चेद्यद्यर्चा देवप्रतिमा [illegible] स्नापनयोग्या न भवेत् तदा तदन्ये देवतायन्त्रे तज्जले [illegible] वा शालग्रामशिलायां वा स्नापयित्वा देवं प्रपूजयेत् ॥ १९९ ॥

शतप्रमाणं शतीव कथितं चक्रपजने ।
सर्वेसरकलशेषु स एव विहितो घटः ॥ २०१ ॥
ततो यजेन्महादेवं स्वस्वपूजाविधानतः ।
पञ्चोपचारान् वक्ष्यामि शृणु देवि! परात्परे! ॥ २०२॥
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनं स्नानीयं वस्त्रभूषणे ॥ २०३ ॥
गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा ।
देवार्चने सुनिर्दिष्टा उपचाराश्च षोडश ॥ २०४ ॥
पाद्यमर्घ्यञ्चाचमनं मधुपर्काचमौ तथा ।
गन्धादिपञ्चकं चेति उपचारा दश स्मृताः ॥२०५॥
गन्धपुष्पे धूपदीपौ नैवेद्यञ्चापि कालिके! ।
पञ्चोपचाराः कथिता देवतायाः प्रपूजने ॥ २०६ ॥
प्रक्षेपार्घ्याम्भसा द्रव्यं प्रोक्ष्य धेनुं प्रदर्शयन् ।
सम्पूज्य गन्धपुष्पाभ्यां द्रव्याख्यानं समुल्लिखेत् ॥ २०७ ॥
वस्तसाधनमन्त्रं स्मृत्वा मूलञ्च देवताभिधाम् ।
सचतुर्थीं समुच्चार्य त्यागार्थं वचनं पठेत् ॥ २०८ ॥

[illegible] । दुग्धादिभिर्देवतायाः स्नापनेऽशक्तौ सत्यां [illegible] वा [illegible] घटानां अन्नानामष्टभिः सप्तभिः पञ्चभिर्वा [illegible] स्नापयेत् ॥ २०० । २०१ ॥

महादेवम् महान्तं देवम्, तत्र देवयजने ॥ २०२ ॥

[illegible] आसनमित्यादिभिः ॥ २०३ ॥

[illegible] ॥ २०४—२०६ ॥

[illegible] अस्त्रे चेत्यादिना । अस्त्रे च [illegible] द्रव्यमासनादिकं प्रोक्ष्याभिषिच्य तदु-

निवेदनविधिः प्रोक्तो देवे देयन्तु यद्यत् ।
अनेन विधिना विद्वान् द्रव्यं दद्यान्निवेदने ॥ २०९ ॥
आद्यार्चनविधौ पूर्वं पाद्याद्यीदिनिवेदनम् ।
अर्पणं कारणादीनां सर्वमेव प्रदर्शितम् ॥ २१० ॥
अनुक्तमन्त्रा ये तत्र तानेवात्र शृणु प्रिये ।
आसनाद्युपचाराणां प्रदाने विनियोजयेत् ॥ २११ ॥
सर्वभूतान्तरस्थाय सर्वभूतान्तरात्मने ।
कल्पयाम्युपवेशार्थमासनन्ते नमो नमः ॥ २१२ ॥
उक्तक्रमेण देवेशि ! प्रदायासनमुत्तमम् ।
कृताञ्जलिपुटो भूत्वा स्वागतं प्रार्थयेत्ततः ॥ २१३ ॥
देवाः स्वाभीष्टसिद्ध्यर्थं यस्य वाञ्छन्ति सङ्गमम् ।
सुस्वागतं स्वागतञ्च तस्मै ते परमात्मने ॥ २१४ ॥

परि धेनुं मुद्रां प्रदर्शयन् साधको गन्धपुष्पाभ्यां द्रव्यं सम्पूज्य द्रव्या-
त्मानं द्रव्यनाम सप्तम्यन्तमुच्चारयेत्, तदनन्तरं मन्त्रं स्मृत्वा पूर्वं नाम
सचतुर्थीं देवताभिधां च सम्प्रदाय स्वाहान्तं वचनं वदेत् ॥२०७।२०८॥
दिव्यौकसे देवाय ॥ २०९-२११ ॥
आद्यार्चनविधावनुक्तान्मन्त्रानेव कथयति सर्वभूतान्तरस्था-
येत्यादिना । हे देव ! सर्वेषां भूतानामन्तरे तिष्ठतीति सर्वभूतान-
रस्थस्तस्मै सर्वभूतान्तरस्थाय सर्वेषां भूतानामन्तरात्मने ते तुभ्यमुपवे-
शार्थमासनं कल्पयामि समर्पयामि ते तुभ्यं नमो नमोऽस्तु अनेन
मन्त्रेण देवायासनं दद्यात् ॥ २१२ ॥
उक्तेत्यादिना । हे देवेशि ! उक्तक्रमेण देवायोत्तममासनं प्रदाय
ततः कृताञ्जलिपुटो भूत्वा देवाः स्वाभीष्टसिद्ध्यर्थं यस्य सङ्गमम-
भीहयन्त्यतएव ! तस्मै स्वागतं सुस्वागतमस्तु इति
देवं प्रति प्रार्थयेत् ॥ २१३ ॥

अद्य मे सफलं जन्म जीवनं सफलाः क्रियाः ।
स्वागतं यत्त्वया तस्मै तपसां फलमागतम् ॥ २१५ ॥
देवमामन्त्र्य संप्रार्थ्य स्वागतप्रश्नमम्बिके ! ।
विहितं पाद्यमादाय मन्त्रमेतमुदीरयेत् ॥ २१६ ॥
यत्पादजलसंसर्गाच्छुद्धिमाप जगत्त्रयम् ।
तत्पादाब्जप्रोक्षणार्थं पाद्यन्ते कल्पयाम्यहम् ॥ २१७ ॥
परमानन्दसन्दोहो जायते यत्प्रसादतः ।
तस्मै सर्वात्मभूताय आनन्दार्घ्यं समर्पये ॥ २१८ ॥
जातीलवङ्गकक्कोलैर्जलं केवलमेव वा ।
प्रोक्षितार्चितमादाय मन्त्रेणानेन चार्पयेत् ॥ २१९ ॥

देवा इत्यादिना । हे परमात्मन् ! यस्य भवतो दर्शनं देवा अपि स्वाभीष्टसिद्ध्यर्थं वाञ्छन्ति तेन त्वया मे मदर्थं स्वागतं सुस्वागतं तस्मै परमात्मने ते तुभ्यं नमः ॥ २१४ ॥

अद्येत्यादि । हे देव ! यद्यतस्त्वया स्वागतं ततो हेतोरद्य मे मम जन्मजीवनञ्च सफलं जातं क्रिया अपि सफला जाताः मे मम तपसामपि फलमागतम् ॥ २१५ ॥

देवमित्यादि । हे अम्बिके ! देवमामन्त्र्य सम्बोध्य उक्तमन्त्रमुदीरयन् स्वागतप्रश्नं सम्प्रार्थ्य विहितं पाद्यमादाय गृहीत्वा एतं मन्त्रमुदीरयेदुदरेत् ॥ २१६ ॥

यं मन्त्रमुदीरयेत्तमाह यत्पादजलेति । हे परमेश्वर ! यत्पादजलसंसर्गाज्जगत्त्रयं शुद्धिमाप जगाम तत्पादाब्जप्रोक्षणार्थं ते तुभ्यं पाद्यमहं कल्पयामि समर्पयामि इमं मन्त्रमुदीर्य देवाय पाद्यं दद्यात् ॥ २१७ ॥

परमानन्दसन्दोह इत्यादि । परमानन्दसन्दोहः परमानन्दसमूहः अनेन मन्त्रेण देवायार्घ्यं दद्यात् ॥ २१८ ॥

यदुच्छिष्टमपस्पृष्टं शुचिमित्यखिलं जगत् ।
तस्मै मुखारविन्दाय आचमं कल्पयामि ते ॥ २२० ॥
मधुपर्कं समादाय भक्त्यानेन समर्पयेत् ॥ २२१ ॥
तापत्रयविनाशार्थमखण्डानन्दहेतवे ।
मधुपर्कं ददाम्यद्य प्रसीद परमेश्वर ! ॥ २२२ ॥
अशुचिः शुचितामेति यत्स्पृष्टस्पर्शमात्रतः ।
अस्मिंस्ते वदनाम्भोजे पुनराचमनीयकम् ॥ २२३ ॥
स्नानार्थं जलमादाय प्राग्वत् प्रोक्षितमर्चितम् ।
निधाय देवपुरतो मन्त्रमेतमुदीरयेत् ॥ २२४ ॥
यत्तेजसा जगद्व्याप्तं यतो जातमिदं जगत् ।
तस्मै ते जगदाधार ! स्नानार्थं तोयमर्पये ॥ २२५ ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।
अन्यद्रव्यप्रदानान्ते दद्यात्तोयं सकृत् सकृत् ॥ २२६ ॥

जातीत्यादि । प्रोक्षितमर्चितं च जातीलवङ्गकक्कोलैर्वासितं जलं केवलमेव वा जलमादायानेन वक्ष्यमाणेन मन्त्रेण देवायार्पयेत् ॥ २१९ ॥

तमेव मन्त्रमाह यदुच्छिष्टमिति । एति प्राप्नोति अनेन मन्त्रेणाचमनीयं देवतामुखे दद्यात् ॥ २२० ॥

ततो भक्त्या मधुपर्कं समादायानेन वक्ष्यमाणेन मन्त्रेण देवाय समर्पयेत् ॥ २२१ ॥

तमेव मन्त्रमाह तापत्रयविनाशार्थमिति ॥ २२२ ॥

ततः अशुचिः शुचितामेतीत्यादिना मन्त्रेण पुनः [illegible] आचमनीयं दद्यात् ॥ २२३ ॥

स्नानार्थमित्यादि । ततः प्राग्वत् प्रोक्षितमर्चितं च स्नानार्थं जलमादाय देवपुरतो निधाय संस्थाप्य चैतं मन्त्रमुदीरयेत् ॥ २२४ ॥

वस्त्रमानीय देवाय शोधितं पूर्वकर्मणा ।
धृत्वा कराभ्यामुत्तोल्य पठेदेतं मनुं सुधीः ॥ २२७ ॥
सर्वावरणहीनाय मायाप्रच्छन्नतेजसे ।
वाससी परिधानाय कल्पयामि नमोऽस्तु ते ॥ २२८ ॥
नानाभरणमादाय स्वर्णरौप्यादिनिर्मितम् ।
प्रोक्षयार्चयित्वा देवाय दद्यादेतं समुच्चरन् ॥ २२९ ॥
विश्वाभरणभूताय विश्वशोभैकयोनये ।
मायाविग्रहभूषार्थं भूषणानि समर्पये ॥ २३० ॥
गन्धतन्मात्रया सृष्टा येन गन्धवती धरा ।
तस्मै परात्मने तुभ्यं परमं गन्धमर्पये ॥ २३१ ॥
पुष्पं मनोहरं रम्यं सुगन्धं देवनिर्मितम् ।
मया निवेदितं भक्त्या पुष्पमेतत् प्रगृह्यताम् ॥ २३२ ॥
वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्वभूतानां धूपो घ्राणाय तेऽर्प्यते ॥ २३३ ॥

यं मन्त्रमुदीरयेत्तमाह, यत्ते जया जगद्व्याप्तमित्यादिना । अनेन मन्त्रेण देवाय स्नानार्थं जलं दद्यात् ॥ २२५—२२७ ॥

यं मनुं पठेत्तमाह सर्वावरणहीनायेत्यादिना । अनेन मन्त्रेण देवाय वस्त्रं दद्यात् ॥ २२८ । २२९ ॥

यं मन्त्रं समुच्चरन् देवाय भूषणानि दद्यात् तमेव मन्त्रमाह विश्वाभरणभूतायेत्यादिना ॥ २३० ॥

गन्धतन्मात्रयेत्यादिना । धरा पृथ्वी अनेन मन्त्रेण देवाय गन्धं दद्यात् ॥ २३१ ॥

पुष्पमित्यादिना मन्त्रेण देवाय पुष्पं दद्यात् ॥ २३२ ॥

वनस्पतिरस इत्यादि । वनस्पतिरसः वृक्षविशेषरसः अनेन मन्त्रेण देवाय धूपं दद्यात् ॥ २३३ ॥

सुप्रकाशो महादीप्तः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥२२४॥
नैवेद्यं स्वादुसंयुक्तं नानाभक्ष्यसमन्वितम् ।
निवेदयामि भक्त्येदं जुषाण परमेश्वर ! ॥ २२५ ॥
पानार्थं सलिलं देव ! कर्पूरादिसुवासितम् ।
सर्वतृप्तिकरं स्वच्छमर्पयामि नमोऽस्तु ते ॥ २२६ ॥
ततः कर्पूरखदिरलवङ्गैलादिभिर्युतम् ।
ताम्बूलं पुनराचम्यं दत्त्वा वन्दनमाचरेत् ॥ २२७ ॥
उपचाराधारदाने साधारद्रव्यमुल्लिखेत् ।
दद्याद्वा पृथगाधारं तत्तन्नाम समुच्चरन् ॥ २२८ ॥
इत्यमर्चितदेवाय दत्त्वा पुष्पाञ्जलित्रयम् ।
साच्छादन गृहं प्राच्य पठेदेतं कृताञ्जलिः ॥ २२९ ॥
गेह ! त्वं सर्वलोकानां पूज्यः पुण्ययशःप्रदः ।
देवतास्थितिदानेन सुमेरुसदृशो भव ॥ २४० ॥
त्वं कैलासश्च वैकुण्ठस्त्वं ब्रह्मभवनं गृह ! ।
यत्त्वया विधृता देवस्तस्मात्त्वं सुरवन्दितः ॥ २४१ ॥
यस्य कुक्षौ जगत् सर्वं वरीवर्त्ति चराचरम् ।
मायाविधूतदेहस्य तस्य मूर्त्तेर्विधारणात् ॥ २४२ ॥

सुप्रकाश इत्यादिना मन्त्रेण देवाय दीपं दद्यात् ॥ २२४ ॥

नैवेद्यमित्यादि । देवाय नैवेद्यं दद्यात् ॥ २२५ ॥

पानार्थं सलिलमित्यादि । कर्पूरादिसुवासितं पानार्थं जलं देवाय दद्यात् ॥ २२६-२२९ ॥

एतं कः पठेदित्याकाङ्क्षायामाह कृताञ्जलिः गेहत्वमित्यादि ॥ २४० ।२४१ ॥

देवमाद्यसमस्त्वं हि सर्वतीर्थमयस्तथा।
सर्वकामप्रदो भूत्वा शान्तिं मे कुरु ते नमः॥ २४३॥
इत्यभ्यर्च्य विरभ्यर्च्य गृहं चक्रादिसंयुतम्।
आत्मनः काममुद्दिश्य दद्याद्देवाय साधकः॥ २४४॥
विश्वावासाय वासाय गृहं ते विनिवेदितम्।
अङ्गीकुरु महेशान! कृपया सन्निधीयताम्॥ २४५॥
इत्युक्तार्पितगेहाय देवाय दत्तदक्षिणः।
शङ्खतूर्य्यादिघोषैस्तं स्थापयेद्वेदिकोपरि॥ २४६॥
स्पृष्ट्वा देवपदद्वन्द्वं मूलमन्त्रं समुच्चरन्।
स्थां स्थीं स्थिरो भवेत्युक्त्वा वासस्ते कल्पितो मया।
इति देवं स्थिरीकृत्य भवनं प्रार्थयेत् पुनः॥ २४७॥
गृह! देवनिवासाय सर्वथा प्रीतिदो भव।
त्वत्कृष्टे त्वयि मे लोकाः स्थिराः सन्तु निरामयाः॥२४८
द्विसप्तातीतपुरुषान् द्विसप्तानागतानपि।

कुक्षौ उदरे॥ २४२। २४३॥

इतीत्यादि। इति गृहमभ्यर्च्य त्रिरभ्यर्च्य च साधकश्चक्रादिसंयुतं गृहमात्मनः काममुद्दिश्य देवाय दद्यात्॥ २४४॥

विश्वेत्यादि। विश्वमावासो गृहं यस्य स विश्वावासः तस्मै॥ २४५॥

इतीत्यादि। इति प्रार्थनावाक्यं देवं प्रत्युक्त्वा अर्पितं दत्तं गेहं यस्मै सोऽर्पितगेहः तस्मै अर्पितगेहाय देवाय दत्तदक्षिणः सन् साधकः शङ्खतूर्य्यादिघोषैस्तं देवं वेदिकोपरि स्थापयेत्॥ २४६॥

स्पृष्ट्वेत्यादि। ततो देवपदद्वन्द्वं स्पृष्ट्वा पूर्वं मूलमन्त्रसंयुतेन स्थां स्थीं स्थिरो भव वासस्ते कल्पितो मयेति मन्त्रेण देवं स्थिरीकृत्य पुनर्भवनं गृहं प्रार्थयेत्॥ २४७॥

मां च मे परिवारांश्च देवधाम्नि निवासय ॥ २४९ ॥
यजनात् सर्वयज्ञानां सर्वतीर्थनिषेवणात् ।
यत्फलं तत्फलं मेऽद्य जायतां त्वत्प्रसादतः ॥२५०॥
यावत् वसुन्धरा तिष्ठेत् यावदेते धराधराः ।
यावद्दिवानिशानाथौ तावन्मे वर्त्ततां कुलम् ॥ २५१ ॥
इति प्रार्थ्य गृहं प्राज्ञः पुनर्देवं समर्चयन् ।
दर्पणाद्यन्यवस्तूनि ध्वजं चापि निवेदयेत् ॥ २५२ ॥
ततस्तु वाहनं दद्यात् यस्मिन् देवे यथोदितम् ।
शिवाय वृषभं दत्त्वा प्रार्थयेद्विहिताञ्जलिः ॥ २५३ ॥
वृषभ ! त्वं महाकायस्तीक्ष्णशृङ्गोऽरिघातकः ।
पृष्ठे वहसि देवेशं पूज्योऽसि त्रिदशैरपि ॥ २५४ ॥
खुरेषु सर्वतीर्थानि रोम्णि वेदाः सनातनाः ।
निगमागमतन्त्राणि दशनाग्रे वसन्ति ते ॥ २५५ ॥
त्वयि दत्ते महाभाग ! सुप्रीतः पार्वतीपतिः ।
वासं ददातु कैलासे त्वं मां पालय सर्वदा ॥ २५६ ॥
सिंहं दत्त्वा महादेव्यै गरुड़ं विष्णवे तथा ।
यथास्तूयान्महेशानि ! तन्मे निगदतः शृणु ॥२५७॥

ननु भवनं प्रति किं प्रार्थयेदित्यपेक्षायामाह गृह ! देवनिवासाये-त्यादिना । उत्सृष्टे दत्ते निरामयाः उपद्रवशून्याः ॥ २४८—२५० ॥

धराधराः पर्वताः ॥ २५१—२५३ ॥

ननु वृषभं प्रति किं प्रार्थयेदित्यपेक्षायामाह वृषभ ! त्वमि-त्यादि ॥ २५४ ॥

दशनाग्रे दन्ताग्रे ॥ २५५ ॥

सुप्रीतः भवतु इति शेषः ॥ २५६ । २५७ ॥


THE RAMAKRISHNA MISSION INSTITUTE OF CULTURE
LIBRARY
CALCUTTA

सुरासुरनियुद्धेषु महाबलपराक्रमः ।
देवानां जयदो भीमो दनुजानां विनाशकृत् ॥ २५८ ॥
सदा देवीप्रियोऽसि त्वं ब्रह्मविष्णुशिवप्रियः ।
देव्यै समर्पितो भक्त्या जहि शत्रून्नमोऽस्तु ते ॥ २५९ ॥
गरुत्मन्! पतगश्रेष्ठ! श्रीपतिप्रीतिदायक! ।
वज्रचञ्चो! तीक्ष्णनख! तव पक्षा हिरण्मयाः ।
नमस्तेऽस्तु खगेन्द्राय पक्षिराज! नमोऽस्तु ते ॥ २६० ॥
यथा करपुटेन त्वं संस्थितो विष्णुसन्निधौ ।
तथा मामरिदर्पघ्न! विष्णोरग्रे निवासय ॥ २६१ ॥
त्वयि प्रीते जगन्नाथः प्रीतः सिद्धिं प्रयच्छति ।
देवाय दत्तद्रव्याणां दद्याद्देवाय दक्षिणाम् ॥ २६२ ॥
तथा कर्मफलञ्चापि भक्त्या तस्मै समर्पयेत् ॥ २६३ ॥
नृत्यैर्गीतैश्च वादित्रैः सामात्यः सहबान्धवः ।
वेश्मप्रदक्षिणं कृत्वा देवं नत्वाशयेद्द्विजान् ॥ २६४ ॥
देवागारप्रतिष्ठायां य एष कथितः क्रमः ।
आरामसेतुसंक्रामशाखिनामीरितोऽपि सः ॥ २६५ ॥
विशेषेणात्र कृत्येषु पूज्यो विष्णुः सनातनः ।
पूजाहोमौ तथा सर्वं गृहदानविधानवत् ॥ २६६ ॥
अप्रतिष्ठितदेवाय नैव दद्यात् गृहादिकम् ।

सिंहस्तुतिमेव विदधाति सुरासुरेत्यादिभ्यां द्वाभ्याम् ॥२५८।२५९॥

अथ गरुड़स्तुतिं विदधाति गरुत्मन्नित्यादिभिस्त्रिभिः । गरुत्मन् गरुड़ पतगश्रेष्ठ ॥ २६०—२६२ ॥

तस्मै देवाय ॥ २६३ ॥

प्रतिष्ठितेऽर्चिते देवे पूजादानं विधीयते ॥ २६७ ॥
अथ तत्र श्रीमदाद्याप्रतिष्ठाक्रम उच्यते ।
येन प्रतिष्ठिता देवी तूर्णं यच्छति वाञ्छितम् ॥ २६८॥
तद्दिने साधकः प्रातः स्नातः शुचिरुदङ्मुखः ।
संकल्पं विधिवत् कृत्वा यजेद्दाद्यामीश्वरं ततः ॥२६९ ॥
ग्रहदिक्पतिहेरम्बाद्यर्चनं विघ्नकर्म च ।
विधाय साधकैर्विप्रैः प्रतिमासन्निधिं व्रजेत् ॥ २७० ॥
प्रतिष्ठितगृहे यद्वा कुत्रचित् शोभनस्थले ।
आनीयार्चामर्चयित्वा स्नापयेत् साधकोत्तमः ॥ २७१ ॥
भस्मना प्रथमं स्नानं ततो वल्मीकमृत्तया ।
वराहदन्तिदन्तोत्थमृत्तिकाभिस्ततः परम् ।
वेश्याद्वारमृदा चापि प्रद्युम्नह्रदजातया ॥ २७२ ॥
ततः पञ्चकषायेण पञ्चपुष्पैस्त्रिपत्रकैः ।
कारयित्वा गन्धतैलैः स्नापयेत् प्रतिमां सुधीः ॥२७३॥
वाट्यालबदरीजम्बुबकुलाः शाल्मलिस्तथा ।
एते निगदिताः स्नाने कषायाः पञ्च भूरुहाः ॥२७४॥

स्नापयेत् भोजयेत् ॥ २६४-२६८ ॥

श्रीमदाद्याक्रममेवाह तद्दिने साधक इत्यादिना । तद्दिने श्रीमदाद्याप्रतिष्ठादिने ॥ २६९ ॥

हेरम्बो गणेशः ॥ २७० ॥

प्रतिष्ठितेत्यादि । ततः साधकोत्तमः प्रतिष्ठितगृहे कुत्रचिच्छोभनस्थाने वा अर्चां प्रतिमामानीयार्चयित्वा च स्नापयेत् ॥२७१॥

ननु केन द्रव्येण प्रतिमां स्नापयेदित्यपेक्षायामाह भस्मनेत्यादिना ॥ २७२ । २७३ ॥

करवीरं तथा जातीचम्पकं सरसीरुहम् ।
पाटलीकुसुमञ्चापि पञ्चपुष्पं प्रकीर्त्तितम् ॥ २७५ ॥
बर्व्वुरातुलसीबिल्वं पत्रत्रयमुदाहृतम् ॥ २७६ ॥
एतेषु प्रोक्तद्रव्येषु जलयोगो विधीयते ।
पश्चात्तु गन्धतैले तोययोगं विवर्जयेत् ॥ २७७ ॥
सव्याहृतिं सप्रणवां गायत्रीं मूलमुच्चरन् ।
एतद्द्रव्यस्य तोयेन स्नापयामि नमो वदेत् ॥ २७८ ॥
ततः प्रागुक्तविधिना दुग्धाद्यैरष्टभिर्घटैः ।
कवोष्णसलिलैश्चापि स्नापयेत् प्रतिमां बुधः ॥ २७९ ॥
सितगोधूमचूर्णेन तिलकल्केन वा शिवाम् ।
शालीतण्डुलचूर्णेन मार्जयित्वा विरूक्षयेत् ॥ २८० ॥
तीर्थाम्भसामष्टघटैः स्नापयित्वा सुवाससा ।
सम्मार्जिताङ्गीं प्रतिमां पूजास्थानं समानयेत् ॥२८१॥
अशक्तौ शुद्धतोयानां पञ्चविंशतिसंख्यकैः ।
कलसैः स्नापयेदर्च्चां भक्त्या साधकसत्तमः ॥ २८२ ॥
स्नाने स्नाने महादेव्याः शक्त्या पूजनमाचरेत् ।

ननु कैः पञ्चकषायैः, कैः पञ्चपुष्पैस्त्रिपत्रकैश्च कैः, प्रतिमां स्नापयेदित्याकाङ्क्षायामाह वाब्बालेत्यादिना ॥ २७४ । २७६ ॥

ननु केवलैर्भक्षादिभिः प्रतिमां स्नापयेज्जलसंयुक्तैर्वा इत्यपेक्षायामाह एतेष्वित्यादिना ॥ २७७ ॥

ननु केन मन्त्रेण भक्षादिभिः प्रतिमां स्नापयेदित्यपेक्षायामाह सव्याहृतिमित्यादिना । पूर्वं सव्याहृतिं सप्रणवां गायत्रीमुच्चरन्, तत एतद्द्रव्यस्य तोयेन स्नापयामि नम इति वदेत् । अनेनैव मन्त्रेण जलसंयुक्तैः भक्षादिभिः प्रतिमां स्नापयेत् ॥ २७८ ॥

कवोष्णसलिलैः ईषदुष्णैर्जलैः ॥ २७९—२८१ ॥

ततो निवेश्य प्रतिमामासने सुपरिष्कृते ।
पाद्यार्घ्याद्यैरर्चयित्वा प्रार्थयेद्विहिताञ्जलिः ॥ २८३ ॥
नमस्ते प्रतिमे ! तुभ्यं विश्वकर्मविनिर्मिते ! ।
नमस्ते देवतावासे ! भक्ताभीष्टप्रदे ! नमः ॥२८५॥
त्वयि सम्पूजयाम्याद्यां परमेशीं परात्पराम् ।
शिल्पदोषावशिष्टाङ्गं सम्यक् कुरु ते नमः ॥ २८६ ॥
ततस्तत्प्रतिमामूर्द्ध्नि पाणिं विन्यस्य वाग्यतः ।
अष्टोत्तरशतं मूलं जप्त्वा गात्राणि संस्पृशेत् ॥ २८७ ॥
षड़ङ्गमातृकान्यासं प्रतिमाङ्गे प्रविन्यसन् ।
षड्दीर्घभाजा मूलेन षड़ङ्गन्यासमाचरेत् ॥ २८८ ॥
तारमायारमाद्यैश्च नमोऽन्तैर्बिन्दुसंयुतैः ।
अष्टवर्गैर्देवताङ्गे वर्णन्यासं प्रकल्पयेत् ॥ २८९ ॥
मुखे स्वरान् कवर्गञ्च कण्ठदेशे न्यसेत् बुधः ।
चवर्गमुदरे दक्षबाहौ टाद्यक्षराणि च ॥ २९० ॥
तवर्गञ्च वामबाहौ दक्षवामोरुयुग्मयोः ।
पवर्गञ्च यवर्गञ्च शवर्गं मस्तके न्यसेत् ॥ २९१ ॥

अर्च्चाम् प्रतिमाम् ॥ २८०—२८४ ॥

ननु प्रतिमां प्रति किं प्रार्थयेदित्यपेक्षायामाह नमस्ते प्रतिमे ! तुभ्यमित्यादिना ॥ २८५—२८७ ॥

षड़ङ्गेत्यादि । ततः पूर्वविधिना प्रतिमाङ्गे षड़ङ्गमातृकान्यासं प्रविन्यसन् साधकः षड्दीर्घभाजा मूलेन मन्त्रेणापि प्रतिमाङ्गे षड़ङ्गन्यासमाचरेत् कुर्य्यात् ॥ २८८ ॥

तारेत्यादिना । ततः तारमायारमाद्यैरोङ्कारह्रींश्रीकाद्यैर्नमोऽन्तैर्बिन्दुसंयुतैरनुस्वारसहितैरष्टवर्गैर्देवताङ्गे वर्णन्यासं प्रकल्पयेत् कुर्य्यात् ॥ २८९ ॥

वर्णन्यासं विधायेत्थं तत्त्वन्यासं समाचरेत् ॥ २९२॥
पादयोः पृथिवीतत्त्वं तोयतत्त्वञ्च लिङ्गके ।
तेजस्तत्त्वं नाभिदेशे वायुतत्त्वं हृदम्बुजे ॥ २९३ ॥
आस्ये गगनतत्त्वञ्च चक्षुषो रूपतत्त्वकम् ।
घ्राणयोर्गन्धतत्त्वञ्च शब्दतत्त्वं श्रुतिद्वये ॥ २९४ ॥
जिह्वायां रसतत्त्वञ्च स्पर्शतत्त्वं त्वचि न्यसेत् ।
मनस्तत्त्वं भ्रुवोर्मध्ये सहस्रदलपङ्कजे ॥ २९५ ॥
शिवतत्त्वं ज्ञानतत्त्वं परतत्त्वं तथोरसि ।
जीवप्रकृतितत्त्वे च विन्यसेत् साधकाग्रणीः ।
महत्तत्त्वमहङ्कारतत्त्वं सर्वाङ्गके क्रमात् ॥ २९६ ॥
तारमायारमाद्येन ङे नमोऽन्तेन विन्यसेत् ॥ २९७॥
सबिन्दु मातृकावर्णपुटितं मूलमुच्चरन् ।
नमोऽन्तं मातृकास्थाने मन्त्रन्यासं प्रयोजयेत् ॥२९८॥
सर्वयज्ञमयं तेजः सर्वभूतमयं वपुः ।
इयं ते कल्पिता मूर्त्तिरत्र त्वां स्थापयाम्यहम् ॥२९९॥

ननु कस्मिन् कस्मिन् देवताङ्गे कं कं वर्णं न्यसेदित्याकाङ्क्षाया-माह मुखे स्वरानित्यादिना ॥ २९०—२९२ ॥

ननु कस्मिन् कस्मिन् देवताङ्गे किं किं तत्त्वं न्यसेदित्याकाङ्क्षाया-माह पादयोः पृथिवीतत्त्वमित्यादिना ॥ २९३—२९६ ॥

ननु केन मन्त्रेण पृथिवीतत्त्वादिकं पादादौ न्यसेदित्यपेक्षायामाह तारेत्यादिना । तारमायारमाद्येन ओं ह्रीं श्रीमादिना नमोऽन्तेन पृथिवीतत्त्वादिना मन्त्रेण पृथिवीतत्त्वादिकं पादादौ विन्यसेत् ॥२९७॥

सबिन्दित्यादि । ततः सबिन्दु मातृकावर्णपुटितं सानुस्वारैर्मातृकावर्णैराद्यावन्ते च संयुक्तं नमोऽन्तं मूलं मन्त्रमुच्चरन् मातृकास्थाने मन्त्रन्यासं प्रयोजयेत् विदध्यात् ॥ २९८ ॥

ततः पूजाविधानेन ध्यानमावाहनादिकम् ।
प्राणप्रतिष्ठां सम्पाद्य पूजयेत् परदेवताम् ॥ ३०० ॥
देवगेहप्रदाने तु ये ये मन्त्राः समीरिताः ।
त एवात्र प्रयोक्तव्या मन्त्रलिङ्गेन पूजने ॥ ३०१ ॥
विधिवत् संस्कृते वह्नावर्चितेभ्योऽर्चिताहुतिः ।
आवाह्य देवीं सम्पूज्य जातकर्माणि साधयेत् ॥ ३०२ ॥
जातनाम्नो निष्क्रमणमन्नप्राशनमेव च ।
चूडोपनयनं चैते षट् संस्काराः शिवोदिताः ॥ ३०३ ॥
प्रणवं व्याहृतिं चैव गायत्रीं मूलमन्त्रकम् ।
सामन्त्रणाभिधानं ते जातकर्मादि नाम च ॥ ३०४ ॥
सम्पादयाम्यग्निकान्तां समुच्चार्य्य विधानवित् ।
पञ्चपञ्चाहुतीर्दद्यात् प्रति संस्कारकर्म्मणि ॥ ३०५ ॥
दत्तनाम्नाहुतिशतं मूलोच्चारणपूर्वकम् ।
देव्यै दत्ताहुतेरंशं प्रतिमामूर्द्ध्नि निःक्षिपेत् ॥ ३०६ ॥
प्रायश्चित्तादिभिः शेषं कर्म्म सम्पादयन् सुधीः ।
भोजयेत् साधकान् विप्रान् दीनानाथांश्च तोषयेत् ॥ ३०
उक्तकर्म्मस्वशक्तश्चेत् पायसैः सर्पिभिर्घटैः ।
स्नापयित्वार्च्चयन् शक्त्या श्रावयेन्नाम देवताम् ॥ ३०८ ॥
इति ते श्रीमदाद्यायाः प्रतिष्ठा कथिता प्रिये ! ।
एवं दुर्गादिविद्यानां महेशादिदिवौकसाम् ॥ ३०९

ततः सर्वंयममयं तेज इत्यादि । देवीं प्रार्थयेत्, वपुः नर्बो
षेध: ॥ २९९—३०२ ॥

ननु केन मन्त्रेणेत्याकाङ्क्षायामाह प्रणवमित्यादि प्रथमतो
ततो व्याहृतिं भूरादिं ततो गायत्रीं ततो मूलमन्त्रं ततः सामन्त्रण।

चलतः शिवलिङ्गस्य प्रतिष्ठायामयं विधिः ।
प्रवीणस्तत्र विज्ञानमार्गेणास्य सामोदपूर्वकम् ॥ २१० ॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे
श्रीमदाद्यासदाशिवसंवादे आद्याप्रतिष्ठानुष्ठाने
वास्तुयज्ञयागजलाशयादिप्रतिष्ठादेवगृहदाना-
द्यादिसर्वदेवप्रतिष्ठाकथनं नाम
त्रयोदशोल्लासः ।

भिधानमासन्नमसहितदेवीनाम ततस्ते इति पदं ततो जातकर्मादि नाम ततः कल्पादयामीति पदं ततोऽग्निकान्तां स्वाहेति पदञ्च सम् स्नाप्य विधानवित् साधको देव्या जातकर्माणि साधयेदिति पूर्वेणान्वयो विधेयः ॥ २०४—२१० ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां त्रयोदशोल्लासः ॥

---

## अथ चतुर्दशोल्लासः ।

श्रीदेव्युवाच ।

आद्यशक्तेरनुष्ठानात् कृपया भूरिसाधनम् ।
कथितं मे कृपानाथ ! तृप्तास्मि तव भाषतः ॥ १ ॥
सचलस्यैव लिङ्गस्य प्रतिष्ठाविधिरीरितः ।
अचलस्य प्रतिष्ठायां किं फलं विधिरेव कः ॥ २ ॥

एवं सकलदेवानां सचलस्य शिवलिङ्गस्यापि प्रतिष्ठाया वि-
कथनं श्रुत्वेदानीमचलस्य शिवलिङ्गस्य प्रतिष्ठायाः फलं विधिं च श्रोतु-
मिच्छन्ती श्रीदेव्युवाच आद्यशक्तेरित्यादिना । भाषतः प्रीतितः ॥१॥

कथयस्व जगतां नाथ ! श्रुतिभेदेन साम्प्रतम् ।
इदं हि परमं तत्त्वं प्रष्टुं कस्य करोमि भोः ॥ ३ ॥
त्वत्तः कोऽस्ति सर्व्वज्ञो दयालुः सर्व्वविद्विभुः ।
आशुतोषो दीननाथो ममानन्दविवर्द्धनः ॥ ४ ॥

श्रीसदाशिव उवाच ।

शिवलिङ्गस्थापनस्य माहात्म्यं किं ब्रवीमि ते ।
यत्स्थापनान्महापापैर्मुक्तो याति परं पदम् ॥ ५ ॥
सर्व्वपूर्णमहीदानाद्वाजिमेधायुतार्ज्जनात् ।
निस्तोये तोयकरणात् दीनार्त्तपरितोषणात् ॥ ६ ॥
यत् फलं लभते मर्त्त्यस्तस्मात् कोटिगुणं फलम् ।
शिवलिङ्गप्रतिष्ठायां लभते नात्र संशयः ॥ ७ ॥
लिङ्गरूपी महादेवो यत्र तिष्ठति कालिके ! ।
तत्र ब्रह्मा च विष्णुश्च सेन्द्रास्तिष्ठन्ति देवताः ॥ ८ ॥
सार्द्धत्रिकोटितीर्थानि दृष्टादृष्टानि यानि च ।
पुण्यक्षेत्राणि सर्व्वाणि वर्त्तन्ते शिवसन्निधौ ॥ ९ ॥
लिङ्गरूपधरं शम्भुं परितो दिग्विदिक्षु च ।
शतहस्तप्रमाणेन शिवक्षेत्रं प्रकीर्त्तितम् ॥ १० ॥
ईशक्षेत्रं महापुण्यं सर्व्वतीर्थोत्तमोत्तमम् ।
यत्रामरा विराजन्ते सर्व्वतीर्थानि सर्व्वदा ॥ ११ ॥

परमकारुणिकमाशुतोषं सर्वज्ञमपरं त्वाम् पृच्छ मां किं पुनः पुनः पृच्छसि तत्राह इदं हि परमं तत्त्वमित्यादिना ॥ ३ ॥

सर्वविद् सर्वविचारकः ॥ ४ ॥

प्रथमतः शिवलिङ्गप्रतिष्ठायाः फलं श्रीसदाशिव उवाच शिवलिङ्गस्थापनस्येत्यादिभिः ॥ ५-९ ॥

क्षणमात्रं शिवक्षेत्रे यो वसेद्भावतत्परः ।
स सर्व्वपापनिर्मुक्तो यात्यन्ते महदालयम् ॥ १२ ॥
अत्र यत् क्रियते कर्म्म स्वल्पं वा बहुलं तथा ।
प्रभावाद्धूर्जटेस्तस्य तत्तत् कोटिगुणं भवेत् ॥ १३ ॥
यत्र तत्र कृतात् पापात् मुच्यते शिवसन्निधौ ।
शैवक्षेत्रे कृतं पापं वज्रलेपसमं प्रिये ! ॥ १४ ॥
पुरश्चर्य्यां जपं होमं श्राद्धं तर्पणमेव च ।
यत् करोति शिवक्षेत्रे तदनन्ताय कल्पते ॥ १५ ॥
पुरश्चर्य्याशतं कृत्वा षष्टे समिद्धिनिश्चयौः ।
यत् फलं तदवाप्नोति सकृज्जप्त्वा शिवान्तिके ॥ १६ ॥
गयागङ्गाप्रयागेषु कोटिपिण्डप्रदो नरः ।
यत् प्राप्नोति तदत्रैव सकृत् पिण्डप्रदानतः ॥ १७ ॥
अतिपातकिनो ये च महापातकिनश्च ये ।
शैवतीर्थे कृतश्राद्धास्तेऽपि यान्ति परां गतिम् ॥ १८ ॥
लिङ्गरूपी जगन्नाथो देव्या श्रीदुर्गया सह ।
यत्रास्ति तत्र तिष्ठन्ति भुवनानि चतुर्दश ॥ १९ ॥
स्थापितेशस्य माहात्म्यं किञ्चिदेतत् प्रकाशितम् ।
अनादिभूतभूतेशमहिमा वागगोचरः ॥ २० ॥
महापीठे तवाम्बायामस्पृश्यस्पर्शदूषणम् ।
विद्यते सुव्रते ! नैतल्लिङ्गरूपधरे हरे ॥ २१ ॥

परितः सर्वतः ॥ १०—१२ ॥
अत्र शिवक्षेत्रे धूर्जटेः शिवस्य ॥ १३—१५ ॥
षष्टे षष्ट्ये ॥ १६ । १७ ॥
कृतं श्राद्धं येषां ते कृतश्राद्धाः ॥ १८—२१ ॥

यथा चक्राश्रमे देवि ! कोऽपि तीर्थो न विद्यते ।
शिवक्षेत्रे महातीर्थे तथा जानीहि कालिके ! ॥ २२ ॥
बहुनात्र किमुक्तेन तवाग्रे सत्यमुच्यते ।
प्रभावः शिवलिङ्गस्य मया वक्तुं न शक्यते ॥ २३ ॥
अयुक्तवेदिकं लिङ्गं युक्तं वेदिकयापि वा ।
साधकः पूजयेद्भक्त्या स्वाभीष्टफलसिद्धये ॥ २४ ॥
प्रतिष्ठापूर्व्वसायाह्ने देवतां योऽधिवासयेत् ।
सोऽश्वमेधायुतफलं लभते साधकोत्तमः ॥ २५ ॥
मही गन्धः शिला धान्यं दूर्व्वा पुष्पं फलं दधि ।
घृतं स्वस्तिकसिन्दूरं शङ्खकज्जलरोचनाः ॥ २६ ॥
सिद्धार्थं काञ्चनं रौप्यं ताम्रं दीपश्च दर्पणम् ।
अधिवासविधौ विंशत् द्रव्याण्येतानि योजयेत् ॥ २७ ॥
प्रत्येकं द्रव्यमादाय मायया ब्रह्मविद्यया ।
अनेनामुष्यपदतः शुभमस्त्वधिवासनम् ॥ २८ ॥
इति स्पृशेत् साध्यभालं मह्याद्यैः सर्व्ववस्तुभिः ।
ततः प्रशस्तिपात्रेण त्रिधैवमधिवासयेत् ॥ २९ ॥
अनेन विधिना देवमधिवास्य विधानवित् ।

स्थापनस्य शिवलिङ्गस्य प्रतिष्ठाया विधिमाह प्रतिष्ठापूर्व्वसायाह्ने इत्यादिभिः ॥ २५—२७ ॥

ननु केन केन वस्तुना देवतामधिवासयेदित्याकाङ्क्षायामाह प्रत्येकमित्यादि । प्रत्येकं मह्यादिद्रव्यमादाय गृहीत्वा मायया ह्रीं वीजेन विशिष्टया ब्रह्मविद्यया गायत्र्या संयुक्तेनानेन द्रव्येणामुष्यदेवतस्य शुभमधिवासनमस्तु इति मन्त्रेण मह्याद्यैः सर्व्ववस्तुभिः साध्यदेवस्य भालं स्पृशेत्, ततःपरं प्रशस्तिपात्रेण त्रिधा त्रिवारमनेन विधिना देवमधिवासयेत् ॥ २८ । २९ ॥

महास्नानविधानेन दुग्धाद्यैः स्नापयेत्ततः ॥ २० ॥
सम्मार्ज्य वाससा लिङ्गं स्थापयित्वासनोपरि ।
पूजानुष्ठानविधिना गणेशादीन् समर्चयेत् ॥ २१ ॥
प्रणवेन करन्यासौ प्राणायामं विधाय च ।
ध्यायेत् सदाशिवं शान्तं चन्द्रकोटिसमप्रभम् ॥ २२ ॥
व्याघ्रचर्म्मपरीधानं नागयज्ञोपवीतिनम् ।
विभूतिलिप्तसर्व्वाङ्गं नागालङ्कारभूषितम् ॥ २३ ॥
धूम्रपीतारुणश्वेतरक्तैः पञ्चभिराननैः ।
युक्तं त्रिनयनं बिभ्रज्जटाजूटधरं विभुम् ॥ २४ ॥
गङ्गाधरं दशभुजं शशिशोभितमस्तकम् ।
कपालं पावकं पाशं पिनाकं परशुं करैः ॥ २५ ॥
वामैर्दधानं दक्षैश्च शूलं वज्राङ्कुशं शरम् ।
वरञ्च बिभ्रतं सर्व्वैर्देवैर्मुनिवरैः स्तुतम् ॥ २६ ॥
परमानन्दसन्दोहोल्लसत्कुटिललोचनम् ।
हिमकुन्देन्दुसङ्काशं वृषासनविराजितम् ॥ २७ ॥
परितः सिद्धगन्धर्व्वैरप्सरोभिरहर्निशम् ।
गीयमानमुमाकान्तमेकान्तशरणप्रियम् ॥ २८ ॥
इति ध्यात्वा महेशानं मानसैरुपचारकैः ।
संपूज्यावाह्य तल्लिङ्गे यजेच्छक्त्या विधानवित् ॥ २९ ॥
आसनाद्युपचाराणां दाने मन्त्राः पुरोदिताः ।
मूलमन्त्रमनुं वक्ष्ये महेशस्य महात्मनः ॥ ४० ॥

बिभ्रत् बिभ्रतम् । सर्पा ऋजुगत्वमोचुक् ॥ २४ । ३५ ॥
बिभ्रतं दधतम् ॥ २६ ॥
परमानन्दसन्दोहोल्लसत्कुटिललोचनम् परमानन्दसन्दोहेनोल्ल-

माया तारः शब्दबीजं सन्ध्यर्णान्ताक्षरान्वितम् ।
अर्द्धेन्दु बिन्दु भूषाढ्यं शिवबीजं प्रकीर्त्तितम् ॥ ४१ ॥
सुगन्धिपुष्पमाल्येन वाससाच्छाद्य शङ्करम् ।
निवेश्य दिव्यशय्यायां वेदीमेवं विशोधयेत् ॥ ४२ ॥
वेद्यां प्रपूजयेद्देवीमित्थमेव विधानतः ।
माययात्र करन्यासौ प्राणायामं समाचरेत् ॥ ४३ ॥
उद्यद्भानुसहस्रकान्तिममलां वक्रार्कचन्द्रेक्षणाम्
मुक्तायन्वितहेमकुण्डलत्सत्-श्री राननाम्भोरुहाम् ।
हस्ताब्जैरभयं वरञ्च दधतीं चक्रं तथाब्जं दधत्
पीनोत्तुङ्गपयोधरां भयहरां पीताम्बरां चिन्तये ॥ ४४ ॥

सन्ति कुटिलानि च लोचनानि यस्य तथाभूतम् । सन्दोहः समूहः ॥ ३७—४० ॥

महेशस्य मूलमन्त्रमेवाह मायेत्यादि । पूर्वं माया ह्रीं बीजमुच्यते ततस्तारः प्रणवो वाच्यः ततः सन्ध्यर्णान्ताक्षरान्वितं सन्ध्यक्षरान्ताक्षरसंयुक्तमर्द्धेन्दुबिन्दु भूषाढ्यञ्च शब्दबीजं हकाररूपमक्षरं वाच्यम् । सकलपदयोजनया ह्रीं ओं ह्रौं इति शिवबीजं प्रकीर्त्तितम् ॥ ४१ ॥ ४२ ॥

मायया ह्रींबीजेन ॥ ४३ ॥

अथ महादेव्याध्यानमाहैकेन उद्यद्भान्वित्यादिना । महादेवीमहं चिन्तये कथम्भूतां महादेवीम्, उद्यद्भानुसहस्रकान्तिम् उद्यतां भानूनां सूर्य्याणां सहस्रस्येव कान्तिर्दीप्तिर्यस्याः तथाभूताम् । पुनः कीदृशीम्, अमलां निर्म्मलाम् । पुनः कीदृशीम्, वक्रार्कचन्द्रेक्षणाम् वक्रार्कचन्द्राः ईक्षणानि लोचनानि यस्यास्तथाभूताम् । पुनः कीदृशीम्, मुक्तायन्वितहेमकुण्डलत्सत्-श्री राननाम्भोरुहाम्, मुक्ताभिर्यन्विताभ्यां सम्बद्धाभ्यां हेमकुण्डलाभ्यां लसन्तीमनां श्रीस्तीवृद्धमपीश्वरमानमाम्भोरुहं मुख-

इति ध्यात्वा महादेवीं पूजयेन्निजशक्तितः ।
ततस्तु रुद्र दिक्पालान् वृषभञ्च समर्च्चयेत् ॥ ४५ ॥
भगवत्या मनुं वक्ष्ये येनाराध्या जगन्मयी ॥ ४६ ॥
मायां लक्ष्मीं समुच्चार्य्य सान्तं षष्ठस्वरान्वितम् ।
बिन्दुयुक्तं तदन्ते च योजयेद्वह्निवल्लभाम् ॥ ४७ ॥
पूर्व्ववत् स्थापयन् देवीं सर्व्वदेवबलिं हरेत् ।
दधियुक्तमाषभक्तं शर्करादिसमन्वितम् ॥ ४८ ॥
ऐशान्यां बलिमादाय वारुणेन विशोधयेत् ।
संपूज्य गन्धपुष्पाभ्यां मन्त्रेणानेन चार्पयेत् ॥ ४९ ॥
सर्व्वे देवाः सिद्धगणा गन्धर्व्वोरगराक्षसाः ।
पिशाचा मातरो यक्षा भूताश्च पितरस्तथा ॥ ५० ॥
ऋषयो येऽन्यदेवाश्च बलिं गृह्णन्तु संयताः ।
परिवार्य्य महादेवं तिष्ठन्तु गिरिजामपि ॥ ५१ ॥

पद्मं यस्याः तथाभूताम् । पुनः कीदृशीम्, हस्ताब्जैः पाणिकमलैरभयं वरं चक्रं तथा सुगन्धादिकं दधदब्जं कमलं च दधतीम् । पुनः कीदृशीम्, पीनोत्तुङ्गपयोधराम्, पीनौ महान्तावुत्तुङ्गावुन्नतौ पयोधरौ स्तनौ यस्यास्तथाभूताम् । पुनः कीदृशीम्, भयहराम्, भयहर्त्रीम्, पुनः कीदृशीम्, पीताम्बराम्, पीतमम्बरं वस्त्रं यस्यास्तथाभूताम् ॥४४=४६॥

भगवत्या मन्त्रमेवाह मायामित्यादि । मायां ह्रींबीजं लक्ष्मीं श्रींबीजं च समुच्चार्य्य ततः षष्ठस्वरान्वितं बिन्दुयुक्तं च सान्तं वर्णं समुच्चार्य्य तदन्ते, वह्निवल्लभां योजयेत् । सकलपदयोजनया ह्रीं श्रीं हूं स्वाहेति मन्त्रो जातः ॥ ४७ ॥

पूर्ववदित्यादि । ततः पूर्ववच्छिवलिङ्गवत् सुगन्धिपुष्पमाल्येन वाससा चाच्छाद्य दिव्यशय्यायां देवीं स्थापयन् सन् दधियुक्तं शर्करादिसमन्वितं च माषभक्तं सर्व्वदेवबलिं हरेद्दद्यात् ॥ ४८ ॥

ततो जपेन्महादेव्या मन्त्रमेतं यथेप्सितम्
गीतवाद्यादिभिः सद्भिर्विदध्याज्जागरक्रियाम् ॥ ५२ ॥
अधिवासं विधायेत्थं परेऽह्नि विहितक्रियः ।
संकल्पं विधिवत् कृत्वा पञ्च देवान् प्रपूजयेत् ॥ ५३ ॥
मातृपूजां वसोर्धारां वृद्धिश्राद्धं समाचरन् ।
महेशद्वारपालांश्च यजेत् भक्त्या समाहितः ॥ ५४ ॥
नन्दी महाबलः कीशवदनो गणनायकः ।
द्वारपालाः शिवस्यैते सर्वे शस्त्रास्त्रपाणयः ॥ ५५ ॥
ततो लिङ्गं समानीय वेदीरूपां च तारिणीम् ।
मण्डले सर्वतोभद्रे स्थापयेद्वा शुभासने ॥ ५६ ॥
अष्टभिः कलसैः शम्भुं मनुना त्र्यम्बकेन च ।
स्नापयित्वार्च्चयेत् भक्त्या षोड़शैरुपचारकैः ॥ ५७ ॥
वेदीं च मूलमन्त्रेण तद्वत् संस्थाप्य पूजयन् ।
कृताञ्जलिपुटः साधुः प्रार्थयेत् शङ्करं शिवम् ॥ ५८ ॥
आगच्छ भगवन् शम्भो ! सर्वदेवनमस्कृत ! ।

ननु केन विधिना सर्वदेवबलिं दद्यादित्याकाङ्क्षायामाह ऐशान्यामित्यादि । वारुणेन वमिति मन्त्रेण ॥ ४९ ॥

सर्वदेवबलिसमर्पणमन्त्रमेवाह सर्वे देवाः शिवगणा इत्यादि ॥ ५० ॥ ५१ ॥

एतम् ह्रीं श्रीं क्रूं स्वाहेतीमम् ॥ ५२ ॥

पञ्च देवान् अर्कादीन् ॥ ५३ ॥ ५४ ॥

सम्पूज्यान्महेशद्वारपालानाह नन्दीत्यादिश्लोकेन ॥ ५५ ॥ ५६ ॥

मनुना ह्रौमों ह्रौं इति मन्त्रेण त्र्यम्बकेन त्र्यम्बकं यजामहे इत्यादि मन्त्रेण ॥ ५७ ॥

मूलमन्त्रेण ह्रीं श्रीं क्रूं स्वाहेति मन्त्रेण ॥ ५८ ॥

पिनाकपाणे ! सर्व्वेश ! महादेव ! नमोऽस्तु ते ॥ ५९॥
आगच्छ मन्दिरे देव ! भक्तानुग्रहकारक ! ।
भगवत्या सहागच्छ कृपां कुरु नमो नमः ॥ ६०॥
मातर्देवि ! महामाये ! सर्व्वकल्याणकारिणि ! ।
प्रसीद शम्भुना सार्द्धं नमस्तेऽस्तु हरप्रिये ! ॥ ६१ ॥
आयाहि वरदे ! देवि ! भवनेऽस्मिन् वरप्रदे ! ।
प्रीता भव महेशानि ! सर्व्वसम्पत्करी भव ॥ ६२ ॥
उत्तिष्ठ देवदेवेशि ! स्वैः स्वैःपरिकरैः सह ।
सुखं निवसतां गेहे प्रीयेतां भक्तवत्सलौ ॥ ६३ ॥
इति प्रार्थ्य शिवं देवीं मङ्गलध्वनिपूर्व्वकम् ।
प्रदक्षिणं त्रिधा वेश्म कारयित्वा प्रवेशयेत् ॥ ६४ ॥
पाषाणखनिते गर्त्ते इष्टकारचितेऽपि वा ।
अधस्त्रिभागलिङ्गस्य रोपयेन्मूलमुच्चरन् ॥ ६५ ॥
यावच्चन्द्रश्च सूर्य्यश्च यावत् पृथ्वी च सागराः ।
तावदत्र महादेव ! स्थिरो भव नमोऽस्तु ते ॥ ६६ ॥
मन्त्रेणानेन सुदृढं कारयित्वा सदाशिवम् ।
उत्तरायां तत्र वेदीं मूलेनैव प्रवेशयेत् ॥ ६७ ॥
स्थिरा भव जगद्धात्रि ! सृष्टिस्थित्यन्तकारिणि ! ।
यावद्दिवानिशानाथौ तावदत्र स्थिरा भव ॥ ६८ ॥

ननु मङ्कुरं शिवाय प्रति किं प्रार्थयेदित्यपेक्षायामाह आगच्छ भगवन् मन्त्री इत्यादि ॥ ५९—६४ ॥

पाषाणेत्यादि । ततो मूलं मन्त्रमुच्चरन् साधकः पाषाणे खनिते इष्टकारचितेऽपि वा गर्त्ते लिङ्गस्याधस्त्रिभागमधो रोपयेत् ॥ ६५ ॥६६॥

मन्त्रेणेत्यादि ।

अनेन सुदृढ़ीकृत्य लिङ्गं स्पृष्ट्वा पठेदिमम् ॥ ६९ ॥
व्याघ्रभूताः पिशाचाश्च गन्धर्वाः सिद्धचारणाः ।
यक्षा नागाश्च वेतालाः लोकपाला महर्षयः ॥ ७० ॥
मातरो गणनाथाश्च विष्णुर्ब्रह्मा बृहस्पतिः ।
यस्य सिंहासने युक्ता भूचराः खेचरास्तथा ॥ ७१ ॥
आवाहयामि तं देवं त्र्यम्बकमीशानमव्ययम् ।
आगच्छ भगवन्नत्र ब्रह्मनिर्मितयन्त्रके ॥ ७२ ॥
ध्रुवाय भव सर्वेषां शुभाय च सुखाय च ।
ततो देवप्रतिष्ठोक्तविधिना स्थापयन् शिवम् ॥ ७३ ॥
प्राग्वद्ध्यात्वा मानसोपचारैः सम्पूजयेत् प्रिये ! ।
विशेषमर्घ्यं संस्थाप्य समर्च्य गणदेवताः ।
पुनर्ध्यात्वा महेशानं पुष्पं लिङ्गोपरि न्यसेत् ॥ ७४ ॥
पाशाङ्कुशपुटा शक्तिर्यादिमान्ताः सबिन्दुकाः ।
ह्रौं हंस इति मन्त्रेण तत्र प्राणान् निवेशयेत् ।

अनेन यावच्चन्द्रश्च सूर्यश्चेत्यादिमन्त्रेण सदाशिवं सुदृढं कारयित्वा मूलेनैव मन्त्रेण तत्र सदाशिवे वेदीं प्रवेशयेत् ॥ ६७ ॥ ६८ ॥

सुदृढ़ीकृत्य वेदीमिति शेषः ॥ ६९ ॥

इमं कं पठेदित्याकाङ्क्षायामाह व्याघ्रभूता इत्यादिना ॥७०—७४

पाशेत्यादिना । पाशाङ्कुशपुटा पाशाङ्कुशाभ्यामांक्रों बीजाभ्यां पुट आद्यन्तयोः संयोगो यस्यास्तथाभूता शक्ति ह्रीं बीजं पूर्वमुच्यते, ततः सबिन्दुकाः सानुस्वारा यादिसान्तवर्णा यकाराः ततो ह्रौं हंस इत्युच्यते बीजमया आं ह्रीं क्रों यं रं लं वं शं षं सं ह्रौं हंस इति मन्त्रो जातः, अनेन मन्त्रेण प्राणप्रतिष्ठाविधानेन तत्र लिङ्गे प्राणान्निवेशयेत् ॥ ७५ ॥ ७६ ॥

चन्दनागुरुकस्तूरीरैर्विलिप्य गिरिजापतिम् ॥ ७५ ॥
यजेत् प्राकृतविधिना षोडशैरुपचारकैः ।
आवरणार्चनं कृत्वा पूर्वविधानवत् ॥७६ ॥
समाप्य सर्वं विधिवत् देव्याः देवीं महेश्वरीम् ।
अभ्यर्च्य तत्र देवस्य मूर्त्तीरष्टौ प्रपूजयेत् ॥ ७७ ॥
शर्वः क्षितिः समुद्दिष्टा भवो जलमुदाहृता ।
रुद्रोऽग्निरुग्रो वायुः स्यात् भीम आकाशशब्दितः ॥७८॥
पशोःपतिर्यजमानो महादेवः सुधाकरः ।
ईशानः सूर्य इत्येते मूर्त्तयोऽष्टौ प्रकीर्त्तिताः ॥ ७९ ॥
प्रणवादिनमोऽन्तेन प्रत्येकाह्वानपूर्वकम् ।
पूर्व्वादीशानपर्य्यन्तमष्ट मूर्त्तीः क्रमाद्यजेत् ॥ ८० ॥
इन्द्रादिदिक्पतीनिष्ट्वा ब्राह्म्याद्याश्चाष्ट मातृकाः ।
धूपं वितानं गेहादि दद्यादीशाय साधकः ॥ ८१ ॥
ततः कृताञ्जलिर्भक्त्या प्रार्थयेत् पार्वतीपतिम् ॥ ८२॥
गृहेऽस्मिन् करुणासिन्धो ! स्थापितोऽसि मया प्रभो! ।
प्रसीद भगवन् शम्भो ! सर्वकारणकारण ! ॥ ८३ ॥

तत्र वेद्यामेव ॥ ७७ ॥

महादेवस्य प्रपूज्या अष्टौ मूर्त्तीराह शर्वः क्षितिरित्यादिभ्यां द्वाभ्याम् ॥ ७८ ॥ ७९ ॥

ननु केन विधिना महादेवस्याष्टौ मूर्त्तीः प्रपूजयेदित्याकाङ्क्षायामाह प्रणवादीत्यादि । प्रणवादिनमोऽन्तेन नाममन्त्रेण पूर्वात् पूर्व्वमारभ्य यथा शर्व क्षितिमूर्त्ते इहागच्छेह तिष्ठेह सन्निधेहि मम पूजां गृहाणेत्यावाह्य ओं शर्वाय क्षितिमूर्त्तये नम इति मन्त्रेण वेद्यां पूर्व्वदेशे गन्धपुष्पादिभिः शर्वं क्षितिमूर्त्तिं यजेत् । एवमेवाग्नेय्यादिषु क्रमतोऽन्या अपि सप्त मूर्त्तीर्यजेत् । इष्ट्वा पूजयित्वा ॥ ८० ॥ ८१ ॥

यावत् ससागरा पृथ्वी यावत् शशिदिवाकरौ ।
तावदस्मिन् गृहे तिष्ठ नमस्ते परमेश्वर ! ॥ ८४ ॥
गृहेऽस्मिन् यस्य कस्यापि जीवस्य मरणं भवेत् ।
न तत्पापैः प्रलिप्येऽहं प्रसादात्तव धूर्जटे ! ॥ ८५ ॥
ततः प्रदक्षिणीकृत्य नमस्कृत्य गृहं व्रजेत् ।
प्रभाते पुनरागत्य स्नापयेच्चन्द्रशेखरम् ॥ ८६ ॥
शुद्धैः पञ्चामृतैः स्नानं प्रथमं प्रतिपादयेत् ।
ततः सुगन्धितोयानां कलसैः शतसंख्यकैः ॥ ८७ ॥
संपूज्य तं यथाशक्त्या प्रार्थयेत् भक्तिभावतः ॥ ८८ ॥
विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
सम्पूर्णमस्तु तत् सर्वं त्वत्प्रसादादुमापते ! ॥ ८९ ॥
यावच्चन्द्रश्च सूर्यश्च यावत् पृथ्वी च सागराः ।
तावन्मे कीर्त्तिरतुला लोके तिष्ठतु सर्वदा ॥ ९० ॥
नमस्त्र्यक्षाय रुद्राय पिनाकवरधारिणे ।
विष्णुब्रह्मेन्द्रसूर्य्याद्यैरर्चिताय नमो नमः ॥ ९१ ॥
ततस्तु दक्षिणां दत्त्वा भोजयेत् कौलिकान् द्विजान् ।
भक्ष्यैः पेयैश्च वासोभिर्दरिद्रान् परितोषयेत् ॥ ९२ ॥
प्रत्यहं पूजयेद्देवं यथाविभवमात्मनः ।

ननु पार्वतीपतिं किं प्रार्थयेदित्याकाङ्क्षायामाह गृहेऽस्मि-न्नित्यादि ॥ ८४—८६ ॥

ननु केन द्रव्येण शिवं स्नापयेदित्यपेक्षायामाह शुद्धैरित्यादि ॥ ८७ ॥

तम् शिवम् ॥ ८८ ॥

स्थावरं शिवलिङ्गन्तु न कदापि विचालयेत् ॥ ९३ ॥
एवन्तस्य शिवलिङ्गस्य प्रतिष्ठा कथितेति ते ।
संक्षेपात् परमेशानि ! सर्वागमसमुद्धृता ॥ ९४ ॥

श्रीदेव्युवाच ।

यद्येकाहादिदेवतानां पूजाबाधो भवेद्विभो ! ।
विधेयं तत्र किं भक्तैस्तन्मे कथय तत्त्वतः ॥ ९५ ॥
अपूजनीया कैर्दोषैर्भवेयुर्देवमूर्त्तयः ।
त्याज्या वा केन दोषेण तदुपायश्च भण्यताम् ॥ ९६ ॥

श्रीसदाशिव उवाच ।

एकाहमर्चनाबाधे द्विगुणं देवमर्चयेत् ।
दिनद्वये तद्द्विगुणं तद्द्विगुणं दिनत्रये ॥ ९७ ॥
ततः षण्मासपर्य्यन्तं यदि पूजा न सम्भवेत् ।
तदाष्टकलसैर्देवं स्नापयित्वा यजेत् सुधीः ॥ ९८ ॥
षण्मासात् परतो देवं प्राक्संस्कारविधानतः ।
पुनः सुसंस्कृतं कृत्वा पूजयेत् साधकाग्रणीः ॥ ९९ ॥
खण्डितं स्फुटितं व्यङ्गं संस्पृष्टं कुष्ठरोगिणा ।
पतितं दुष्टभूम्यादौ न देवं पूजयेत् बुधः ॥ १०० ॥
हीनाङ्गं स्फुटितं भग्नं देवं तोये विसर्जयेत् ।
स्पर्शादिदोषदुष्टन्तु संस्कृत्य पुनरर्चयेत् ॥ १०१ ॥

ननु शिवं किं प्रार्थवेदित्याकाङ्क्षायामाह विधिहीनमित्यादि ॥ ८९–९४ ॥

श्रीदेव्युवाच यद्येत्यादि । तत्र पूजाबाधे सति ॥ ९५ ॥ ९६ ॥

एवं प्रार्थितः सन् श्रीसदाशिव उवाच एकाहमर्चनाबाधे इत्यादि ॥ ९७ ॥ ९८ ॥

महापीठेऽनादिलिङ्गे सर्वदोषविवर्जिते ।
सर्वदा पूजयेत्तत्र स्वं स्वमिष्टं सुखाप्तये ॥ १०२ ॥
यद्यत्सृष्टं महामाये ! नृणां कर्मानुजीविनाम् ।
निःश्रेयसाय तत् सर्वं सविशेषं प्रकीर्त्तितम् ॥ १०३ ॥
विना कर्म्म न तिष्ठन्ति क्षणार्द्धमपि देहिनः ।
अनिच्छन्तोऽपि विवशाः कृष्यन्ते कर्म्मवायुना ॥ १०४ ॥
कर्म्मणा सुखमश्नन्ति दुःखमश्नन्ति कर्म्मणा ।
जायन्ते च प्रलीयन्ते वर्त्तन्ते कर्म्मणो वशात् ॥ १०५ ॥
अतो बहुविधं कर्म्म कथितं साधनान्वितम् ।
प्रवृत्तयेऽल्पबोधानां दुश्चेष्टितनिवृत्तये ॥ १०६ ॥
यतो हि कर्म्म द्विविधं शुभञ्चाशुभमेव च ।
अशुभात् कर्म्मणो यान्ति प्राणिनस्तीव्रयातनाम् ॥ १०७ ॥
कर्म्मणोऽपि शुभाद्देवि ! फलेच्छासक्तचेतसः ।
प्रयान्त्यायान्त्यमुत्रेह कर्म्मशृङ्खलयन्त्रिताः ॥ १०८ ॥
यावन्न क्षीयते कर्म्म शुभं वाशुभमेव वा ।
तावन्न जायते मोक्षो नृणां कल्पशतैरपि ॥ १०९ ॥
यथा लोहमयैः पाशैः पाशैः स्वर्णमयैरपि ।
तथा बद्धो भवेज्जीवः कर्म्मभिश्चाशुभैः शुभैः ॥ ११० ॥

व्यक्तम् [illegible]गताकूतम् ॥ १००—१०७ ॥

एवं नानाविधानि सुखप्रापकाणि मधुरसाधनसंयुतानि कर्माणि व्याहृत्येदानीं ब्रह्मज्ञानेनैव लोका मुक्तिमधिगच्छेयुर्न तु कर्मभिरिति व्याकर्तुमुपक्रमते कर्मणोऽपि शुभादित्यादि । हे देवि ! शुभादपि कर्मणो हेतोः फलेच्छासक्तचेतसो जनाः कर्मशृङ्खलयन्त्रिताः कर्मरूपेण निगडेन बद्धाः सन्तो लोकाल्लोकान्तरं परलोके प्रयान्ति तथाच

कुर्वाणः सततं कर्म्म कृत्वा कष्टशतान्यपि ।
तावन्न लभते मोक्षं यावत् ज्ञानं न विन्दति ॥ १११ ॥
ज्ञानं तत्त्वविचारेण निष्कामेणापि कर्म्मणा ।
जायते क्षीणतमसां विदुषां निर्म्मलात्मनाम् ॥ ११२ ॥
ब्रह्मादितृणपर्य्यन्तं मायया कल्पितं जगत् ।
सत्यमेकं परं ब्रह्म विदित्वैवं सुखी भवेत् ॥ ११३ ॥
विहाय नामरूपाणि नित्ये ब्रह्मणि निश्चले ।
परिनिश्चिततत्त्वो यः स मुक्तः कर्म्मबन्धनात् ॥ ११४ ॥
न मुक्तिर्जपनाद्धोमादुपवासशतैरपि ।
ब्रह्मैवाहमिति ज्ञात्वा मुक्तो भवति देहभृत् ॥ ११५ ॥
आत्मा साक्षी विभुः पूर्णः सत्योऽद्वैतः परात्परः ।
देहस्थोऽपि न देहस्थो ज्ञात्वैवं मुक्तिभाग् भवेत् ॥ ११६ ॥
बालक्रीडनवत् सर्वं रूपनामादिकल्पनम् ।
विहाय ब्रह्मनिष्ठो यः स मुक्तो नात्र संशयः ॥ ११७ ॥
मनसा कल्पिता मूर्त्तिर्नृणां चेन्मोक्षसाधनी ।

लोकात् पुनरिहायान्ति मुक्तिभाजिनस्तु न भवन्तीत्यर्थः ॥ १०८—११० ॥

न विन्दति न लभते ॥ १११ ॥

ननु मोक्षैकसाधनं ज्ञानं कथमुत्पद्यते तत्राह ज्ञानमित्यादिना । तत्त्वविचारेण ब्रह्मणो विचारणेन क्षीणतमसाम् क्षीणाज्ञानरूपान्धकाराणाम् निर्म्मलात्मनाम् विमलान्तःकरणानाम् ॥ ११२ ॥ ११३ ॥

विहायेत्यादि । नित्ये अविनाशिनि निश्चले पूर्व्वरूपापरित्यागिनि, परिनिश्चितं सम्यङ्निर्णीतं तत्त्वं याथार्थ्यं येन स परिनिश्चिततत्त्वः ॥ ११४ ॥ ११५ ॥

स्वप्नलब्धेन राज्येन राजानो मानवास्तथा ॥ ११८ ॥
मृच्छिलाधातुदार्वादिमूर्त्तावीश्वरबुद्धयः ।
क्लिश्यन्तस्तपसा ज्ञानं विना मोक्षं न यान्ति ते ॥ ११९
आहारसंयमक्लिष्टा यथेष्टाहारतुन्दिलाः ।
ब्रह्मज्ञानविहीनाश्चेन्निष्कृतिं ते व्रजन्ति किम् ॥ १२० ॥
वायुपर्णकणातोयव्रतिनो मोक्षभागिनः ।
सन्ति चेत् पन्नगा मुक्ताः पशुपक्षिजलेचराः ॥ १२१ ॥
उत्तमो ब्रह्मसद्भावो ध्यानभावस्तु मध्यमः ।
स्तुतिर्जपोऽधमो भावो बहिः पूजाऽधमाधमा ॥ १२२ ॥
योगो जीवात्मनोरैक्यं पूजनं सेवकेशयोः ।
सर्वं ब्रह्मेति विदुषो न योगो न च पूजनम् ॥ १२३ ॥
ब्रह्मज्ञानं परं ज्ञानं यस्य चित्ते विराजते ।
किन्तस्य जपयज्ञाद्यैस्तपोभिर्नियमव्रतैः ॥ १२४ ॥

आत्मेत्यादि । साक्षी शुभाशुभद्रष्टा विभुः व्यापकः पूर्णः अख-ण्डस्वरूपः अद्वैतः सजातीयविजातीयस्वगतभेदशून्यः ॥ ११६-११८ ॥

तपसा कृच्छ्रचान्द्रायणादिना ॥ ११९ ॥

निष्कृतिम् निस्तारम् व्रजन्ति प्राप्नुवन्ति ॥ १२० । १२१ ॥

उत्तम इत्यादि । ब्रह्मैव सत् सच्चित् सर्वमहदित्युत्तमो भावः । उत्तमं भजनं भवतीत्येवमन्वयः ध्यानभावः ध्यानरूपं भजनम् ॥ १२२ ॥

योग इत्यादि । सर्वं ब्रह्मैव भवतीति विदुषो जानतो जनस्य जीवात्मनोरैक्यमेव योगो भवति सेवकेशयोः सेवकेश्वरयोरैक्य-मेव पूजनं भवति तद्भिन्नो योगो नास्ति तद्भिन्नं पूजनमपि नास्ति तस्य ॥ १२३ ॥

सत्यं विज्ञानमानन्दमेकं ब्रह्मेति पश्यतः।
स्वभावात् ब्रह्मभूतस्य किं पूजा ध्यानधारणा ॥ १२५ ॥
न पापं नैव सुकृतं न स्वर्गो न पुनर्भवः।
नापि ध्येयो न वा ध्याता सर्वं ब्रह्मेति जानतः ॥ १२६ ॥
अयमात्मा सदा मुक्तो निर्लिप्तः सर्ववस्तुषु।
किं तस्य बन्धनं कस्मात् मुक्तिमिच्छन्ति दुर्धियः ॥ १२७ ॥
स्वमायारचितं विश्वमवितर्क्यं सुरैरपि।
स्वयं विराजते तत्र अप्रविष्टः प्रविष्टवत् ॥ १२८ ॥
बहिरन्तर्यथाकाशं सर्वेषामेव वस्तुनाम्।
तथैव भाति सद्रूपो ह्यात्मा साक्षी स्वरूपतः ॥ १२९ ॥
न बाल्यमस्ति वृद्धत्वं नात्मनो यौवनं जनुः।
सदैकरूपश्चिन्मात्रो विकारपरिवर्जितः ॥ १३० ॥
जन्मयौवनवार्धक्यं देहस्यैव न चात्मनः।
पश्यन्तोऽपि न पश्यन्ति मायाप्रावृतबुद्धयः ॥ १३१ ॥

सत्यमित्यादि। विज्ञानं विज्ञानस्वरूपम् एकम् अद्वैतम् धारणा विसदृशसिनिरोधः ॥ १२५ ॥

न पुनर्भवः न पुनरुत्पत्तिः ॥ १२६ ॥

निर्लिप्तः अनासक्तः ॥ १२७ ॥

नन्वात्मनो देहरूपं बन्धनमस्त्येव कथमुच्यते अयमात्मा सदा मुक्त इत्यादि तत्राह स्वमायेत्यादि। अवितर्क्यम् अनूहनीयम् ॥ १२८ ॥ १२९ ॥

अतः अस्य आत्मनो बालत्वादेरभावे हेतुमाह सदैकरूप इत्यादिना ॥ १३० ॥

तर्हि कस्य जन्मादिकं भवति तत्राह जन्मेत्यादि ॥ १३१ ॥

यथा शरावतोयस्थं रविं पश्यत्यनेकधा ।
तथैव मायया देहे बहुधात्मानमीक्ष्यते ॥ १३२ ॥
यथा सलिलचाञ्चल्यं मन्यन्ते तद्गते विधौ ।
तथैव बुद्धेश्चाञ्चल्यं पश्यन्त्यात्मन्यकोविदाः ॥ १३३ ॥
घटस्थं यादृशं व्योम घटे भग्नेऽपि तादृशम् ।
नष्टे देहे तथैवात्मा समरूपो विराजते ॥ १३४ ॥
आत्मज्ञानमिदं देवि ! परं मोक्षैकसाधनम् ।
जानन्निहैव मुक्तः स्यात् सत्यं सत्यं न संशयः ॥१३५॥
न कर्मणा विमुक्तः स्यान्न सन्तत्या धनेन वा ।
आत्मनात्मानमाज्ञाय मुक्तो भवति मानवः ॥ १३६ ॥
प्रियो ह्यात्मैव सर्वेषां नात्मनोऽस्त्यपरं प्रियम् ।
लोकेऽस्मिन्नात्मसम्बन्धात् भवन्त्यन्ये प्रियाः शिवे !॥१३७
ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं भाति मायया ।
विचार्यमाणे त्रितये आत्मैवैकोऽवशिष्यते ॥ १३८ ॥
ज्ञानमात्मैव चिद्रूपो ज्ञेयमात्मैव चिन्मयः ।
विज्ञाता स्वयमेवात्मा यो जानाति स आत्मवित् ॥१३९
एतत्ते कथितं ज्ञानं साक्षान्निर्वाणकारणम् ।
चतुर्विधावधूतानामेतदेव परं धनम् ॥ १४० ॥

श्रीदेव्युवाच ।

द्विविधावाश्रमौ प्रोक्तौ गार्हस्थो भैक्षुकस्तथा ।
किमिदं श्रूयते चित्रमवधूताश्चतुर्विधाः ॥ १४१ ॥

ननु तत्तद्देहस्थित आत्मा नानारूपः प्रतीयते कथमुच्यते एकरूप इति तत्राह यथेत्यादि ॥ १३२ ॥

तद्गते विधौ सलिलगते चन्द्रे अकोविदाः अविद्वांसः ॥१३३-१४० ॥

श्रुत्वा वेदितुमिच्छामि तत्त्वतः कथय प्रभो ! ।
चतुर्विधावधूतानां लक्षणं सविशेषतः ॥ १४२ ॥

श्रीसदाशिव उवाच ।

ब्रह्ममन्त्रोपासका ये ब्राह्मणक्षत्रियादयः ।
गृहाश्रमे वसन्तोऽपि ज्ञेयास्ते यतयः प्रिये ! ॥ १४३ ॥
पूर्णाभिषेकविधिना संस्कृता ये च मानवाः ।
शैवावधूतास्ते ज्ञेयाः पूजनीयाः कुलार्चिते ! ॥ १४४ ॥
ब्राह्मावधूताः शैवाश्च स्वाश्रमाचारवर्त्तिनः ।
विदध्युः सर्वकर्माणि मदुदीरितवर्त्मना ॥ १४५ ॥
विना ब्रह्मार्पितं चैते तथा चक्रार्पितं विना ।
निषिद्धमन्नं तोयञ्च न गृह्णीयुः कदाचन ॥ १४६ ॥
ब्राह्मावधूतकौलानां कौलानामभिषेकिणाम् ।
प्रागेव कथितो धर्म्म आचारश्च वरानने ! ॥ १४७ ॥
स्नानं सन्ध्याशनं पानं दानं च दाररक्षणम् ।
सर्वमागममार्गेण शैवब्राह्मावधूतयोः ॥ १४८ ॥
उक्तावधूतो द्विविधः पूर्णापूर्णविभेदतः ।
पूर्णः परमहंसाख्यः परिव्राड़परः प्रिये ! ॥ १४९ ॥
कृतावधूतसंस्कारो यदि स्यात् ज्ञानदुर्बलः ।

चतुर्विधानामवधूतानां लक्षणं विज्ञातुमिच्छन्ती श्रीदुव्युवाच द्विविधावित्यादि ॥ १४१ । १४२ ॥

श्रीदेव्यैवं प्रार्थितः सन् श्रीसदाशिव उवाच ब्रह्ममन्त्रोपासका ये इत्यादि ॥ १४३ । १४४ ॥

विदध्युः कुर्य्युः ॥ १४५-१४८ ॥

तदा लोकालये तिष्ठन्नात्मानं स तु शोधयेत् ॥ १५० ॥
रक्षन् स्वजातिचिह्नञ्च कुर्वन् कर्म्माणि कौलवत् ।
सदा ब्रह्मपरो भूत्वा साधयेत् ज्ञानमुत्तमम् ॥ १५१ ॥
ओं तत्सन्मन्त्रमुच्चार्य्य सोऽहमस्मीति चिन्तयन् ।
कुर्य्यादाश्रमोचितं कर्म्म सदा वैराग्यमाश्रितः ॥ १५२ ॥
कुर्वन् कर्म्माण्यनासक्तो नलिनीदलनीरवत् ।
यतेतात्मानमुद्धर्त्तुं तत्त्वज्ञानविवेकतः ॥ १५३ ॥
ओं तत्सदिति मन्त्रेण यो यत् कर्म्म समाचरेत् ।
गृहस्थो वाप्युदासीनस्तस्याभीष्टाय तद्भवेत् ॥ १५४ ॥
जपो होमः प्रतिष्ठा च संस्काराद्यखिलाः क्रियाः ।
ओं तत्सन्मन्त्रनिष्पन्नाः सम्पूर्णाः स्युर्न संशयः ॥ १५५ ॥
किमन्यैर्बहुभिर्मन्त्रैः किमन्यैर्भूरिसाधनैः ।
ब्राह्मेणानेन मन्त्रेण सर्व्वकर्म्माणि साधयेत् ॥ १५६ ॥
सुखसाध्यमवाहुल्यं सम्पूर्णफलदायकम् ।
नास्त्येतस्मान्महामन्त्रादुपायान्तरमम्बिके ! ॥ १५७ ॥
पुरः प्रदेशे देहे वा लिखित्वा धारयेदिमम् ।
गेहस्तस्य महातीर्थं देहः पुण्यमयो भवेत् ॥ १५८ ॥
निगमागमतन्त्राणां सारात्सारतरो मनुः ।
ओं तत्सदिति देवेशि ! तवाग्रे सत्यमीरितम् ॥ १५९ ॥

अपरः अपूर्व्वः ॥ १४६—१५३ ॥

अथ ओं तत्सदिति मन्त्रस्य माहात्म्यमाह ओं तत्सदिति मन्त्रेणेत्यादिभिः । समाचरेत् कुर्य्यात् ॥ १५४-१५७ ॥

इमम् ओं तत्सदिति मन्त्रम् ॥ १५८-१६० ॥

ब्रह्मविष्णुमहेशानां शिखा तालुशिरःशिखाः ।
प्रादुर्भूतोऽप्ययं तस्मात् सर्वमन्त्रोत्तमोत्तमः ॥ १६० ॥
चतुर्विधानामन्नानामन्येषामपि वस्तुनाम् ।
मन्त्राद्यैः शोधनेनालं स्वार्थे देवेन शोधितम् ॥१६१॥
पश्यन् सर्वत्र तद्रूपं जपंस्तत्सम्महामनुम् ।
स्वेच्छाचारः शुद्धचित्तः स एव भुवि कौलराट् ॥१६२॥
जपादस्य भवेत् सिद्धो मुक्तः स्यादर्थचिन्तनात् ।
साक्षात् ब्रह्मसमो देही सार्थमेनं जपन् मनुम् ॥१६३॥
विपक्षोऽयं महामन्त्रः सर्वकारणकारणम् ।
साधनादस्य मन्त्रस्य भवेन्मृत्युञ्जयः स्वयम् ॥ १६४ ॥
युग्मं युग्मपदं वापि प्रत्येकपदमेव वा ।
जप्त्वैतस्य महेशानि ! साधकः सिद्धिभाग् भवेत् ॥ १६५ ॥
शैवावधूतसंस्कारविधूताखिलकर्म्मणः ।
नापि दैवे न वा पित्र्ये नार्षे कृत्येऽधिकारिता ॥१६६॥
चतुर्णामवधूतानां तुरीयो हंस उच्यते ।
त्रयोऽन्ये योगभोगाढ्या मुक्ताः सर्वे शिवोपमाः ॥१६७॥
हंसो न कुर्य्यात् स्त्रीसङ्गं न वा धातुपरिग्रहम् ।
प्रारब्धमश्नन् विहरेन्निषेधविधिवर्जितः ॥ १६८ ॥

चतुर्विधानामित्यादि । चतुर्व्विधानाम् भक्ष्यचर्व्यलेह्यचोष्याणाम् ॥ १६१-१६७ ॥
अश्नन् भुञ्जानः ॥ १६८ ॥

त्यजेत् स्वजातिचिह्नानि कर्माणि गृहमेधिनाम् ।
तुरीयो विचरेत् क्षोणीं निःसङ्गो निरुद्यमः ॥ १६९ ॥
सदात्मभावसन्तुष्टः शोकमोहविवर्जितः ।
निर्निकेतस्तितिक्षुः स्यान्निःशङ्को निरुपद्रवः ॥ १७० ॥
नार्पणं भक्ष्यपेयानां न तस्य ध्यानधारणा ।
मुक्तोऽविरक्तो निर्द्वन्द्वो हंसाचारपरो यतिः ॥ १७१ ॥
इति ते कथितं देवि ! चतुर्णां कुलयोगिनाम् ।
लक्षणं सविशेषेण साधूनां मत्स्वरूपिणाम् ॥ १७२ ॥
एतेषां दर्शनस्पर्शादालापात् परितोषणात् ।
सर्वतीर्थफलावाप्तिर्जायते मनुजन्मनाम् ॥ १७३ ॥
पृथिव्यां यानि तीर्थानि पुण्यक्षेत्राणि यानि च ।
कुलसन्न्यासिनां देहे सन्ति तानि सदा प्रिये ! ॥ १७४ ॥
ते धन्यास्ते कृतार्थाश्च ते पुण्यास्ते कृताध्वराः ।
यैरर्चिताः कुलद्रव्यैर्मानवैः कुलसाधवः ॥ १७५ ॥
अशुचिर्याति शुचितामस्पृश्यः स्पृश्यतामियात् ।
अभक्ष्यमपि भक्ष्यं स्यात् येषां संस्पर्शमात्रतः ॥ १७६ ॥

गृहमेधिनाम्, गृहस्थानाम् । निरुद्यमः, आत्मशरीरनिर्वाहार्थव्यापारशून्यः ॥ १६९ ॥

सदात्मेत्यादि । भावः, चिन्तनम् । निर्निकेतः, नियतवसतिस्थानशून्यः । तितिक्षुः, सहनशीलः ॥ १७०—१७२ ॥

अवधूतानां माहात्म्यमाह एतेषामित्यादिभिः ॥ १७३।१७४ ॥

कुलद्रव्यैः मद्यादिभिः ॥ १७५ । १७६ ॥

किराताः पापिनः क्रूराः पुलिन्दा यवनाः खसाः ।
शुद्ध्यन्ति येषां संस्पर्शात्तान् विना कोऽन्यमर्चयेत् ॥ १७७ ॥
कुलतत्त्वैः कुलद्रव्यैः कौलिकान् कुलयोगिनः ।
येऽर्चयन्ति सकृत् भक्त्या तेऽपि पूज्या महीतले ॥ १७८ ॥
कौलधर्मात् परो धर्मो नास्त्येव कमलानने ! ।
अन्त्यजोऽपि यमाश्रित्य पूतः कौलपदं व्रजेत् ॥ १७९ ॥
करिपादे विलीयन्ते सर्वप्राणिपदा यथा ।
कुलधर्मे निमज्जन्ति सर्वे धर्मास्तथा प्रिये ! ॥ १८० ॥
अहो पुण्यतमाः कौलास्तीर्थरूपाः स्वयं प्रिये ! ।
ये पुनन्त्यात्मसम्बन्धात् म्लेच्छश्वपचपामरान् ॥ १८१ ॥
गङ्गायां पतिताम्भांसि यान्ति गाङ्गेयतां यथा ।
कुलाचारे विशन्तोऽपि सर्वे गच्छन्ति कौलताम् ॥ १८२ ॥
यथार्णवगतं वारि न पृथग्भावमाप्नुयात् ।
तथा कुलाम्बुधौ मग्ना न भवेयुर्जनाः पृथक् ॥ १८३ ॥
विप्राद्यन्त्यजपर्य्यन्ता द्विपदा येऽत्र भूतले ।
ते सर्वेऽस्मिन् कुलाचारे भवेयुरधिकारिणः ॥ १८४ ॥
आहूताः कुलधर्मेऽस्मिन् ये भवन्ति पराङ्मुखाः ।
सर्वधर्मपरिभ्रष्टास्ते गच्छन्त्यधमां गतिम् ॥ १८५ ॥
प्रार्थयन्ति कुलाचारं ये केचिदपि मानवाः ।
तान् वञ्चयन् कुलीनोऽपि रौरवं नरकं व्रजेत् ॥ १८६ ॥

पुलिन्दाः चाण्डालविशेषाः ॥ १७७ ॥
कुलतत्त्वैः मांसादिभिः । कुलद्रव्यैः मद्यैः ॥ १७८—१८६ ॥

।चण्डालं यवनं नीचं मत्वा स्त्रियमवज्ञया ।
ौलं न कुर्य्यात् यः कौलः सोऽधमो यात्यधोगतिम्॥१८७
ताभिषेकात् यत् पुण्यं पुरश्चर्य्याशतैरपि ।
स्मात् कोटिगुणं पुण्यमेकस्मिन् कौलिके कृते ॥१८८॥
ये वर्णाः चितौ सन्ति यस्यधर्मसमुपाश्रिताः ।
ौला भवन्तस्ते पाशैर्मुक्ता यान्ति परं पदम् ॥१८९॥
ैवधर्माश्रिताः कौलाः तीर्थरूपाः शिवात्मकाः ।
ुद्धेन श्रद्धया प्रेम्णा पूज्या मान्याः परस्परम्॥१९०॥
ाहुनात्र किमुक्तेन तवाग्रे सत्यमुच्यते ।
रवाब्धितरणौ सेतुः कुलधर्मो हि नापरः ॥ १९१ ॥
ऋयन्ते संशयाः सर्वे क्षीयन्ते पापसञ्चयाः ।
दह्यन्ते कर्मजालानि कुलधर्मनिषेवणात् ॥ १९२ ॥
सत्यव्रता ब्रह्मनिष्ठाः कृपयाढ्य मानवान् ।
पावयन्ति कुलाचारैस्ते श्रेष्ठाः कौलिकोत्तमाः॥१९३॥
इति ते कथितं देवि ! सर्वकर्मविनिर्णयम् ।
महानिर्वाणतन्त्रस्य पूर्वार्द्धं लोकपावनम् ॥१९४॥
य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवान् ।
सर्वपापविनिर्मुक्तः सोऽन्ते निर्वाणमाप्नुयात्॥१९५॥
सर्वागमानां तन्त्राणां सारात्सारं परात्परम् ।
तन्त्रराजमिदं ज्ञात्वा जायते सर्वशास्त्रवित् ॥ १९६॥
किन्तस्य तीर्थभ्रमणैः किं यज्ञैर्जपसाधनैः ।
जानन्नेतन्महातन्त्रं कर्मपाशैर्विमुच्यते ॥ १९७ ॥

अवज्ञया तिरस्कृत्य ॥ १८७-१८१ ॥

स विप्रः सर्वशास्त्रेषु सर्वधर्म्मविदां वरः ।
स ज्ञानी ब्रह्मवित् साधुर्यस्त्वद्वेत्ति कालिके ! ॥१९८॥
अलं वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः ।
किमन्यैर्बहुभिस्तन्त्रैर्ज्ञात्वेदं सर्ववित्भवेत्॥ १९९ ॥
आसीद् गुह्यतमं यच्च साधनं ज्ञानमुत्तमम् ।
तव प्रश्नेन तन्त्रेऽस्मिंस्तत् सर्वं सुप्रकाशितम् ॥ २०० ॥
यथा त्वं ब्रह्मणः शक्तिर्मम प्राणाधिका परा ।
महानिर्वाणतन्त्रं मे तथा जानीहि सुव्रते ! ॥ २०१ ॥
यथा नगेषु हिमवान् तारकासु यथा शशी ।
भास्वांस्तेजःसु तन्त्रेषु तन्त्रराजमिदं तथा ॥ २०२ ॥
सर्वधर्म्ममयं तन्त्रं ब्रह्मज्ञानैकसाधनम् ।
पठित्वा पाठयित्वापि ब्रह्मज्ञानी भवेन्नरः ॥ २०३ ॥
विद्यते यस्य भवने सर्वतन्त्रोत्तमोत्तमम् ।
न तस्य वंशे देवेशि ! पशुर्भवति कर्हिचित् ॥ २०४ ॥
अज्ञानतिमिरान्धोऽपि मूर्खः कर्म्मजडोऽपि वा ।
शृण्वन्नेतन्महातन्त्रं कर्म्मबन्धाद्विमुच्यते ॥ २०५ ॥
एतत्तन्त्रस्य पठनं श्रवणं पूजनं तथा ।
वन्दनं परमेशानि ! नृणां कैवल्यदायकम् ॥ २०६ ॥
उक्तं बहुविधं तन्त्रमेकैकाख्यानसंयुतम् ।
सर्वधर्मान्वितं तन्त्रं नातःपरतरं क्वचित् ॥ २०७ ॥
पातालचक्रं भूचक्रं ज्योतिश्चक्रसमन्वितम् ।

अथ महानिर्वाणतन्त्रस्य माहात्म्यमभिधत्ते य इदं त्वद्गुर्वाचि-
तमित्यादिभिः ॥ १९५ २०१ ॥

पराईमस्य यो वेत्ति स सर्वज्ञो न संशयः ॥ २०८ ॥
पराईसहितं ग्रन्थमेनं जानन्नरो भवेत् ।
त्रिकालवार्त्तां त्रैलोक्यवृत्तान्तं कथितुं क्षमः ॥ २०९ ॥
सन्ति तन्त्राणि बहुधा शास्त्राणि विविधान्यपि ।
महानिर्वाणतन्त्रस्य कलां नार्हन्ति षोडशीम् ॥ २१० ॥
महानिर्वाणतन्त्रस्य माहात्म्यं किं ब्रवीमि ते ।
विदित्वैतन्महातन्त्रं ब्रह्मनिर्वाणमाप्नुयात् ॥ २११ ॥

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णय-
सारे श्रीमदाद्यासदाशिवसंवादे पूर्वकाण्डे शिवलिङ्ग-
स्थापनचतुर्विधावधूतविवरणकथनं नाम
चतुर्दशोल्लासः ।

समाप्तोऽयं ग्रन्थः ।

तेजःसु तेजस्विषु ॥ २०२-२२१ ॥

इति श्रीमहानिर्वाणतन्त्रटीकायां चतुर्दशोल्लासः ।



